

# ॥ ब्रह्मसूत्रविमर्शः ॥

[सानुबन्धः]

अहोबिलमठास्थानविदुषा अनेकबिरुदावलीभूषितेन

श्रीचक्रवर्त्याचार्येण

विरचितः ।



# SRI BRAHMASUTRAVIMARSHA and ANUBANDHA

By

**P. M. CHAKRAVARTHYACHARYA**

Nyaya Vedanthavidwan, Siromani, Sarasarakjna, Vidwadupanyasakarathna, Sri Ramayana Amrutavarshi, Sri Bhagavathasudhahswadee, Tiruppavai Kesari, Brahma Vidhya Vachaspathi, Sathsampradhaya dhurandhara Sadhvavaduka, Sri Ahobila Mutt Asthana Vidwan.

**1990**

**Price Rs. 40**

# ग्रन्थकर्तुः विज्ञप्तिः

अहोबिलेशं जगतामधीशं प्रणौमि देवं त्रिदशैः निषेव्यम् ।
आचार्यरत्नैः परिपूजितांघ्रि स्रवन्मधु स्वाद्यसुपादपद्मम् ।।

यतिराजो भाष्यसूक्तिः श्रीमन्नारायणो हरिः ।
प्रमाता च प्रमाणं च प्रमेयश्च प्रसीदताम् ।।

सुविदितमेवेदं तत्र भवतां विपश्चिदपश्चिमानां निखिलविबुधानन्दनीयगुणानां, यत् संस्कृत द्राविड आन्ध्र कर्णाट गूर्जरी, आङ्गिलादिभाषाः नानाविधाः लोके सन्ति इति. तत्र भाषाज्ञानादेव लोकव्यवहारादिकं सर्वं संपद्यते इति तत्रापि संस्कृतभाषायाः गीर्वाण्या एव सर्वोत्कृष्टत्वमिति, तत्रापि च एकः शब्दः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुक् भवति, इति संस्कृतसुष्ठुशब्दप्रयोगे फलवत्ता इति च ।

संस्कृतभाषायाः यादृशं माहात्म्यं, न तादृशमन्यासां इत्यपि जानन्त्येव सर्वेपि । इतिहासभूतरामायणभारतादिः अष्टादशपुराणानि भगवद्गीताप्रभृतीनि सर्वाण्यपि संस्कृतमयान्येव । यदनुदिनं पारायणं प्रवर्त्यमानं निखिलनिःश्रेयससाधनं भवति । श्रुतिः स्मृतिश्च हि जनानां नेत्रद्वयमिति कीर्त्यते । यदभावे लोकस्यान्ध्यमेव भवति । एकेन हीनः काणस्स्यात् द्वाभ्यामन्धः प्रकीर्तितः इति हि श्रूयते । इदं सर्वमपि संस्कृतमयमित्यत्र न कोपि विप्रतिपद्येत । जातमात्र एव शिशुरपि 'क्व, क्व' इति रुदन् संस्कृतभाषायाः एव सर्वेषां मातृभाषात्वं प्रकटीकरोति ।

एवं निखिलनिःश्रेयससाधनभूतायाः गैर्वाण्याः प्राधान्येस्थितेऽपि केचित् दुराग्रहवशात् अमृतभाषामिमां मृतभाषां वदन्तः निन्दन्तः संस्कृतभाषाज्ञान् द्विषन्तश्च पशुप्रायाः वर्तन्ते इत्यहो ।

एतेन संस्कृतभाषापरिज्ञानवतां दौर्भाग्यमेवापतितम् । कति कति वृत्तिकर्शिताः संस्कृतभाषाप्रवीणाः कुलंकषपाण्डित्यवन्तः खिद्यन्ति । वस्तुतो लोकस्यैवेदं दौर्भाग्यम्—यत् संस्कृतभाषानादरणम्। पूर्वकाले मनुस्मृत्यादिकमेवावेक्ष्य भूपाः राज्यमकारयन् । संप्रति तु अपूर्वमपूर्वं तदा तदा कश्चन नियमं परिकल्प्य अधिकारपदवीमधिरूढाः स्वमत्यनुगुणं राजधर्मान् प्रवर्तयन्ति । अधर्ममपि धर्मं कुर्वन्ति धर्ममप्यधर्मम् । अहो एतेषां मतिविपर्ययः एवमुदभूत् । किमत्र कारणं ? गैर्वाणीभाषापरिज्ञानाभाव एव ।

संस्कृतभाषामयश्रुतिस्मृत्यादिपरित्यागिनः भगवदाज्ञाच्छेदिन एवेति सर्वशासितुर्भगवतो द्वेषिणः इति अतिघोरे नरके अवश्यं पतेयुः ।

एवं स्थिते सम्प्रति काले [नव डिल्ली भारतसरकार] भारतराष्ट्र महामन्त्रिसमितिः अति विशालमनस्कासुविदितधर्माधर्मा संस्कृत भाषापरिरक्षणार्थं महायत्नेन विविधोपायं विरचितवती । यथा अद्यत्वे भाषायाः शास्त्रज्ञानस्य चाभिवृद्धिः नूतनीकृता । सा हि समितिः श्रीनिवासस्य भगवतः कटाक्षविषयभूतायां श्रीपदपुर्यां (तिरुपति) केन्द्रविद्यापीठमिति किञ्चित् स्थानं परिकल्प्य तत्र विपश्चिदपश्चिमानां केषांचित् त्रिसहस्राधिकमपि वेतनं प्रदाय संस्कृताभिज्ञान् पोषयति ।

अहं हि नाम—श्रीपदपुर्यां श्रीवेङ्कटेश्वरकलाशालायां 1944 तमे वत्सरे न्यायशिरोमणि कक्ष्यायामधीत्य प्रथमश्रेण्यां (उत्तमकक्ष्यायां) उत्तीर्णः । संप्रति मदरास्नगरे विराजमानानां अभिनवदेशिकेत्यादिबिरुदभूषितानां अनेकतर्कवेदान्तग्रन्थनिर्माणेन सुप्रसिद्धवैभवानां अतिसरलं सुग्रहं च पाठप्रवचने चतुराणां अस्मन्मातुलपादानां श्री उवे उत्तमूर वीरराघवाचार्यस्वामिनां उत्तमगुरुणां सन्निधौ शुकवदधीतः । तदीयपरमकृपया दुरवबोधन्यायशास्त्रज्ञश्चाभवम्।

पश्चात् प्रसिद्धाहोबिलमठास्थाने प्रसिद्धवैभवैः विविधच्छात्रश्रेणीमनोरथसारथिभिः उत्तरदक्षिणादिदेशसंचारेण भुवनमेव पवित्र-

यद्भिः पराजित प्रसिद्ध सर्वपण्डितैः श्रीभाष्यादि सर्वग्रन्थप्रवचनेन प्रतिष्ठितोत्तमपण्डितैः अद्यत्वेपि भूमौ नानाशास्त्राधिकारि सद्भाव-प्रतिष्ठापनेन दिगन्त प्रसृमरयशस्कैः सर्वशुभगुणभूषितैः वेदान्तशास्त्रेषु बहुधाशिक्षितः अभ्यस्तवेदान्तश्च अनुगृहीतसारसारज्ञबिरुदः तदीयकृपा पात्रं चाभवम् ।।

अपि चैतेषामेवानुग्रहवशात् श्रीभाष्य द्वितीयकालक्षेपावसरे प्रतिदिनमधीतस्य परिचितगहनस्य श्रीभगवद्रामानुजमुनिभिः सर्वशास्त्र कूलंकषपाण्डित्यैः विरचितस्य श्रीभाष्यग्रन्थस्य अतिसरलरूपा बुध-मनोज्ञा श्रीभाष्यतात्पर्यचन्द्रिकाख्या व्याख्या दासेन मया विरचिता सर्वप्रसिद्धपण्डितैः कटाक्षविषयीकृता सर्वश्लाघ्या पत्रेषु बिराजमाना [मुद्रणं विना] वर्तते ।

तत्र तत्र सभायां मदीयं विमर्शन कौतूहलं श्रीभाष्यव्याख्यानभूतां चन्द्रिकां चावेक्ष्य सन्तुष्टहृदयाः विद्वत्सु अतीव पक्षपातिनः, अयं मदीय अयं त्वन्यदीयः इति अन्तरपि अप्रदर्शितवैषम्याः सर्वपण्डितानामप्यानु-कूल्यकरणे एव बद्धश्रद्धाः शरीरसिद्धि विशिष्टाद्वैतसिद्धि बहुविधग्रन्थ-प्रबन्धारः सभासुवाक्यार्थवेलायां माध्यस्थ्यमूढ्वा तत्तत्पण्डितोक्तार्थानु-वादे अतिनिपुणाः सदस्यानां विषयसमर्पणचतुराः पण्डितराजेत्यादि-बिरुदालंकृताः संप्रति मद्रास्नगरे देशिकविद्याभवने श्रीभाष्यादिग्रन्थ-कालक्षेप बोधनव्यग्रचित्ताः श्रीमन्तः D. T. श्रीताताचार्यस्वामिवर्याः परमकृपया शारीरकब्रह्मसूत्रविमर्शकरणे मां न्ययूयुजन् । तदर्थं भारत राष्ट्रमहामन्त्रि समिति नियमित विमर्शकपदवीमपि मम संपाद्य ददुः । दासस्य मम विमर्शलिखने तत्रतत्रापूर्वविषयमुपदिश्य परमोपकारम-कुर्वन् । इदं सर्वं न कदापि विस्मरणार्हम् ।

एवं प्रबलपण्डितानां प्रबलसाहाय्यात् अयं विमर्शग्रन्थः परि-निष्पन्नः । एतत्कृत्यं भगवद्भागवताचार्य नियमनमिति मनसिकृत्य परमनिःश्रेयसविधायिपरमाचार्य कटाक्षलेशपातात् इमं विमर्शनग्रन्थ-मकरवम् ।

मितमतिरहं अस्मिन् विमर्शनरत्नाकरे अवतरितुमप्यक्षमः। तर्कपाण्डित्येन सर्वमपि साधयितुं प्रवीणाः श्रीमद्वेदान्तदेशिका एव 'गम्भीरे ब्रह्मभागे गणयितुमखिलं कः प्रवीणः प्रमेयं, इत्युक्तवन्तश्चेत् मन्दबुद्धेः मम का कथा। ईश्वरानुग्रहवशात् संजाते अत्र ग्रन्थे यथावत् स्थितं विमर्शनमवेक्ष्य सहृदयाः अनसूयवः पण्डितवरेण्याः श्रेष्ठाः शिरः कम्पिनो भवेयुरितिमन्ये।

इयं च भूमिका, अयं विमर्शनग्रन्थः तदनुबन्धश्च विंशति संवत्सरेभ्यः पूर्वमेव व्यरचि। 16–10–70 तमे वर्षे। बहुधनव्ययेन मुद्रणं कर्तुमशक्तः मनोरथमात्रविषयममुं मत्वा तूष्णीमेवासम्। 'चक्रारपंक्तिरिव गच्छतिभाग्यपंक्तिः' इति महाकविप्रोक्तं मनसि निधाय मुद्रणानुकूलकालोपि भविता इति मनसि आस्थां विधाय जनोऽयं वर्तते स्म। विंशति वत्सराण्यासन्। श्रीमतो भगवतः कृपाचोदभूत्। मदीयः यादृच्छिकभागधेयातिशयश्च संपतितो मयि। निरवग्रहमेधमानेन भगवतः कृपाकटाक्षविशेषेणाधुना संयक् मुद्रितः प्रचारपथमानीतश्च इति विस्मीयते श्रीभगवद्रामानुजमुनिविरचितः श्रीभाष्यग्रन्थोपि अस्मदीयव्याख्यया सह मुद्रणीयः इति आशापरमस्ति। अयमपि मनोरथः भगवतैव श्रीमता प्रपूरणीयः।

नोट्बुक् पुस्तके तत्र तत्र कोणेषु विलिखितं अक्षरसंयोजन कर्तृणां दुरवबोधमिदं अतः किं कुर्यां इत्यालोचनासमये-बंगलूर्नगरे अस्मन्निकट एव संसेवित रहस्यत्रयसार, वेदान्तदीप, वेदार्थसंग्रह श्रीभाष्यादिग्रन्थेषु अतिचतुरेषु बहुषु अन्यतमः वेदवारिधिः मेधावी लौकिकभाषायामिव संस्कृतभाषायामपि अतिचतुरः कम्प्यूटर्तंत्रे समर्थः तदर्थमेव संप्रति पूना नगरे लब्धोद्योगविशेष; मयि सगौरवाभिमानः शोकत्तूर रामानुजाचार्यः मुद्रणोपयुक्तं ग्रन्थमिमं चकार। यतोऽयं ग्रन्थः मुद्रणे सुकरः समपद्यत। अतस्तस्मिन्कृतज्ञताविष्कारपूर्वकं आयुरारोग्यैश्वर्यादिसमृद्धिमाशास्महे।

अन्यदपि सौभाग्यं दासस्य देवानुग्रहवशादापतितम्। अस्मत् सहपाठिनः प्रियसुहृदः न्यायवेदान्तविशारदाः सरलकविसार्वभौमाः

दायप्राप्तकवितावन्तः सेवास्वामिन इति विरुदभाजः विल्लिवाक्कं लक्ष्मीनगरे प्रतिष्ठापितमुद्रणागाराः श्री उवे नल्लूर् श्रीनिवास-राघवाचार्याः प्रूफ़शोधनं मुद्रणं प्रचारप्रापणादिभरं सर्वमपि, दासजने अस्मिन् अभिमानेन उत्साहवशात् स्वीकृतवन्त इति । अतः सदयेषु सोत्साहिषु विमर्शनग्रन्थ कुतूहलिषु न्यस्तसर्वभरः उरसि हस्तं निक्षिप्य स्थितोऽहम् । तदा तदा संजातं श्रमाधिक्यं च सोढ्वा मयि कृपां चक्रुः अतस्तेषामपि निकटे प्रणतिततिपूर्वकं कृतज्ञतां बहुकृत्वः प्रत्युपकाराक्षमाः आविष्कुर्मः ।

ते अपि भगवदाज्ञारूपं वेदान्तग्रन्थादिमुद्रणादिकैंकर्यं पुनः आरचयन्तु, अरोगाः दृढगात्राः सायुष्काः सकुटुम्बाः शतमानं वत्स-राणि जीवन्तु इति भगवन्तमेव लक्ष्मीपतिमभ्यर्थये ।

ग्रन्थेऽस्मिन् वाक्ये पदे अक्षरे त्रुटयः दैववशादपतिताः भवेयुः । सहृदयाः दयालवः पण्डितवराः दोषतत्वांशं परित्यज्य केवलदयां मयि कुर्युः इति क्रियासमभिव्याहारेण अभ्यर्थयामि ।

विमर्शोऽयं ग्रन्थः बहुसरलवाक्यैः विरचितः
सुधावत् संस्वाद्यो विबुधजनबृन्दैः विजयतात् ।
विशेषज्ञानेच्छा जगति च बुधानां भवति चेत्
अवश्यं द्रष्टव्यो मम भवति दासस्य फलिता ॥

इति भागवतजनविधेयः
**पेरुक्कारणै चक्रवर्तिदासः ।**

# विषयानुक्रमणिका

पुटं

श्रीः

श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः

श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य, परमहंसपरिव्राजकाचार्येत्यादि बिरुदावलीभूषितैः श्रीमदहोबिलमठीये चतुश्चत्वारिंशेदिव्यास्थाने दीव्यद्भिः श्रीवण्शठकोपश्रीवेदान्तदेशिकयतीन्द्रमहादेशिकैः अनुगृहीता



# मंगलाशासनश्रीमुखपत्रिका

सारसारविशेषज्ञचक्रवर्त्यार्यधीमतः ।
ब्रह्मसूत्रविमर्शोऽयं मालोलं मोदयेत्सदा ॥

विदितमेवेदं सर्वेषां विपश्चितां यत् श्रीमदुभयवेदान्तप्रवीणाः सारसारज्ञादि बिरुदावलीभूषणाः श्रीचक्रवर्त्याचार्याः अस्मत्प्रियभाजनं, गतपञ्चत्रिंशद्वत्सरेभ्यः अस्मद्वितीर्णाभ्यां-आस्थानविद्वान्-चिन्तनाचार्य इति द्वाभ्यां बिरुदाभ्यां तत्र तत्र श्रीवैष्णवानां सकाशे संप्रदायग्रन्थानां सविमर्शप्रवचनैः सदाचारनिष्ठया, तत्प्रचारैश्च सर्वान् श्रोतॄन् कृत-कृत्यान् वितन्वन्त इति ।

एतेच विद्वत्तल्लजाः-पूर्वाचार्येभ्यः सञ्चितं अतुलं ज्ञानं सर्वोपयोगि चिकीर्षवः श्रीमद्रामायणसुधा, त्रिमतसारः इत्यादि विमर्शात्मकग्रन्थैः शाश्वतीं काञ्चन प्रतिष्ठां विन्दन्ते ।

अधुना च महान्तं कञ्चन ब्रह्मसूत्रविमर्शाख्यं ग्रन्थं विरचय्य, स्वकीयं श्रीभाष्यादिमग्रन्थेषु चिरपरिचयालोडनादिनिष्पन्नं ज्ञानं सुधासदृशं एकीकृत्य भगवदाचार्यमुखोल्लासाय समर्पयन्ति । अनेन विदुषा श्रीमालोलस्य पूर्वाचार्याणां च पादपंकजेषु समर्प्यमाणः कुसुमः अयं सर्वैर्विद्वद्भिः शिरसाभिनन्दनीयो भवेदित्याशास्महे । अत्र च ग्रन्थे अभिन्ननिमित्तोपादानत्वं, अनेन जीवेनात्मनानुप्रविश्येति वाक्येऽर्थ-विशेषविचारः मधुविद्याविचारः इत्यादिः विषयः स्वरसः रसिकानां विदुषामारुरुक्षूणां च मोदप्रदोभवेन्नूनम् । अस्मै प्रियभाजनाय विदुषे मालोलः दयासागरः सर्वश्रेयांसि वितन्यादिति चाशास्महे ।

श्रीशठकोपश्रीः

H. H. The Jeer & Sri Ahobila Mutt



श्रीमत्परमहंसेत्यादि (पौण्डरीकपुरं आश्रमः)

श्रीमदाण्डवन् गोपालदेशिकमहादेशिकैरनुगृहीता

# आशासनपत्रिका

वेदप्रसिद्धः पाराशर्यः लोकानुजिघृक्षया ब्रह्मसूत्राणि प्रणिनाय। इमानि उपनिषत्सारार्थप्रतिपादकानि। तत्र प्राप्यं ब्रह्म, प्राप्ता जीवः, प्रापकः उपायः फलं, एषां स्वरूपं इत्यादिज्ञातव्याः विषयाः प्रतिपाद्यन्ते। प्रमाणप्रतिपन्नप्रमेयनिर्णयाय बहवः आचार्याः प्रावर्तन्त। केचन जीवब्रह्मणोः भेदं, केचन अभेदं, केचन भेदाभेदं च प्रावदन्। भगवद्रामानुजाचार्यास्तु शरीरात्मभावसम्बन्धं आश्रित्य चिदचिच्छरीरकं ब्रह्मैव ब्रह्मसूत्रप्रतिपाद्यमिति श्रीभाष्ये स्वनिर्णयं प्राचीकशन्। अयमेव (विशिष्टाद्वैत) सिद्धान्तः ब्रह्मसूत्रेषु स्वरसलभ्यः इति ब्रह्मसूत्रविमर्शाख्येऽस्मिन् ग्रन्थे सुदृढं प्रतिपादितस्यादिति मन्ये।

आबाल्यात् अस्मत्प्रियसुहृदः पेरुक्कारणै चक्रवर्त्याचार्याः पण्डिततल्लजाः। एते ग्रन्थविमर्शोपयुक्त कुशाग्रबुद्धयः सूक्ष्मार्थ विवेचनचणाः। एते एवमेव उत्तरोत्तरं सदर्थविवेचने, सत्सम्प्रदाय प्रकाशोपयुक्तग्रन्थनिर्मितौ बद्धोत्साहाः भवेयुः धनिकाश्च एषां ग्रन्थनिर्माणे, निर्मितानां प्रकाशने च विशेषतः उपकृत्य स्वकीयं धनं सद्धनं कुर्युः, तथा ग्रन्थनिर्मातारः उपकर्तारश्च अरोगदृढगात्राः दीर्घायुष्मन्तः सर्वाभीष्टसिद्धिमन्तश्च भूयासुरिति अस्मदाचार्यसन्ततिं श्रीरङ्गदिव्यदम्पती च सम्प्रार्थ्य नारायणस्मरणपूर्वकं शुभानि मङ्गलानि पौनः पुन्येन आशास्महे।

नारायण नारायण

Srimad Andavan Poundarikapuram Swamy Asramam
43-A/13, Asramam Road, Srirangam-620 006

# अभिनन्दनम् ।

गंभीरा रसवत्तमा शुभमयी प्रज्ञोपमर्दक्षमा
भोग्या ब्रह्मवशंवदा बहुविदामानन्ददा सर्वदा ।
सामञ्जस्यसमर्थिका बहुगुणा मातेव पुष्टिप्रदा
श्रीभाष्याख्यसरस्वती यतिपते राराजते शाश्वती ॥

रामानुजः कलियनागमुग्रं ह्लदाद्विनिष्कासयति स्म पूर्वम् ।
तथैव सूत्रह्लदतः कुदृष्टीन् उत्सारयामास पुनस्स एव ॥

'सन्तोषार्थं विमृशति मुहुः सद्भिरध्यात्मविद्यां' इति श्रीदेशिकादेशः । 'विमृशेत्' इति बोधिनी । प्रोवाचेत्यत्र प्रब्रूयादिति भाषितम् । तथेदमनुशासनं आचार्यसार्वभौमस्य । श्रीभाष्याध्ययनप्रवचने एव परं तप इति यतीन्द्राः । एवं हि प्रपन्नानां स्वरूपं समीहितम् ।

ततो विमर्शः कैङ्कर्यतामेति । अनुज्ञातत्वात् अनुज्ञारूपतां अश्नुते । विमर्शः-परामर्शः । सहस्रशो विमृष्टा इति पादुकासहस्रे । तत इयं प्रवृत्तिः सम्यग्व्यवसायसन्धुक्षिता ।

विविधं पश्यति । विपश्चित्वं ब्रह्मणः । तदुक्तं–ब्रह्मणा विपश्चितेति । ब्रह्मविचारपरोऽपि भवति विपश्चित् । 'कश्चिद्विपश्चित्तम' इत्याचार्याः । विविधं दर्शनमेव-विमर्शः । विद्वानमृत इह भवतीत्याचक्षते । वैदुष्यं अदूष्यं अमृतत्वाय ।

गंभीरे ब्रह्मभागे गणयितुं अखिलं कः प्रवीणः प्रमेयं इत्यभिमन्वते । ततो ब्रह्मभागः अतिगहनः । यथावदध्ययनं, अवगमः अचला शेमुषी-उत्तरोत्तरं उत्तमतां कल्पयति वर्धयति च । त्रिशद्वारं श्रावितशारीरकभाष्याः त्रय्यन्तार्याः । श्रुतं प्रकाशयन्तः श्रुतप्रकाशिकाञ्च परिरक्षन्तः नवनवान् अर्थान् संग्रथनन्तः स्वसमयं सार्थकमातन्वन्तश्च विरेजिरे । यतिप्रवरभारतीरसभरेण नीतं वय इति साभिमानं सबहुमानञ्च आवेदयामासुः ।

अयं हि विदुषां घण्टापथः । अयं हि वैष्णवाध्वा । अस्मिन्यध्वन्यभिरामे अध्वन्या बहवो महान्तः अधिगतपरमार्थाः अन्वभूवन् अमन्दमानन्दमिति वेत्त्येव सुजनलोकः ।

भाग्यानि पूर्वकलितानि फलन्ति इत्याशंसन्ते अभिज्ञाः । सत्यं । अन्तरा सुकृतपरिपाकं कथमिव घटतां आभिजात्यं ! कथन्तरां च वेदाधीतौ, वेदान्ताध्ययने, दुरवबोधार्थविबोधने बोधने च संपद्यमानं पाण्डित्यम् !! कश्चिन् मां वेत्ति तत्वतः इति ह्यगीयत ।

जन्तुषु मानवाः, मानवेषु वैष्णवाः, वैष्णवेषु प्रपन्नाः, प्रपन्नेषु विद्वांसः, विद्वत्सु वेदान्तिनः, वेदान्तिषु विचारदक्षा इत्युत्तरोत्तरा समग्रसाक्षिका परिस्थितिः अतिशेते । सन्तु कामं आत्मावलोकनव्यग्राः, आत्मविद्याप्रदर्शन प्रदानपराः तान् ध्रुवं अतिशेरत इति नापिहितं तत्वम् ।

श्रीभाष्यं मन्त्रसंमितमाचक्ष्महे । प्रणवे, श्रीभाष्ये च परतत्वं प्रतिष्ठितमिति प्राज्ञपरिभाषा । अविस्तृताः सुगंभीराः रामानुजमुनेर्गिर इति ब्रह्मसूत्र गंभीर्यं सूपबृंहितमिव यतिपतिवचस्सुधायाम् । सूत्राक्षराणि व्याख्यास्यन्त इति प्रतिजज्ञे । अक्षरमप्यननुकूलं इतरेषामिति प्रदर्शने कियती निष्ठा यतीश्वराणाम् ! अक्षरशो व्याख्यानमेव हि विमर्शः । तत् इदं अतिगहनं श्रीभाष्यं विमर्शात्मकमेवेति निश्चीयते ।

श्रीभाष्येषु तत्र तत्र काँश्चित् विषयानधिकृत्य पृथक् पृथक् विचाराः संप्रवर्तिताः। बहवो ग्रन्थाश्च तदा तदा प्रादूरभूवन् । वादचातुरी, व्याख्यानचातुरी विमर्शनचातुरी च तदा तदा प्रदर्शिता बहुभिः विद्वद्वरेण्यैः । कथाहवकुतूहलिनः अधुनापि सन्नद्धाः संरब्धाश्च, परं विरलाः इति सर्वे संप्रतिपद्यन्त एव ।

श्रीभाष्यं अधीयते अध्याप्यते । वैदुष्यस्य सत्ता श्रीभाष्याध्ययनादेवेति निरणायि । एकस्याधिकरणस्य उत समग्रस्य श्रीभाष्यस्य पारायणं-आवृत्तिः अशीतिकृच्छ्रसमतामेतीति संप्रदायः । आलयेषु मन्त्रपुष्प प्रकरणे श्रीभाष्यं अनुसन्दधत इत्यपि ज्ञातचरमेव ।

अतिगंभीरं भगवद्रामानुजमुनि प्रणीतं श्रीमद्भाष्यम् । भगवत् प्रभूतं श्रीमत् । श्रीमत्वान्महत्वम् । एतादृशं श्रीमत्वं विमृश्यते प्रकृते प्रबन्धे सानुबन्धे । श्रीभाष्यशैली सुमनसां समाराधिका । सर्वसामञ्जस्याय इयमेकैव प्रगल्भते। आपादचूडं अतिरमणीयेऽनपायिनि च श्रीभाष्ये एकैकमप्यक्षरं आनन्दाय । पूर्वपक्षो विशदं विज्ञायते, विशदतरं च सिद्धान्तः । मधुमय्यः फणितयो भाष्यकृतां श्रीमताम् । यतीश्वरसरस्वती विमलरसावहा प्रवहति, निर्वहति च स्वान्तमन्ते-वासिनाम् । यथाकथञ्चित् संगमनीयमिति नेयं दुरवस्था आपतिता कदापि भाष्यकृतः । नौपचारिको निर्वाहः कुत्रापि पदमधत्त ।

गांभीर्यं च श्रीभाष्यस्य न केवलं विषयवैलक्षण्योपनिबन्धनम्, न वा वक्तृवैलक्षण्यैकोपलक्षितम्, परन्तु, अवाङ्मनसगोचरा वचन-विन्यासवैखरी आवर्जयति भावुकानां स्वान्तानीति सत्यं प्रतिजानी-महे । उदाहृतिरियं स्थालीपुलाकनयेन प्रदर्श्यते । प्रथमेऽध्याये, प्रथमपादे अस्पष्टतर विषयवाक्ये साधु समर्थिते, नैसर्गिक उत्साहः यतीश्वराणां अतिशोभनः । द्वितीयपादोपक्रमे-संगृह्णन्तः प्रथमपादार्थं गांभीर्यं अन्यादृशं व्यञ्जयन्ति । यथा, अभ्यधाम, अब्रूम, उपापी-पदाम, समार्थितामहि उदैरिराम, समगरिष्महि, आतिष्ठामहि, अब्रूमहि, इत्यादि । पश्यत प्रयोगवैखरीम् । प्रचक्ष्महे, ब्रूमः इति सर्वसाधारणः प्रयोगः प्रत्यधिकरणं परिदृश्यते । श्रीभाष्योपलक्षितेयं शैली भव्यतमा भोग्यतमा च केवलं वारं वारं आवर्तनं बाणस्येव मुद-मुदञ्चयति ।

अवहितमनाः श्रुणु इत्यादरः प्रदर्श्यते । अनभिज्ञो भवान् शारीरक विज्ञानस्य इति प्रतिबोध्यते । प्रचक्ष्महे इति गांभीर्यं सिद्धान्तप्रदर्शने अनितरसाधारणम् । अखिलं श्रीभाष्यं अमलं अतुलञ्च । सन्तु नाम सूत्राणां व्याख्यातारः, सन्तु नाम भाष्यकृतः, सन्तु नाम दर्शनसूत्रभाष्याणि । किं तुलना मर्हन्ति श्रीभाष्येण !

ब्रह्मसूत्रविमर्शनामा प्रकृतः प्रबन्धस्सानुबन्धो जरीजृंभते । विलक्षणोऽयं विमर्शग्रन्थः । ब्रह्मसूत्राण्यधिकृत्य प्रवृत्तो विमर्श इति

अन्वर्थमभिधानम् । ब्रह्मसूत्राण्येव विमृश्यन्ते । सूत्राणां संख्या, सूत्रेषु भेदाः, मतान्तरेषु सूत्राणां स्थितिः पूर्वपक्षसूत्राणि सिद्धान्तसूत्राणि इत्यादि विवेचनं, एकसूत्रत्वं पृथक्सूत्रत्वं, अध्याये पादे अधिकरणे सूत्राणां परिसंख्यानं इत्यादि अधिकृत्य शोभनतमो विचारः; अद्वैतिनां तथा द्वैतिनां च व्यवस्थायां भेदाः, विशिष्टाद्वैतिमतमेव श्रीमतां व्यासार्याणां अत्यन्तमभिमतं इति सहेतुकं प्रदर्शनं, आग्रहं आटोपं, आरोपं अन्तरेण ताटस्थ्यमवलम्ब्य समीचीनतर्कसञ्चारः, स्वाशयाविष्करणे अप्रकम्प्यत्वं, विचारे स्वातन्त्र्यं, दृष्टान्तप्रदर्शनप्रगल्भता मतान्तरावलोकन गवेषणादि श्रमदूरीकरणं इत्यादि एकैकमपि प्रतिपुटं स्फुटमवगमयत् विमर्शनिबन्धनं सुवर्णानि सूत्राणि व्यञ्जयतीति महदिदं भागधेयं वेदान्तिनाम् । इतः किमन्यदवशिष्यते आशासनीयम् ।

पञ्चाशत्सङ्ख्यातेषु शार्षकेषु विमर्शः पदमधत्त । जिज्ञासानुगुणं उत्तरोत्तरं विचारः शोभनतमः संरब्धः विपठिषून् प्रवर्तयति प्रवर्धयति च कौतूहलम् । नाङ्गुलिगणेया विषयाः । परन्तु कतिचन निर्दिश्यन्ते — मधुविद्याविचारः शोभनतमः । विचार सरणिरियं विलक्षणा विबुधहृद्यतमा च विद्योतते । अनुबन्धेऽपि पञ्चाशच्छीर्षकाणीति महदिदं प्रमोदस्थानम् ! अनेन जीवेनात्मनेति श्रुत्यर्थविचारः कस्य वा विदुषः स्वान्तं न समुल्लासयेत् ! विशिष्टाद्वैतिमते इमे अर्थविशेषाः प्रधानभूताः इति (174 पुटे) प्रतिपादनं स्वमतोपन्यासदक्षतां प्रतिपादयति । प्रदानाधिकरणे श्री उ. वे. नावल्पाक्कं विदुषां देवनाथताताचार्याणां विमर्शं तथैव स्वीकृत्य संयोजयन्ति इति आमोदमन्यं अधिगच्छति विमर्शकस्वान्तम् । विस्तरभयात् विरम्यते ।

एते च सुगृहीतनामधेयाः चक्रवर्त्याचार्याः विमर्शकधुरीणाः विपश्चिदपश्चिमाः विबुधचक्रवर्तिनः विशिष्टाद्वैतसिद्धान्तभाग्य परिपाकाः विख्यातात् अभिनवदेशिकात् उत्तमूर् वीरराघवाचार्यादधिगत

सत्तर्का:, सहृदय सार्वभौमाणां पण्डितसार्वभौमानां डि. टि. ताताचार्य स्वामिनां कृपापात्रभूता:, श्रीमदहोबिलमठास्थाने द्वाचत्वारिंशं आस्थानं अलंकृतवतां, पण्डितलोकशिरश्श्लाघनीयशेमुषीणां, विद्वत्पक्षपातिनां, सकलविद्यावाहिनीजन्मशैलानां श्रीवण् इत्यादि श्रीरङ्गशठकोप-यतीन्द्रमहादेशिकानां अन्तेवासितामस्थाय सकलवेदान्तग्रन्थाध्ययनेन लब्धवर्णाः सुविदितसंप्रदायरहस्याः वादगोष्ठीषु अग्रिमश्रेणीं अधि-तिष्ठन्तः तत्कृपालब्धसारसारज्ञ इत्यादिबिरुदाः विरचितनैकप्रौढ-प्रबन्धाः आलङ्कापुरात् आचपर्वतवरात् आचार्यवैभवं प्रगुणयन्तः उपन्यास ग्रन्थनिर्माण कालक्षेपादिभिः प्रचारयन्तः विराजन्ते इति विदितचरमेव ।

अनन्त बिरुदबृंहिता एते अन्वर्थयन्ति च तान् स्वीयैः वाग्विस्तरैः । अन्वर्थयामीत्यन्वभाषि सर्वज्ञैः सर्वतन्त्रस्वतन्त्रैः । असारसारज्ञा अप्येते सारसारज्ञाः । सारे सारं जानन्ति, सारं सारं जानन्तीति वा । तत्वं निरूपयति प्रकृतो विमर्शः ।

ब्रह्मविद्यावाचस्पतिः सुचारुवाका एते न चार्वाकाः । न तत् प्रवर्तको वाचस्पतिर्वा । ब्रह्मविद्यासु वाचस्पतिता सुन्यरूपि अस्मिन् विमर्शे । चक्रवर्तिसुतोऽपि उपमितो वाचस्पतिना कवीश्वरेण । चक्रवर्त्याचार्यैः तथैव संभाव्यते भावुकैः ।।

न्यायवेदान्तविद्वान् न्याये परिशुद्धे वेदान्ते च विशिष्टे आव-हन्ति वैदुष्यमदूष्यं अनघं च विशिष्टाद्वैते । न्यायवेदान्तधिषणा निकषायते विमर्शः ।

शिरोमणिः । शिरोमणिता शोभना । शिरोमणि शिरोभूषणतां अन्वश्नुवन्ति, शिरांसि च कपयन्ति च ।

विद्वदुपन्यासकरत्नं प्रायशः विद्वांसो विरलाः । उपन्यासकाश्च सरलाः संख्यया बहवः । वैदुषी उपन्यसनकला च प्रायशः असमानाधि-

करणेव दृश्यते। विद्वदुपन्यासकाः मृग्या एव। तेषु रत्नायन्ते चक्रवर्त्याचार्याः इमे इति सूच्यत इव।

श्रीरामायणामृतवर्षी। रामचरितं अमृतसागरः। अतृप्तः प्राचेतसः सततं पिबन् अपि। तच्चामृतं परिवेषयामास कोऽपि मुनिः वाग्विदां वरः तस्मै प्राचेतसे मुनये। प्रगुणितं तच्च विश्वोपजीव्यं रामायणामृतं कांक्षाधिकं वर्षति चक्रवर्त्याचार्यः इति ज्ञाप्यत इव।

भागवतसुधास्वादी। भागवतसुधां पिबन्तीव। पिबन्तं त्वन्मुखांभोजच्युतं हरिकथामृतमिति हि परीक्षितोऽनुभवः। भागवतसुधां पाययन्नपि स्वयमपि पिबतीति नूनं अमृतवर्षणादप्यतिशेते। रामायणानुभवादपि अतिशयितोऽनुभवः श्रीभागवते इति ज्ञापयतीव।

सत्संप्रदायधुरन्धरः। धुरन्धरेष्वन्यतमाः। विमर्शग्रन्थः अन्ये च प्रमाणयन्ति।

सद्वावदूकाः सन्तः एते वावदूकाः। वावदूकाः किमपि वदेयुः अर्थसमर्थनचुञ्चवः। परन्तु एते सन्तः वावदूकाः इत्यभिमन्यन्ते। वयं तु सद्विद्यावावदूकं मन्यामहे अन्वर्था बिरुदावलिः इति स्थूलतः पर्यालोचितम्।

एतेषां बिमर्शधोरणी सतां सदा धारणीया। मालोलविभूतयः एते प्रकर्षेण ह्लादयन्तः स्वान्तानि सुमनसां नित्यतृप्ताः आबघ्नन्तु निबन्धनानि शताधिकानि, जीवन्तु च शरदां शतं सपरिवाराः इति विज्ञाप्य, वैदुष्याय घनिष्ठाय अञ्जलिं समर्प्य च धन्यो बुभूषामि। एतादृशान् उत्तमान् विदुषः सहाध्यायिनः प्राप्तवानिति साभिमानः अत्यन्तं मुदमावहामि च।

# श्रीभाष्यचन्द्रिका

भगवतो रामानुजस्य भाष्यं श्रीभाष्यं अभिधीयते । सर्वतोमुखं श्रीमत्वं उपलभ्यमानं सुमनसां समाराधनाय कल्पमानं अज्ञानध्वान्तं रुणद्धि । अघानि परिहरति आन्दोलयति च स्वान्तानि मनीषिणां इति संभाव्यते ।

सुलभावगाहस्य अस्य श्रीमतो भाष्यस्य व्याख्यानापेक्षापि वर्तत एव । श्रुतप्रकाशिका प्राथम्यं आवहति, निर्वहति च वेदान्त-बृन्दम् । स्वरूपसत्तायै वैदुष्यस्य पुष्टयै शुद्धयै च भावप्रकाशिकादीनि व्याख्यानानि संप्रवृत्तानि सद्भिः सभावितानि समादृतानि च । दशाधिकव्याख्यानसद्भावेऽपि अद्यत्वे अभिनवदेशिकैः उत्तमूर् वीरराघवार्यमहादेशिकैः अनुगृहीता दर्पणसमाख्या व्याख्या । परकालमठास्थानीं अलंकृतवद्भिः परमहंसेत्यादि श्रीरङ्गनाथपरकालयतीन्द्रमहादेशिकैः अनुगृहीता विबुधानन्दनी गूढार्थसंग्रहाभिधाना सुविपुला विद्योतते ।

एवं बह्वीषु व्याख्यासु सतीष्वपि पेरुक्कारणै चक्रवर्त्याचार्या इमे स्वाशयं आविष्कर्तुं चन्द्रिकानाम्नीं व्याख्यां व्यलिखन् इति श्रुत्वा वैदान्तिनां लोकः विस्मयमन्यादृशं आवहति । गीताभाष्यतात्पर्यचन्द्रिकायां मुदितान्तरङ्गा वयं भाष्यचन्द्रिकामपि स्पृहयामहे ।

चन्द्रिकेयं अचिरात् प्रकाशयिष्यते इति च श्रुत्वा मालोलविभूतिः उत्कंठिता अवतिष्ठते । कृष्ण (रामानुज) भावं पोषयन्ती अकृष्णपक्षीया चन्द्रिका विलसतुतरामिति अभिनन्द्यते ।

कुजान्धतम उत्सार्य सुजाता चन्द्रिका ध्रुवम् ।
तन्वाना कुमुदानन्दं उल्लासयतु धीरसम् ॥

मालोलसहितो वाजिवदनो मम दैवतम् ।
अनुबन्धानुबन्धेन प्रीणातु सह देशिकैः ॥

इति

बिल्लिवाक्कम् — विद्वत्सेवासक्तः

मद्रास — सेवा. श्रीनिवासराघवदासः



न्याये वेदान्ततन्त्रे विबुधवरमथ ब्रह्मविद्यागुरुं तं
सारज्ञं सारशास्त्रे प्रवचननिपुणं धूर्वहं संप्रदाये ।
वर्षन्तं रामगाथामृतमथ शुकवाक्सत्सुधास्वादशीलं
गोदाश्रीसूक्तिसिंहं गरुडगिरिमठास्थानविद्वांसमीडे ॥



भजामि सद्गुणनिधिं न्यायवेदान्तवारिधिम् ।
दक्षं प्रवचने श्रीमच्चक्रवर्त्यार्यमुज्वलम् ।।

श्रीः । श्रीमते श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः । श्रीः ।
श्रीमते रामानुजाय नमः ।
श्रीमते निगमान्तमहादेशिकाय नमः ।
श्रीमदादिवण् शठकोपयतीन्द्रमहादेशिकाय नमः ।
श्रीमते श्रीवण्शठकोपश्रीश्रीरङ्गशठकोपयतीन्द्रमहादेशिकाय नमः ।

# ॥ ब्रह्मसूत्रविमर्शः ॥

शिरोमणि श्रीचक्रवर्त्याचार्यकृतः

## 1. मङ्गलश्लोकाः

श्रियः श्रियं सर्वजगन्निदानं समस्तकल्याणगुणांबुराशिम् ।
अशेषतापच्छिदमाश्रितानां परावरेशं प्रणमाम्यभीक्ष्णम् ॥

स्वाधीनाशेषवस्तु श्रितनिखिलजनत्राणबद्धैकदीक्षं
विश्वस्याधारभूतं विधिशिवसनकाद्यर्चितं ब्रह्म सत्यम् ।
मुक्ताद्यानन्ददातृ त्रिविधचिदचिद्वस्तुसंधान्तरस्थं
नित्यं शुद्धं परं तत् भवतु च जगतां श्रेयसे भूयसे नः ॥

सर्वं वस्तु स्वशेषं कथमपि रचयन् विश्वसर्गैककर्ता
निर्बाधानन्तनित्यश्रुतिशतविदितानन्तमाहात्म्यभूमिः ।
सर्वेषामाश्रितानामभिमतफलदः प्राप्यरूपः स्वयं चे-
त्येवं शारीरकेऽस्मिन् कथितगुणगणः पातु सर्वेश्वरो नः ॥

प्रणम्य लक्ष्मीशमनन्तहेयप्रध्वंसि कल्याणगुणैकतानम् ।
गुरूंश्च सर्वानमितप्रभावान् वितन्यते सूत्रविमर्श एषः ॥

सहि जयतु वेदराशिः जयतुतरां वेदविवरणात्मिका स्मृतिः ।
श्रीमान् पराशरसूनुः जयतु जयन्तु तत्कृतानि सूत्राणि ॥

नमोरामानुजार्याय निस्सीमगुणशालिने ।
चिदचित्ब्रह्मतत्त्वाख्यत्रिदण्डोद्भासिने नमः ।।

श्रीमद्वेङ्कटनाथं श्रुतिमकुटगुरुं नमामि सद्वृत्तम् ।
अन्यांश्च लब्धविभवान् तत्पदकोटीरयोगतो ग्रन्थान् ।।

ऋषिं सेवे रमासिंहतृष्णातत्त्वमिवोदितम् ।
अहोबिलमठाधीशं आद्यं वण्शठमाथिनम् ।।

वाधूलस्वर्णकृष्णार्यसूरिपादसमाश्रितम् ।
श्रीमद्रंगशठारातियोगीशगुरुमाश्रये ।।

आराध्य मालोलमहोबिलेशमानम्य रामानुजपादपद्मम् ।
तोषाय मोदात् विदुषां विधत्ते विमर्शमेतं बुधचक्रवर्ती ।।

प्रथितगुरुवराणां सन्ततिं तां प्रणम्य
प्रयतगुणगणानां ज्ञानवैराग्यभाजाम् ।
स्फुरति हृदि समग्रं यश्च यस्याः प्रसादात्
तमिह विबुधतुष्टयै विस्तृणीमो विमर्शम् ।।

श्रीशैलतातार्यमहाशयानां अनुग्रहात्संप्रति पण्डितानाम् ।
शारीरकब्रह्मविचारसूत्रं विमृश्य सन्तोषमुदञ्चयामि ।।

अस्तु श्रीनरसिंहस्य पदयोः प्रणतिर्मम ।
यन्नमस्यामहिमतो न भजन्त्यापदः प्रजाः ।।

द्वैताद्वैतमतानुयायिमनसा श्रीभाष्यदृष्टया तथा
तत्तत्सूत्रविधाप्रभेदमधिकृत्यादेः विमर्शक्रमम् ।
सर्वेषां प्रकटं विधातु मतुलं ग्रन्थं मयाऽविष्कृतं
सारासाराविभागहृष्टमनसो दृष्ट्वा दयन्तामिह ।।

## 2. उपोद्घातः

श्रियःपतिः निखिलहेयप्रत्यनीककल्याणैकतानः निखिलजगत्कारण भूतः स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदः उभय-विभूतिनाथो नारायणः "वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः । आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैः सह ॥" इति प्रमाणोक्त-रीत्या विराजमानः प्रलयावसानसमये, हन्त ! इमे जीवाः चेतना अपि अचिदविशिष्टाः, इमांश्च सृष्ट्वा कृत्याकृत्यविवेक युक्तान् करोमि' इत्यनुकम्पावान् निखिलं जगत् सृजति ।

अत्र खलु सृष्टा अपि जनाः देहेन्द्रियबुध्याद्युपकरणवन्तोऽपि अपथेषु बुद्धिं प्रसार्य संसारार्णवमग्नाः नानाविधदुःखभाजश्च खिद्यन्ति । सर्वेऽपि स्वदुःखमपहाय अनवधिकातिशयसुखभाजः कदा भवामः इत्यभिसन्धिमन्तश्च । निरस्तातिशयानन्दभाक् कदाऽहं भवेय-मित्येव एकैकोऽपि मन्यमानः तदनुगुणेषु कर्मसु प्रवर्तत इति चानुभव-सिद्धम् ।

स च भगवान् अनादिमायया सुप्तानां गाढान्धकारावृतप्रकृति-मण्डले जनिभाजां सर्वथा विवेकशून्यानां बोधमुत्पाद्य अनवधिकाति-शयानन्दप्रापणाय वेदरूपं प्रदीपमदिशत् । प्राहुश्चेममर्थं 'हर्तुं तम-स्सदसती च विवेक्तुमीशः मानं प्रदीपमिव कारुणिको ददाति' इति पराशरभट्टार्याः ॥

सोऽपि वेदः प्रमाणमूर्धन्यभूतः अनितरसाधारणं सार्वभौमं प्रामाण्यमाबिभर्ति, यदाज्ञावशवर्तिन्यः सर्वा अपि प्रजाः स्वं स्वं कर्म कुर्वन्त्यः इह परत्र च शर्म विन्दन्ते । नहि कश्चिदप्यास्तिकजनः वेदस्य प्रामाण्यमनङ्गीकुर्वाणः परिदृश्यते । मूढः खलु स पुरुषः, यः परम-पुरुषेण दयया दत्तमपि वेदमुपेक्ष्य तदर्थं चाविज्ञाय कृत्याकृत्यमजानन् स्वेष्टप्रकारेण लोके वर्तमानः सर्वदा निषिद्धं कर्म कुर्वाणः नरकेऽतिघोरे पतति ॥

### 3. वेदापौरुषेयत्वं

वेदोह्यपौरुषेयः पुरुषविरचितप्रबन्ध इव निखिलदोषसंभावनाऽभूमिः लोकानुजिघृक्षया जनानुकूलमेव कर्म ब्रूते। न हि पुरुषकृतप्रबन्धेष्विव उपेक्षाहेतुभ्रमप्रमादादिदोषसंभावना वेदेषु वरीवर्ति। येन वेदेष्वपि केषुचित्कालेषु उपेक्षाबुद्धिः जनानां जायेत। लौकिकप्रबन्धकर्ता हि मनुष्यः भ्रमप्रमादविप्रलम्भसंभावनार्हविषयः। नहि वेदस्य कर्ता कश्चित् दरीदृश्यते। वेदोह्यपौरुषेयः। अनादिनिधनः अविच्छिन्नसंप्रदायागतः अनन्तः स्वरवर्णादिभिरेकरूपेणाध्येयश्च निरीक्ष्यते जनैः सर्वैः। अत एव वेदममुं 'अनादि निधन, अविच्छिन्न संप्रदाय, असंभाव्यमानदोषगन्धावकाश, अनन्तवेदशास्त्र'मिति आदरातिशयेन प्राञ्चः प्रोचुः॥

अत्र कश्चिन्नास्तिकः एवं मन्येतापि। सर्वमपि वस्तुजातं केनचित्कृतमेव दृश्यते। रथगोपुरप्रासादादि केनचित्कृतमित्यत्र च न विवदन्ते जनाः। रामायणं महाभारतं रघुवंशादिकाव्यमपि केनचित् बुद्धिमता विरचितं दृष्टम्। एवमेव वेदरूपशब्दराशिरपि विलक्षणेन मेधाविना विरचितः इत्यत्र नैव विवादस्यात्रकाशोऽस्ति। एवं स्थिते कथमत्र कर्ता नास्तीति।

अयं वैदिकसंप्रदायबाह्यानामाक्षेपः। माणवको हि आचार्यमुखादधीत्य वेदमधिगच्छतीति अमुं विषयं वयं अद्यत्वे पश्यामः। एवमेव पूर्वकालेऽपि। अस्य प्रबन्धस्यायं कर्ता, काव्यमिदमयं चकार इति यथा लौकिकप्रबन्धेषु दृश्यते, न तथा वेदभागमिमं अयं चकार इति जना वदन्ति। नापि कर्तृनिर्देशः वेदपुस्तकेषु अद्यापि दृश्यते। अतो मनसापि न कश्चित्कर्तृत्वेनालोच्यः॥

ननु काठकमिति कस्यचिद्वेदभागस्य नाम। कालापकमित्यपरस्य। अत्र कठादिकृतत्वनिबन्धनो हि तद्व्यवहारः। 'नम ऋषिभ्यो मन्त्रकृद्भ्यः', अयँ सो अग्निरिति विश्वामित्रस्य सूक्तं भवति इति स्पष्टमेव च वसिष्ठविश्वामित्रादिकर्तारः निर्दिश्यन्ते। अतो वेदस्य कर्ता कुतो न भवतीति।

उच्यते—नात्र कठादिकर्तृत्वनिबन्धनोऽयं व्यवहारः। परन्तु कठादिप्रवचननिबन्धनः तथा व्यवहारः। वेदविभागानन्तरकालिकः आद्यप्रवचनकारित्वेन कठादेः 'काठकं' 'कालापकं' इति समाख्या जाता। 'आख्या प्रवचनात्' इति सूत्रितं च पूर्वमीमांसायाम्। अतो वेदस्य कर्ता नैव सिध्यति॥

अपि च शब्दनित्यत्ववादिनां मीमांसकानामत्र सुलभः समाधिः। ये तु वेदस्य पौरुषेयत्वं वदन्ति नैयायिकाः तन्मतेऽपि परमपुरुषेणेश्वरेणोच्चरिताः वेदाः इति प्रमाण्यं सूपपादम्। सर्वज्ञो हीश्वरः वेदभागं दयया जनानां ददातीति तस्य सामान्यपुरुषस्येव भ्रमादिदोषसंभावनाभावात् तत्कृतस्य वेदस्य निर्दुष्टता च।

वेदान्तिनस्तु वेदस्य नित्यत्वं अपौरुषेयत्वमेव चाशेरते। यद्यपि कालप्रकृतिजीवस्वरूपस्येव शब्दस्वरूपस्य नित्यत्वं नेच्छन्ति। यथा अनित्यं वस्तुजातं देवः सृजति तथा शब्दमपि। घटादिवत् शब्दोऽपि अनित्य इत्यत्र विवादोऽपि न वर्तते। भूताद्यहङ्कारपरिणामरूपो हि शब्दः। शब्दात्मकवेदराशेः नित्यत्वं पौरुषेयत्वाभावश्च सर्वथा न संभवतः। अथापि वेदस्यास्य नित्यत्वमपौरुषेयत्वं च सम्यगेवोपपादयन्ति वेदान्तविदः। अस्मिन् शारीरकनये देवताधिकरणे सूत्रकार एवामुमर्थं संयगुपपादितवान्। 'अत एव च नित्यत्वं' 'समाननामरूपत्वाच्चावृत्तावप्यविरोधः दर्शनात्स्मृतेश्च' इति सूत्रद्वयमेतमर्थं सुष्ठु उपपादयति। तथा हि—

भगवान् पुरुषोत्तमः प्रलयावसानसमये पूर्वसंस्थानं जगत्स्मरति स्वस्मिन् च प्रलीनं भोक्तृ भोग्यजातं विभजते। महदादि ब्रह्माण्डं च हिरण्यगर्भपर्यन्तं स्वयं सृजति यथापूर्वम्। तस्मै हिरण्यगर्भाय पूर्वानुपूर्वीविशेषसंस्थितान् वेदांश्चाविष्करोति। देवाद्याकार जगत्सर्गे च तं नियोजयति इति वेदान्तप्रक्रिया॥

शब्दस्य सर्वस्यापि पूर्वं लीनत्वेऽपि सर्गकाले शब्दादीन् संसृज्य पूर्वं यादृश स्वरवर्णश्चानुपूर्वीविशिष्टतया वेदराशिस्थितः तादृश-

स्वरवर्णानुपूर्वीविशिष्टतया स्मृत्वा स्वसृष्टप्रजापतये उपदिशति इति यत् तदेव नित्यत्वं अपौरुषेयत्वं च वेदस्य। न हि स्वरूपतो वेदस्य नित्यत्वं वदन्ति, येन पूर्वोक्ताः शङ्काः प्रादुष्युः। प्रवाहतो नित्यत्वमेव वेदानामुशन्ति। यथा भगवदवताराणां प्रवाहतो नित्यत्वम। स्पष्टमिदमुक्तं सङ्कल्पसूर्योदयनाटके श्रीमद्भिः वेङ्कटनाथैः–"त्रातुं जगन्ति कृपया कल्पे कल्पे भवन्ति दिव्यानि। चरितानि चक्रपाणेः प्रवाहवृत्त्या परस्परप्राञ्चि" इति।

अद्यत्वे यादृशानुपूर्व्यादिविशिष्टतया वेदाः उच्चार्यन्ते, तादृशानुपूर्वीविशेषविशिष्टतया वेदान् हिरण्यगर्भाय भगवानुपदिशति। तादृशानुपूर्वीस्वरवर्णादिविशिष्टतया वेदस्मरणं भगवतः कथं जातं इति न मन्तव्यम्। ततः प्राक्सर्गे तादृशवेदानां संस्कारानपेक्षमेव भगवतः स्मरणसंभवात्। यथा चोपाध्यायः रात्रौ सुप्तान् प्रातः प्रबोध्य पूर्वसंस्थानसंस्थितमेव वेदमध्यापयति तथा भगवानपि हिरण्यगर्भमिति न दोषः। तदुक्तं श्रीरङ्गराजस्तवे उत्तरशतके—

संस्कारं प्रतिसञ्चरेषु निदधत्सर्गेषु तत्स्मारितं
रूपं नाम च तत्तदर्हनिवहे व्याकृत्य रङ्गास्पद!।
सुप्तोद्बुद्धविरिञ्चपूर्वजनतामध्याप्य तत्तद्धितं
शासन्नस्मृतकर्तृकान् वहसि यद्वेदाः प्रमाणं ततः॥ इति।

अतः स्वरवर्ण आनुपूर्वीप्रभृतिषु एकरीत्यैवोच्चार्यमाणत्वात् सर्वेषु देशेषु स्खालित्यं विना एकरीत्या अध्यापनाच्च सर्वेषां वेदेषु विद्यमानः आदरातिशयः सुसमीचीन एव। उक्तं च श्रीमति भाष्ये–"अतो वेदस्य नित्यत्वमपौरुषेयत्वं च नाम-पूर्वपूर्वोच्चारणक्रमजनित संस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेणोच्चार्यमाणत्वम्। तदस्मासु सर्वेश्वरे च समानम्। इयांस्तु विशेषः—संस्कारानपेक्षमेव स्वयमेवानुसन्धत्ते पुरुषोत्तमः" इति॥

## 4. वेदप्रमाण्यम्।

ननु वेदस्य पुरुषकृतत्वं मास्तु, मास्तु च भ्रमप्रमादविप्रलम्भाधीनत्वम्। तथापि तदुक्तस्यार्थस्य सर्वस्यापि यथार्थत्वं कथम्? बहवः

अतीन्द्रियार्था ह्युच्यन्ते । कथं च तेषु अस्माकं विश्वासः । न हि कश्चित् यागकृत् स्वर्गमनुभूय पुनरत्रागत्य "मया यागाद्यनुष्ठितं तत एव स्वर्गश्चानुभूतः इति वदति । अतः अतीन्द्रियबह्वर्थप्रतिपादनेन तद्विषये कथं याथार्थ्यं कथन्तरां च वेदस्य प्रमाण्यम् ?

उच्यते । — देशान्तरादागत्य बहवः बहूनर्थान् वदन्ति । कथं तेषु विश्वासोऽस्माकं जायते ? कथं च तेषु वाक्येषु प्रामाण्यमभ्युपगच्छामः । न हि कश्चिद्देशान्तरादागतेनोक्तं वाक्यजातं श्रुत्वा तत्क्षणे एव देशान्तरं गत्वा तत्र चावेक्ष्य तदुक्तं वास्तवमिति निश्चिनोति । न वा अन्यस्मै ब्रूते । यागादिकमनुष्ठाय पुनः कर्मभूमौ जनित्वा न मया स्वर्गोऽनुभूतः इत्यपि न कश्चित् ब्रूते । अतः केषुचिदर्थेषु लोकानुभूतेषु प्रामाण्यदृष्टौ सत्यां तुल्यन्यायतया सर्वेषु यथार्थत्वबुद्धिः विश्वासश्च जायते । इदं च सर्वत्र लोकानुभवसिद्धम् । न हि वेदः अतीन्द्रियार्थमेव ब्रूते । यथा परलोकसाधकयज्ञादिबोधकवेदभागाः श्रूयन्ते तथा ऐहिकफलजनकेष्टयादिबोधकभागा अपि समुल्लसन्ति । 'कारीर्या वृष्टिकामो यजेत' इति वृष्टयर्थकारीरीष्टिः उक्ता । पुत्रार्थं पुत्रकामेष्टिरपि । एतस्याः करणात् फलं च लभन्ते । दशरथो हि पुत्रकामेष्टिं कृत्वा इहैव पुत्रचतुष्टयं प्रापेति श्रीरामायणे प्रसिद्धम् । एवमिहैव दृष्टान्यन्यान्यपि फलानि ते तेऽलभन्त इति महाभारते सुव्यक्तम् । एतन्न्यायेन स्वर्गादिविषयेऽपि विश्वासः तत्साधकयागबोधकवेदभागे प्रामाण्यमपि सिध्यत्येव ।

यस्तु निष्करुणमेव अतीन्द्रियार्थबोधकवेदभागे अविश्वासं मन्यते, तस्य चित्ते निष्कण्टकमेव विश्वासोत्पादनार्थं अभिचारश्रुतिः जागर्ति । यदि सोऽपि 'श्येनेनाभिचरन् यजेत' इत्युक्तं शत्रुवधजनकं अभिचारयागमनुतिष्ठेत् अवश्यं सोऽपि शत्रुजयं प्राप्नुयात् । तदुक्तं—

"आज्ञा ते सनिमित्तनित्यविधयः स्वर्गादि काम्यद्विधिः
सोऽनुज्ञा शठचित्त शास्त्रवशतोपायोऽभिचारश्रुतिः ।
सर्वीयस्य समस्तशासितुरहो श्रीरङ्गसर्वस्व ते
रक्षाकूतनिवेदिनी श्रुतिरसौ त्वन्नित्यशास्ति स्ततः ।।" इति ।।

### 5. वेदस्याध्येयता

अयं च वेदः अवश्यं अध्येतव्यः। "श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि। युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान्॥" इति हेतोः, "स्वाध्यायोऽध्येतव्यः" इत्यस्माच्च। अन्यथा 'अनधीयानाः व्रात्या भवन्ति' इति व्रात्यत्वमेवापतेत्। यस्तु वेदं नाधीतवान् तं लोकः पूर्वकाले अनिन्दच्च। सर्वोऽपि द्विजन्मा पूर्वकाले भीतस्सन् वेदाध्ययनं कुर्वन्नेवावर्तत। 'तस्मात् स्वाध्यायोऽध्येतव्यः' इति च श्रुतिः सम्यगेवामुमर्थं प्राह। मनुरपि "योऽनधीत्य द्विजो वेदान् अन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वं आशु गच्छति सान्वयः" इति निष्करुणमनधीयानस्य द्विजन्मनोऽपि शूद्रत्वमगदत्।

तत्र च आचार्यमुखादेव स्वरवर्णविपर्यासादिकं विना वेदाध्ययनं अवश्यं कार्यम्। स्वरादिविपर्यासेनाध्ययने तत्कर्मानुष्ठाने च फलेऽपि विपर्यासो भवेत्। अत एव पुस्तकनिरीक्षणादिना अध्ययनमपि निषिद्धम्। महाननर्थ आपतेदिति भिया जागरूका एव जनाः पूर्वमधीतवन्तः। मन्त्रोऽपि हि आचार्यमुखेनैवोपदेष्टव्य इति सम्प्रदायः। "यदृच्छया श्रुतो मन्त्रः छन्नेनाथ च्छलेन वा। पत्रेक्षितो वा व्यर्थस्स्यात् प्रत्युतानर्थदो भवेत्" इति हि वदन्ति। "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् इति पाणिनीयशिक्षायां विस्पष्टमिदमुक्तम्॥

अष्टवर्षस्य ब्राह्मणस्योपनयनानन्तरं श्रावण्यां अध्यायोपकर्म विधीयते। तदा स्वशाखाध्ययनप्रारम्भो भवति। सार्धान् चतुरो दक्षिणायनमासान् स्वपितृपितामहपरम्परया प्राप्तान् वेदान् अयं माणवकः अधीयीतेति विधिः। एष्वपि मासेषु शुक्लपक्षेषु वेदाध्ययनम्। कृष्णपक्षेषु तदङ्गाध्ययनमिति शास्त्रमर्यादा। मनुस्मृतौ च—

"श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान्॥" इति।
"अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत्।
वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु संपठेत्॥" इति च॥

### ६. अर्थज्ञानावश्यकता

एवं साङ्गस्य वेदस्याध्ययनात् अर्थज्ञानमपि कथञ्चिद्भवति। अर्थज्ञानं विना केवलस्य वेदस्य योऽध्ययनं करोति सः गर्दभसाम्यमेव लभत इति महान्तः प्रोचुः। "स्थाणुरयं भारवाहः किलाभूदधीत्य वेदान्न विजानाति योऽर्थं। योऽर्थज्ञ इत्सकलं भद्रमश्नुते स नाकमेति ज्ञानविधूतपाप्मा" इति अर्थज्ञानं विना अधीयानस्य स्थाणुतुल्यतां अर्थज्ञानेन सह अध्ययनशीलस्य सकलभद्रप्राप्तिं च प्रमाणं प्राह।

वेदस्याध्येयत्वे तदर्थज्ञानस्य सम्पाद्यत्वे च बहूनि प्रमाणानि सन्ति। तत्र वैदार्थज्ञानसंपादनं तु नातीव सुलभम्। अनन्ता हि वेदाः। अल्पमतीनामस्माकं दुर्ज्ञेय एव वेदार्थः। बाह्याः केचन वर्तन्ते ते तावत् वेदमेव नाभ्युपगच्छन्ति। कुदृष्टय इति परे विद्यन्ते। ते तु वेदमभ्युपगच्छन्ति। अर्थं तु अन्यथा वर्णयन्ति। अतः एते वेदाभ्युपगमेऽपि अन्यथाऽर्थकथनात् वेदबाह्यतुल्यास्सन्तः क्षेमं न प्राप्नुवन्ति। द्वौ पुरुषौ वनं जग्मतुः। तौ श्रमेणातीव पिपासातुरौ आस्ताम्। कश्चित् मृगतृष्णिकां जलमिति मन्यमानः तदादानार्थं जगाम। अन्ततः तदलाभेन काननमृगेण भक्षितः मृतोऽभवत्। अन्यस्तु तटाके वास्तवं जलमपश्यत्। तदादानाय समीचीनं तीरं न जगाम। तटाकतीर्थे कुमार्गेण गतवान्। तत्र च जले विद्यमानेन प्राणिना निहतः। एवं चोभावपि मृतौ। तथैव वेदमभ्युपगम्य वर्तमानोऽपि अयथार्थं यदि वदेत् सोऽपि वेदबाह्य तुल्य एवेति नोभौ भद्रमश्नुतः। तदुक्तं-"बाह्याः कुदृष्टय इति द्वितयेऽप्यपारं घोरं तमस्समुपयान्ति न हीक्षसे तान्। जग्धस्य काननमृगैः मृगतृष्णिकेप्सोः कासार सत्वनिहतस्य च को विशेषः?॥" इति। अतो यथा सनियमं वेदः अध्येयः तथा समीचीनमर्थज्ञानमपि प्राप्यं इति।

वेदस्य यथावस्थितार्थज्ञानमपि स्मृत्याद्युपबृंहणेनैव संपाद्यम्। तत्रापि स्मृतिरेव प्रथमं स्थानमधिरोहति। पराशरसूनुः सूत्रकारोऽपि 'स्मृतेश्च', 'स्मर्यतेऽपि च लोके' इत्येव वेदार्थविवरणे स्मृतिमेवाधिकं प्रमाणयति। 'आदौ वेदाः प्रमाणं स्मृतिरुपकुरुते सेतिहासैः पुराणैः" इति स्मृतेः प्राथम्यं उपबृंहणविषये आचार्याः वदन्ति। "आर्षं धर्मोप-

देशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः।।" इति तर्कस्याप्यवश्यापेक्षाऽस्ति। यदि च निखिलचराचरात्मनि भगवति श्रीमति नारायणे पुरुषोत्तमे समीचीना भक्तिः नाभविष्यत् तदा स्मृत्याद्युपबृंहणैरपि वेदानां सामीचीन्येनार्थज्ञानसंपादनं नाशक्ष्यत। "शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनं" इति सञ्जयः शास्त्रेभ्यः यथावदर्थज्ञाने भक्तिरेव मुख्यकारणमिति न्यगदत्। प्राहुश्च श्रीवत्साङ्कमिश्राः— "न्यायस्मृतिप्रभृतिभिः भवता निसृष्टैः वेदोपबृंहणविधौ उचितैरुपायैः। श्रुत्यर्थमर्थमिव भानुकरैः विभेजुः त्वद्भक्तिभावितविकल्मषशेमुषीकाः।।" इति।

ये तु ब्रह्मैकमेव सत्यं, जगन्मिथ्या, ब्रह्मणि गुणा अपि कल्पिताः अयमेवार्थः वेदान्तैरुच्यते इति वदन्ति, तेऽपि यथावस्थितं वेदार्थं न जानन्त्येव। किमत्र कारणं ? सगुणे अनवधिकातिशयानन्दे ब्रह्मणि भक्त्यभाव एव। अमुमर्थं श्रीभाष्यकारः महासिद्धान्तावसरे स्वयमेव वदति — "तदिदं औपनिषदपरमपुरुषवरणीयताहेतुगुणविशेषविरहिणां अनादिपापवासनादूषिताशेषशेमुषीकाणां... ... याथात्म्यविद्भिरनादरणीयं" इति।

## 7. अर्थनिश्चये उपकारकनिरूपणम्

अत्र वेदानामर्थनिश्चये उपकारकाणि दश। शीक्षा, व्याकरणं, छन्दः, निरुक्तं, ज्यौतिषं कल्पसूत्राणि, पुराणं, धर्मशास्त्रं, न्यायविस्तरः, मीमांसा च इतीमानि वेदेन धर्मे प्रमीयमाणे उपकारं जनयन्ति। तत्र शीक्षाव्याकरणछन्दो निरुक्तज्यौतिषकल्पसूत्राणि अङ्गानि। अवशिष्टानि उपाङ्गानि। पूजितपदार्थविचारे मीमांसाशब्दः प्रयुज्यते। मीमांसापदार्थं च उपरिष्टात् सविस्तरं विमृशामः। "शीक्षाव्याकरणं छन्दो निरुक्तं ज्यौतिषं तथा। कल्पश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः।।" इति केषाञ्चित् अङ्गत्वं, अन्येषां उपाङ्गत्वं च स्पष्टम्। वेदस्य स्वरूपपरिज्ञाने तदर्थप्रमितौ च यदुपयुज्यते तदङ्गं, इति सामान्यतः उच्यते। वैदिकवर्णपदवृत्तपरिच्छेदपराणि शीक्षाव्याकरणछन्दश्शास्त्राणि। पदार्थतद्विशेषप्रयोगव्युत्पादनप्रयोजनानि

निरुक्तज्यौतिषकल्पसूत्राणि । एतानि अङ्गानि । पुराणधर्मशास्त्र न्यायविस्तराः आपाततः प्रतीयमान वेदार्थव्यक्ति जनयन्ति । एतानि चोपाङ्गानि इति ज्ञेयम् ।

शीक्षादीनां उपयोगप्रकारं श्रीपराशरभट्टार्याः सम्यगन्वगृह्णन्—
"शीक्षायां वर्णशिक्षा पदसमधिगमो व्याक्रियानिर्वचोभ्यां
छन्दश्छन्दश्चितौ स्यात् गमयति समयं ज्यौतिषं रङ्गनाथ ।
कल्पेऽनुष्ठानमुक्तं ह्युचितगमितयोः न्यायमीमांसयोः स्यात्
अर्थव्यक्तिः पुराणस्मृतिषु तदनुगाः त्वां विचिन्वन्ति वेदाः ॥" इति

## 8. चतुर्दश विद्यास्थानानि

विद्यास्थानानि चतुर्दश गण्यन्ते शास्त्रेषु । वेदचतुष्टयं, अङ्गषट्कं उपाङ्गचतुष्टयं चेत्याहृत्य चतुर्दश । "अङ्गानि वेदाश्चत्वारः मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्याह्येताश्चतुर्दश ॥" इत्यस्मिन् विषये प्रमाणमुदाहरन्ति । विभीषणः रावणं प्रति सीताप्रत्यर्पणोपदेशसमये एवं प्राह— "विद्याश्चतुर्दश चतुर्षु निजाननेषु संबाधदुःस्थितवतीरवलोक्य वेधाः । तेभ्योऽपराणि नियतं दश ते मुखानि स्वस्य प्रणन्तुरकरोत्स कथं जडोऽसि ?" इत्येवं कविः विद्यास्थानानि चतुर्दश इतीममर्थं भङ्ग्यन्तरेणावोचत् । एवं नैषधेऽपि—अधोति बोधाचरणप्रचारणैः दशाश्चतस्रः प्रणयन्नुपाधिभिः । चतुर्दशत्वं कृतवान् कुतः स्वयं न वेद्मि विद्यासु चतुर्दशस्वयम् ॥ इति ॥ इमानि च विद्यास्थानानि वेदः स्वयमेवोवाच—"तत्रापरा ऋग्वेदो यजुर्वेदस्सामवेदोऽथर्ववेदः शीक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति" इति मुण्डकोपनिषदि (प्र.ख.), तस्यैतस्य महतो भूतस्य निःश्वसितं यदृग्वेदो यजुर्वेदः सामवेदः शिक्षाकल्पो व्याकरणं निरुक्तं छन्दोविचितं ज्योतिषामयनं न्यायो मीमांसा धर्मशास्त्राणि व्याख्यानान्युपव्याख्यानानि इति सुबालोपनिषदि (द्वि.ख), "सहोवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं...सर्वं देवजनविद्यां एतद्भगवोऽध्येमीति" छान्दोग्ये (स.प्र.)। अतो वेदवेदाङ्गादीनां स्वरूपं वेद एवोक्तं स्पष्टमिति नात्र इतरमतस्थानां विचारस्यावकाशो विद्यते ॥

### 9. स्मृतिः

याज्ञवल्क्यस्मृतिः आपस्तम्बसूत्रं मनुस्मृतिः इत्येवं स्मृतयः बह्वयः सन्ति। तत्र मन्वादिस्मृतयः वेदे पूर्वभागोत्तरभागरूप-उभयांशविवरणरूपाः। याज्ञवल्क्यस्मृत्यादयः प्राधान्येन पूर्वभाग-मात्रोपबृंहणरूपाः। कपिलादिस्मृतयस्तु अत्र कुत्राप्यवकाशं न लभन्ते। "स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोष प्रसङ्गा"दिति सूत्रकारो व्यास एव कपिलादिस्मृतिं निराचक्रे।

न चेदं निराकरणं उत्तरभागमात्रविषयकमिति मन्तव्यम्। यतस्तैः कपिलादिभिः परमात्मानङ्गीकारेण तत्स्मृतिभिः तदाराधनभूतकर्म-प्रतिपादनं दुर्घटं भवति। अतः तत्स्मृतीनां उभयात्राप्यवकाशो न विद्यत एव। अपि चैतेषामाप्ततमत्वं नास्ति। यथार्थद्रष्टा यथार्थ-वक्ता चैव ह्याप्ततमः। अन्यतरस्तु केवलमाप्त एव। कश्चित् यथा-ऽवस्थितं तत्वं न पश्यति। स्वदृष्टप्रकारेण विप्रलम्भं विना अन्यस्मै ब्रूते। कश्चित्तु यथाऽवस्थितमेव तत्वं जानन्नपि विप्रलम्भादिहेतोः अन्यथा ब्रूते। उभावपि तौ नाप्ततमौ। यस्तु भ्रमप्रमादौ विना यथा-ऽवस्थितं तत्वं पश्यति। स्वदृष्टप्रकारेण विना विप्रलम्भञ्चेतरस्मै गदति स एवाप्ततमः। कपिलादयस्तु यथादृष्टार्थवादिनोऽपि न यथा-ऽवस्थितार्थवेत्तारः। 'ऋषिं प्रसूतं कपिलं महान्तं' इति श्रुतिरपि यथादृष्टार्थवादित्वमात्रमुपजीव्य महत्वमुवाच। इममर्थं मनसि निधा-यैव 'इतरेषां चानुपलब्धेः' इति सूत्रितं बादरायणेन। अतः कपि-लादयः योगाभासनिरताः न समीचीनार्थावेदकयोगतत्परा इति न समीचीनार्थविषयकज्ञानवन्तः। समीचीनयोगमहिम्ना वेदार्थं यथा-वस्थितं स्मृत्वा यो योगी उपबृंहणं करोति तदुक्तिरेव स्मृतिशब्द-वाच्या।

ननु, 'ऋषिं प्रसूत'- इति श्रुतेः यस्येयं वसुधा कृत्स्ना वासु-देवस्य धीमतः। कापिलं रूपमास्थाय धारयत्यनिशं धरां', "ददृशुः कपिलं तत्र वासुदेवं सनातनं" इति सरस्वतीवल्लभचतुर्मखानुग्रह-लब्ध याथात्म्यज्ञानवतः रहस्यप्रकाशवृत्त सर्वांशवेदिनः करबदरसमानं

सर्वं धर्मवीर्येण सम्प्रेक्ष्य गदतो वाल्मीकिमुनेरुक्तेश्च कथं महात्मनः कपिलस्याभासयोगवत्त्वं ? कथंतराञ्च तत्प्रणीत स्मृतेरप्रामाण्यमिति-चेत् उच्यते । सरस्वतीवल्लभेन प्रजापतिना तदीययोगमहिम्ना दृष्टं योगशास्त्रमेव ह्यप्रमाणमित्युच्यतेऽस्माभिः । तदुक्तं, 'एतेन योगः प्रत्युक्तः' इति सूत्रकृता । सति चैवं तदनुग्रहलब्धविश्वत्ववतः वाल्मीकेः वचनं कथं प्रमाणं ? अस्तु वा तदीयवचनस्य प्रमाण्यम् । अथापि न तस्याप्ततमत्वं कण्ठोक्तमिति न दोष इति ।

ननु तस्य वासुदेवांशत्वस्य कण्ठोक्तत्वात् कथं तदीययोगस्य आभासत्वं, कथं वा न यथार्थद्रष्टृत्वं इति चेत्—स्वतस्सर्वज्ञेन वासुदेवेन कथं समानाधिकरणं ? अभिनयेनेति चेत् अयथार्थवेदित्वमप्यभिनय एवेत्यवेहि ।

ननु वस्तुतस्तस्य यथार्थवेदित्वमस्ति वा न वा ? नो चेत् कथं वासुदेवावतारत्वं ? अस्ति चेत् कथमनाप्ततमत्वं ? इति चेत्—सत्य-मेतत् । यथार्थवेदित्वस्य वस्तुतस्सत्वेऽपि यथादृष्टार्थवादित्वरूपस्य तस्याभावेन अनाप्ततमत्वमिति तत्प्रणीतस्मृतेः अप्रामाण्यमिति जानीहि । न हि जनेषु कृपालुः सर्वज्ञो भगवान् अयथावस्थितमर्थं ब्रूयात् इति न मन्तव्यम् । अवतारेषु अभिनयेन अनेकेषां भ्रमोत्पाद-नात् । अत एव सीतावियोगतज्जनितश्रमादिनानाविधदुःखाभिनयं करोत्यवतारेषु । "यत्तु स्वेच्छावतारेष्वभिनयति तदप्यासुरोपप्लवार्थं" इति चोक्तम् । "स्त्रीसङ्गिनां गतिरिति प्रथयाञ्चकार" इति च । सर्व हेतुभूतस्य तस्य पापिनां मोहं प्रत्यपि जनकत्वात् सर्वमिदं सुष्ठूपपन्नं भवति । तदुक्तं, "स्मर्ता श्रुत्यैव गीतः कपिलऋषिरसौ...इत्यादौ ।

## 10. पुराणानि

पुराणानि त्वष्टादश । सात्विकानि षट्, राजसानि षट्, ताम-सानि षट् । विष्णु, नारद, भागवत, गारुड, पाद्म, वाराह, पुराणानि सात्विकानि । ब्रह्माण्ड, ब्रह्मवैवर्तक, मार्कण्डेय, भविष्यत्, वामन,

## 9. स्मृतिः

याज्ञवल्क्यस्मृतिः आपस्तम्बसूत्रं मनुस्मृतिः इत्येवं स्मृतयः बह्वयः सन्ति। तत्र मन्वादिस्मृतयः वेदे पूर्वभागोत्तरभागरूप-उभयांशविवरणरूपाः। याज्ञवल्क्यस्मृत्यादयः प्राधान्येन पूर्वभाग-मात्रोपबृंहणरूपाः। कपिलादिस्मृतयस्तु अत्र कुत्राप्यवकाशं न लभन्ते। "स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोष प्रसङ्गा"दिति सूत्रकारो व्यास एव कपिलादिस्मृतिं निराचक्रे।

न चेदं निराकरणं उत्तरभागमात्रविषयकमिति मन्तव्यम्। यतस्तैः कपिलादिभिः परमात्मानङ्गीकारेण तत्स्मृतिभिः तदाराधनभूतकर्म-प्रतिपादनं दुर्घटं भवति। अतः तत्स्मृतीनां उभयात्राप्यवकाशो न विद्यत एव। अपि चैतेषामाप्ततमत्वं नास्ति। यथार्थद्रष्टा यथार्थ-वक्ता चैव ह्याप्ततमः। अन्यतरस्तु केवलमाप्त एव। कश्चित् यथा-ऽवस्थितं तत्वं न पश्यति। स्वदृष्टप्रकारेण विप्रलम्भं विना अन्यस्मै ब्रूते। कश्चित्तु यथाऽवस्थितमेव तत्वं जानन्नपि विप्रलम्भादिहेतोः अन्यथा ब्रूते। उभावपि तौ नाप्ततमौ। यस्तु भ्रमप्रमादौ विना यथा-ऽवस्थितं तत्वं पश्यति। स्वदृष्टप्रकारेण विना विप्रलम्भञ्चेतरस्मै गदति स एवाप्ततमः। कपिलादयस्तु यथादृष्टार्थवादिनोऽपि न यथा-ऽवस्थितार्थवेत्तारः। 'ऋषिं प्रसूतं कपिलं महान्तं' इति श्रुतिरपि यथादृष्टार्थवादित्वमात्रमुपजीव्य महत्वमुवाच। इममर्थं मनसि निधा-यैव 'इतरेषां चानुपलब्धेः' इति सूत्रितं बादरायणेन। अतः कपि-लादयः योगाभासनिरताः न समीचीनार्थविदकयोगतत्पराः इति न समीचीनार्थविषयकज्ञानवन्तः। समीचीनयोगमहिम्ना वेदार्थं यथा-वस्थितं स्मृत्वा यो योगी उपबृंहणं करोति तदुक्तिरेव स्मृतिशब्द-वाच्या।

ननु, 'ऋषिं प्रसूत'– इति श्रुतेः यस्येयं वसुधा कृत्स्ना वासु-देवस्य धीमतः। कापिलं रूपमास्थाय धारयत्यनिशं धरां', "ददृशुः कपिलं तत्र वासुदेवं सनातनं" इति सरस्वतीवल्लभचतुर्मखानुग्रह-लब्ध याथात्म्यज्ञानवतः रहस्यप्रकाशवृत्त सर्वांशवेदिनः करबदरसमानं

सर्वं धर्मवीर्येण सम्प्रेक्ष्य गदतो वाल्मीकिमुनेरुक्तेश्च कथं महात्मनः कपिलस्याभासयोगवत्त्वं ? कथंतराञ्च तत्प्रणीत स्मृतेरप्रामाण्यमिति-चेत् उच्यते । सरस्वतीवल्लभेन प्रजापतिना तदीययोगमहिम्ना दृष्टं योगशास्त्रमेव ह्यप्रमाणमित्युच्यतेऽस्माभिः । तदुक्तं, 'एतेन योगः प्रत्युक्तः' इति सूत्रकृता । सति चैवं तदनुग्रहलब्धविभववतः वाल्मीकेः वचनं कथं प्रमाणं ? अस्तु वा तदीयवचनस्य प्रमाण्यम् । अथापि न तस्याप्ततमत्वं कण्ठोक्तमिति न दोष इति ।

ननु तस्य वासुदेवांशत्वस्य कण्ठोक्तत्वात् कथं तदीययोगस्य आभासत्वं, कथं वा न यथार्थद्रष्टृत्वं इति चेत्–स्वतस्सर्वज्ञेन वासुदेवेन कथं समानाधिकरणं ? अभिनयेनेति चेत् अयथार्थवेदित्वमप्यभिनय एवेत्यवेहि ।

ननु वस्तुतस्तस्य यथार्थवेदित्वमस्ति वा न वा ? नो चेत् कथं वासुदेवावतारत्वं ? अस्ति चेत् कथमनाप्ततमत्वं ? इति चेत्—सत्य-मेतत् । यथार्थवेदित्वस्य वस्तुतस्सत्त्वेऽपि यथादृष्टार्थवादित्वरूपस्य तस्याभावेन अनाप्ततमत्वमिति तत्प्रणीतस्मृतेः अप्रामाण्यमिति जानीहि । न हि जनेषु कृपालुः सर्वज्ञो भगवान् अयथावस्थितमर्थं ब्रूयात् इति न मन्तव्यम् । अवतारेषु अभिनयेन अनेकेषां भ्रमोत्पाद-नात् । अत एव सीतावियोगतज्जनितश्रमादिनानाविधदुःखाभिनयं करोत्यवतारेषु । "यत्तु स्वेच्छावतारेष्वभिनयति तदप्यासुरोपप्लवार्थं" इति चोक्तम् । "स्त्रीसङ्गिनां गतिरिति प्रथयाञ्चकार" इति च । सर्व हेतुभूतस्य तस्य पापिनां मोहं प्रत्यपि जनकत्वात् सर्वमिदं सुष्ठूपपन्नं भवति । तदुक्तं, "स्मर्ता श्रुत्यैव गीतः कपिलऋषिरसौ...इत्यादौ ।

## 10. पुराणानि

पुराणानि त्वष्टादश । सात्विकानि षट्, राजसानि षट्, ताम-सानि षट् । विष्णु, नारद, भागवत, गारुड, पाद्म, वाराह, पुराणानि सात्विकानि । ब्रह्माण्ड, ब्रह्मवैवर्तक, मार्कण्डेय, भविष्यत्, वामन,

ब्राह्म पुराणानि राजसानि । मात्स्य, कौर्म, लिङ्ग, शैव, स्कान्द, आग्नेय पुराणानि तामसानि ।

"नारायणं परं यान्ति वदन्ति जगदीश्वरम् ।
तानि सर्वाणि शास्त्राणि सात्विकानि मतानि वै ॥"

इति सात्विकपुराणानां लक्षणं प्रतिपादितम् ।

"चतुर्मुखं कृशानुं तु तथा देवीं सरस्वतीम् ।
परत्वेन वदेत् शास्त्रं राजसं संप्रचक्षते ॥"
"मल्लिङ्गदुर्गविघ्नेशकुमारप्रमुखान्सुरान् ।
प्रशंसन्ति च यच्छास्त्रं तत्तामससमुदाहृतम् ॥ इति राजस तामसयोश्च लक्षणं उक्तम् ॥ अत्र सात्विकपुराणस्यैव श्रैष्ठयं, अन्ययोः जघन्यत्वञ्च, "तामसं दुर्गतिं दत्ते राजसं स्वर्गदं भवेत् । सात्विकं मोक्षसाम्राज्यधौरन्धर्यं ददात्यहो ॥" इत्यनेन प्रत्यपादि ।

पराशरसुतो व्यासः किमर्थमेवं विभज्य अष्टादशपुराणानि चक्रे? सात्विकपुराणमात्रं किमर्थं नाकार्षीत् ? एवं मतिभेदजनकं पुराणं प्रकल्प्य किमिति वा जनान् व्यामोहयति ? इति न शङ्कयम् । अनन्तेषु वेदेषु क्वचिदिन्द्रस्य प्राधान्यमुच्यते, क्वचिच्च शिवस्य, अन्यत्र विष्णोश्च । स्वर्गादिजनकं कर्म च क्वचिदुच्यते अन्यत्र कर्तुरनिष्टजनकं आभिचारिकं कर्मापि । मातापितृसहस्रेभ्योऽपि वत्सलतरं शास्त्रमेवमुपदिश्य नरान् किमर्थं प्रलोभयति । तस्य तस्य जन्मान्तराधीन पुण्यपापवशेन तत्र तत्र प्रवृत्त्यर्थमिति चेत्स समाधिः तुल्यः अत्रापि । "यावानर्थ उदपाने सर्वतस्संप्लुतोदके । तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥" इति रीत्या तत्तदपेक्षितकर्मसु स्वाभीष्टदेवेषु प्रवृत्त्यर्थं तथातथोच्यते । बुद्धिमान् हि जनः समीचीनमर्थं आचार्यमुखात्प्राप्य सुहृद्भिः गते पथि गन्तुं प्रवर्तते । यस्तु न समचीनमर्थं जानाति ज्ञात्वापि कुपथाभिलाषी, स अनिष्टं कर्म कृत्वा भ्रश्यति । न परलोकं विन्दति ।

वस्तुतस्तु—लोके एकैकस्यापि सत्वरजस्तमोरूपगुणत्रयं विद्यते। यदा सत्वाभिवृद्धिः, तदा सत्कार्यं करोति। अन्यदा असत्कर्म। पुराणकृदपि सत्वगुणाभिवृद्धिसमये सात्विकपुराणान्यकरोत्। अन्यदा अन्यपुराणानि। "सात्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः। तेष्वेव योगसंसिद्धाः गमिष्यन्ति परां गतिम्॥" इत्ययमर्थः सम्यगेव प्रतिपादितः।

श्रीमद्रहस्यत्रयसारे वेदान्ताचार्यैः परदेवतापारमार्थ्याधिकारे अयमर्थः सम्यगनुगृहीतः।

"यस्मिन्कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा। तस्य तस्य च माहात्म्यं तत्स्वरूपेण वर्ण्यते" इति। तत्स्वरूपेण-तत्तत्कल्पोद्भूत सात्विकत्वराजसत्वादिस्वभावेन। अत्र 'ब्रह्मणा' इत्यस्य 'तत्तद्गुण-मयेन ब्रह्मणा' इति श्रुतप्रकाशिकायां व्याख्यानं कृतम्। ततश्च सात्विककल्पेषु ब्रह्मणः सत्वगुणाधिक्यात् तादृशाभिवृद्धसत्वगुणविशि-ष्टेन चतुर्मुखेन कृतानां सात्विकपुराणानां हरिमाहात्म्यप्रतिपादकानां श्रैष्ठ्यं, इति तादृशपुराणनिष्ठाः परां गतिं प्राप्नुवन्तीत्युक्तं भवति।

"अष्टादशपुराणानां कर्ता सत्यवतीसुतः" इति सर्वपुराणानां अपि पाराशर्यः कर्ता इति प्रतीयते। "पुराणं ब्रह्मणा पुरा" इति वचनेन तु प्रजापतिः कर्ता इति ज्ञायते। कथमिदं वचनद्वयं अविरोधि सङ्गच्छते? प्रसिद्धाष्टादशपुराणव्यतिरिक्तानि बहूनि पुराणान्यासन्। सम्प्रति तु तानि लुप्तानि। तान्येव पुराणानि भगवान् प्रजापतिः चकारेति केचिद्वदन्ति। अन्ये तु अष्टादशपुराणव्यतिरिक्तपुराणानां सर्वथा अप्रसिद्धेः सर्वेषामप्यविशेषेण लुप्तत्वोक्तेः साहसत्वाच्च प्रसिद्ध-पुराणान्येव ब्रह्मणा कृतानि तान्येव च प्रवचनविधौ व्यासेनानीतानि। 'कर्ता सत्यवतीसुतः' इत्यत्र कर्ता—प्रवचनकर्ता इत्युक्तौ अविरोधश्चेति वदन्ति।

वयं तु ब्रूमः — सृष्टिकाले सर्वाणि पुराणानि प्रजापतिनैव सृष्टानि । परन्तु योगमाहात्म्यात् पराशरसुतः सर्वाणि ददर्श । अनेन दृष्टत्वमुपजीव्यैवास्य कर्तृत्वव्यवहारः । स्थितामेव गायत्रीं विश्वामित्रः ददर्श । दृष्टमन्त्रकाणां ऋषीणां मन्त्रकृत्वव्यपदेशः बहुलं वेदेषु दृश्यते "नम ऋषिभ्यो मन्त्रकृद्भ्यः" इति । द्राविडदिव्यप्रबन्धाः अपि पूर्वं स्थिता एव दिव्यसूरिभिः योगमहिम्ना दृष्टा इति हेतोः दिव्यसूरय एव तत्कर्तारः इति व्यपदिशामः । तदुक्तमेवमेव महद्भिः "ऋषिं जुषामहे कृष्णतृष्णातत्त्वमिवोदितम् । सहस्रशाखां योऽद्राक्षीत् द्रामिडीं ब्रह्मसंहिताम् ॥" इति, तथात्रापि । अतो व्यासः परब्रह्मयोगमहिम्ना पूर्वं प्रजापतिनोक्तं, लुप्तमपि साक्षात्कृत्य पुराणं जनानामाविश्चकारेति निरवद्यम् ।

## 11. व्यासार्याः

एते च पराशरपुत्राः शक्तेः पौत्राः, वसिष्ठनप्तारः शुकब्रह्मर्षेः पितृभूताः, "यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्" इति प्रसिद्धमहाभारतनिर्मातारः, "कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् । को ह्यन्यो भुवि मैत्रेय महाभारतकृद्भवेत् ॥" इति नारायणावतारभूताः, "महर्षेः कीर्तनात्तस्य भीष्मः प्राञ्जलिरब्रवीत्" इति कुरुवृद्ध पितामहानां भीष्माचार्याणां भगवत्सङ्कल्पमप्यन्यथयितुं समर्थानां अमोघसङ्कल्पानां पूजाविषयभूताः 'वेदव्यासः' इति विरुदभाजः कृष्णद्वैपायनादिशब्दैः व्यवह्रियमाणाः वेदान्तसंप्रदायप्रवर्तकाः अनितरसाधारणशेमुषीभाजः संसाराग्निविदीपनव्यपगतप्राणात्मसञ्जीविनीभूतस्य उपनिषद्दुग्धाब्धिमध्योद्धृतवचोऽमृतस्य वर्षुकाः, "स होवाच व्यासः पाराशर्यः" इति श्रुतिप्रसिद्धवैभवाः, विद्वद्भिः पामरैश्चातिश्लाघनीयावतारविशेषाश्च । 'श्रुतिर्विभिन्ना स्मृतयोऽपिभिन्नाः तथा ऋषीणां मतयोऽपि भिन्नाः । नको ऋषिर्यस्य मतं प्रमाणं महाजनो येन गतस्स पन्थाः' ॥ इति स्थितेऽपि सर्वा अपि श्रुतीः सम्यक् परामृश्य इदमेव परतत्वं इति निर्धारणे चतुराः स्वपितर इव । एतेषां पितृपादाः

पराशराः "देवतापरमार्थ्यं च यथावद् वेत्स्यते भवान् । पुलस्त्येन यदुक्तं ते सत्यमेतद्भविष्यति ॥" इति पुलस्त्यवसिष्ठ वरप्रदानलब्ध-पारमार्थ्यज्ञानवन्तः, "तत्वेन यः ...... पराशराय" इति व्यवह्रिय-माणैः यामुनार्यैः स्तोत्ररत्ने प्रशंसिताः श्रीवेदान्तार्यैः स्वकीये रहस्य-त्रयसारे श्लाघिताश्च ।

अपि चेमे व्यासार्याः श्रुत्यादिभिरवधृतं परतत्वं सुनिश्चित्य मनसि बहुप्रकारेणालोच्य निर्भयं निर्लज्जं च करद्वयमुपर्युद्धृत्य श्रीमन्नारायण एव परतत्वभूतः इति उच्चैः उद्घोषितवन्तः । तैः घोषितोऽयं श्लोकः—

"सत्यं सत्यं पुनस्सत्यं उद्धृत्य भुजमुच्यते ।
वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम् ॥" इति ।

श्लोकमिमं मनसि निधाय श्रीमान्वेङ्कटनाथः स्वकृतसङ्कल्पसूर्योदयनाटके प्रथमाङ्के एवं प्राह—

"शास्त्राण्यालोड्य सर्वाण्यशिथिलगतिभिः युक्तिवर्यैः विचार्य
स्वान्तर्निर्धार्य तत्वं स्वभुजमपि महत्युद्धरन् सूरिसङ्घे ।
सत्यं सत्यं च सत्यं पुनरिति कथयन् सादरं वेदवादी
पाराशर्यः प्रमाणं यदि क इह परः केशवादाविरस्ति ॥" इति ।

अपि चैते विशकलितान्यनन्तानि वेदवाक्यानि दृष्ट्वा जनोप-कारार्थमनुकम्पया स्वयोगमाहात्म्येन यथावत्सङ्कलय्य विभक्तान् चक्रुः सर्वानपि वेदान् । अत एव 'वेदव्यासः' इति बिरुदमभजन् । यथोक्तं—

"दुर्भगांश्च जनान् वीक्ष्य मुनिर्दिव्येन चक्षुषा ।
सर्ववर्णाश्रमाणां यत् दध्यौ हितममोघकृत् ॥
चातुर्होत्रं कर्म शुद्धं प्रजानां वीक्ष्य वैदिकम् ।
व्यदधात् यज्ञसन्तत्यै वेदमेकं चतुर्विधम् ॥

ऋग्यजुस्सामाथर्वाख्याः वेदाश्चत्वार उद्धृताः ।
इतिहासपुराणं च पञ्चमो वेद उच्यते ।।
एवं चकार भगवान् व्यासः कृपणवत्सलः ।।
विव्यास वेदान् यस्मात्सः तस्मात् व्यास इति स्मृतः ।
वेदव्यास इति प्रोक्तः पुराणे च स्वयंभुवा ।। इति ।।

अगाधहृदयानामेतेषां कृतयोऽप्यगाधहृदयाः परिचितगहनाश्च यथा समुद्रे निमज्ज निमज्य रत्नानि गृह्णीयुः तथा एतत्कृतिसागरं निमज्य विलक्षणार्थरत्नजातानि बुधः आददीत । आपाततो निरीक्षणे अतिसरला इव कृतयः परिदृश्येयुः । सूक्ष्मेक्षिकया मनोऽवधार्य अर्थपरिशीलने वाङ्मनसागोचराणि अर्थजातानि बहूनि लभ्येरन्। एतच्च अनुदिनं एतत्कृतसूत्रपारायणं कुर्वद्भिः स्पष्टमनुभूयेत । आपाततः एतत्कृतौ प्रवेशे सुलभतोऽर्थज्ञानसंभवमुपजीव्यैव सर्वेऽपि मतस्थाः एतद्विरचितब्रह्मसूत्रव्याख्यानकरणे प्रावर्तन्त । केचिदेव तु एतदाशयं यथावस्थितं यथावत् ज्ञातुं शक्ता भवन्ति । महाभारते विदुषामपि दुर्ग्रहाशयाः बहवः श्लोकाः सन्तीति अद्यापि वृद्धाः विदामासुः । 'व्यासगुड्डु' इति सुप्रसिद्धं च भाषान्तरे । अतः एतेषां ग्रन्थकरणशैली अन्यादृशी, अतीव संग्रहेण सुगूढश्च स्वाशयमाविष्कुर्वन्त्येते, संक्षेपेण च तत्तद्वेदार्थान् परिशीलयन्ति ।

अपि चैतेषां जन्मरहस्यमत्यद्भुतमत्र किञ्चिदनुसन्धीयते । यदनुसन्धीयमानं सर्वानपि जनान् पुनीते ।

उपरिचरो नाम राजा वसुः अत्यद्भूतं अतिघोरं तपश्चचार । भीताः शक्रपुरोगाः देवाः तं सान्त्ववाचा सन्निवर्त्य वरं च ददुः । अत्याश्चर्यं राज्यं आकाशगं च विमानं इन्द्रः प्रीतस्सन् तस्मै अदात् । सः सर्वानपि भूमिपतीनतिशय्य अतिबलवान् रराज । स्वपुरोपवाहिनीं शुक्तिमतीं नदीं कोलाहलो नाम गिरिः अरौत्सीदिति कुपितः कोलाहलेन तं गिरिं पादेन प्रताड्य तत्र जातेन प्रहारविवरेण नदीं जगाम । स च

पतिः तस्यां नद्यां एकं कुमारं एकां कन्यां च जनयित्वा तस्मै प्रत्य-दिशत् । राजा च कुमारं सेनापतिं चकार। गिरिकाञ्चनां कन्यां स्वयं उपयेमे । कदाचित्स्वपत्नीऋतुकाले मृगयार्थगमनमापतितम् । अथ कामपीडितेन स्वपत्नीसक्तमनसाऽनेन खिन्नेन स्कन्नमात्रं स्वरेतः वृक्षपत्रे प्रच्छाद्य सद्यः आगताय श्येनाय पक्षिणे, यथेदं वीर्यममोघं भवेत्तथा त्वया कार्यं, शीघ्रं च गत्वा मद्भार्यायै देयं इत्युक्त्वा प्रदिष्टम्। स च श्येनः अन्येन श्येनेन मांसबुद्ध्या अभिहतः ताडितश्च यमुनायां सवीर्यं पत्रं प्राक्षिपत्। श्येनपादपरिभ्रष्टं वसुसंबन्धितद्वीर्यं मत्स्यरूपिणी अद्रिका नाम अप्सराः अभक्षयत् । कदाचित् मत्स्यजीविभिः गृहीता एकं पुमांसं एकां तरुणीं च प्रासूत । विदितोदन्तः उपरिचरवसुर्नाम राजा पुत्रं स्वीकृत्य कन्यां दाशायैव कन्यात्वेनादात् । तस्य 'सत्य-वती'ति नाम चकार दाशः । अस्याः मत्स्यगन्धी वासवी इति च नामाभूत् ।

स्वपितुर्दाशस्य नावं वाहयन्तीं इमां रम्भोरुं दिव्यां कन्यां तीर्थ-यात्रया पर्यटन् पराशरश्चकमे । तस्यां वंशकरं सुतं च ययाचे। तया ऽनुमतः पराशरः मत्स्यगन्धां योजनगन्धां चकार। पार्श्वस्थैरनुपलंभार्थं सलज्जायाः अस्याः कामपूर्त्यर्थं च तमः सृष्ट्वा तस्यां गर्भमदधात् । जज्ञे च पाराशर्यः । यमधिकृत्येमे श्लोकाः प्रवृत्ताः ।

"पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा ।
जज्ञे च यमुनाद्वीपे पाराशर्यः स वीर्यवान् ।।

स मातरमनुज्ञाप्य तपस्येव मनो दधे ।
स्मृतोऽहं दर्शयिष्यामि कृत्येष्विति च सोऽब्रवीत् ।।

न्यस्तो द्वीपे स यद्बालः तस्मात् द्वैपायनः स्मृतः ।।" इति ।

"अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।
अफाललोचनः शम्भुः भगवान् बादरायणः ।।" इति च ।

अथ तया प्रार्थितः पराशरः तां योजनगन्धीं पुनः कन्यां चकार। यदस्यां शन्तनोः चित्राङ्गदचित्रवीर्यौ जातौ। एवं समुत्पन्नस्य व्यासार्यस्य माहात्म्यं वाचामगोचरम्। एतेषामुत्पत्तिप्रकारस्त्वन्यथा न चिन्त्यः। "मृगीणां पक्षिणां चैव अप्सराणां तथैव च। शूद्रयोन्यां च जायन्ते मुनयो वेदपारगाः। ऋष्यश्रृङ्गो मृगीपुत्रः कण्वो बर्हिसुतस्तथा। अगस्त्यश्च वसिष्ठश्च उर्वश्यां जनितावुभौ॥ सोमश्रवास्तु सद्यां तु अश्विनावश्विसंभवौ। स्कन्दः स्कन्नेन शुक्लेन जातः शरवणे पुरा। एवमेव च देवानां ऋषीणां चैव संभवः। लोकवेदप्रवृत्तिर्हि न मीमांस्या बुधैस्सदा॥ इति हीमान् स्तुवन्ति।

भगवन्तमिमं वेदव्यासं बादरायणमित्यनुस्मरन्ति। "लक्ष्मीं वक्षसि मस्तके च मकुटं रम्यं जटामण्डलं (कलितं) चिन्मुद्रामपि पुस्तकं च करयोः चक्रं शिरस्युज्वलम्। बिभ्राणः पुरतः कमण्डलुयुतः कूर्मस्थपद्मासनः वेदव्यासमुनिः प्रसन्नवदनः चित्ते विधत्तां पदम्॥" इति॥

एतेषां व्यासार्याणां पुत्रः श्रीशुकः। यमधिकृत्यामुं श्लोकं पठन्ति—

"यं प्रव्रजन्तमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव।
पुत्रेति तन्मतया तरवो विनेदुः तं सर्वभूतसुहृदं मुनिमानतोऽस्मि"॥इति।

मेरुश्रृङ्गे कर्णिकाकारवने पार्वत्या विहरन्तं परमशिवमुद्दिश्य पुत्रार्थं तपश्चरतः तत्प्रसादेन शुकीभूतां घृताचीमप्सरसं अवेक्ष्य कामातुरस्य व्यासस्यारणिमन्थनकाले देहाद् विमुक्तादरण्यां पतितात् वीर्यात् श्रीशुकः प्रादुर्भूतः इति पुराणकथा। अतिमेधाविनः सर्वविषयमपि जानतोऽपि स्त्रीपुरुषभेदानभिज्ञस्य अस्य पुत्रस्य वियोगादतीव खिन्नो बभूव एतत्पिता व्यासः। पुत्रशोकं सर्वात्मना असहमानः "छायां स्वपुत्रसदृशीं सर्वतोऽनपगां सदा। द्रक्ष्यसे त्वञ्च लोकेऽस्मिन् मत्प्रसादान् महामुने॥" इति परमेश्वरप्रसादात् लब्धछायाशुकः परमां मुदं लेभे।

एवं मनुष्यसजातीयतया अवतीर्णस्य तथैव कर्म कुर्वाणस्यापि वेदविभागकरण पुराणेतिहासनिर्माण वेदान्तार्थोपबृंहणरूपसूत्रग्रथनाद्यनेकविधातिमानुषकृत्यदर्शनेन के वा न प्रशंसेयुः इममाचार्यवर्यम् । "सूत्रकृद्वावदूकः" इति सूत्रप्रणयने अस्य सामर्थ्यमवेक्ष्य श्रीवेङ्कटनाथः अश्लाघत ।।

## 12. उपनिषत्

वेदवेदान्तभेदेन सर्वा अपि श्रुतीः द्विविधाः विभजन्ते । ऋग्वेदः, यजुर्वेदः सामवेदः अथर्वणवेदः इति वेदाः चत्वारो भवन्ति । वेदचरम भागरूपाः वेदान्तास्तु उपनिषच्छब्देनाभिधीयन्ते । अष्टोत्तरशत संख्याकाः उपनिषदः । अष्टाविंशति संख्याकाः इत्यपि केचिद्वदन्ति । दशैवोपनिषदः प्रसिद्धाः सर्वत्रोदाह्रियन्ते । यद्यप्युपनिषदां संख्या अष्टोत्तरशतमेव । अथापि अष्टोत्तरशतसंख्याभ्यः उपनिषद्भ्यः अष्टाविंशति संख्याका उपनिषदः मुख्यभूताः । ताभ्योऽप्युपनिषद्भ्यो दशसंख्याकाः उपनिषदः अत्यन्तं मुख्यभूताः गण्यन्ते । अत एव दशोपनिषद एव सर्वत्राधिकं उदाहरणतां भजन्ते । ताश्चोपनिषदः "ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः । एतेरेयं च छान्दोग्यं बृहदारण्यकं दश।।" इति प्रसिद्धाः । एकैकस्यापि वेदस्य शाखाः सन्ति । ऋग्वेदस्य—ऐतरेयब्राह्मणान्तर्गतं ऐतरेयं, यजुर्वेदस्य—शुक्लयजुस्संहितायाः चत्वारिंशदध्यायात्मिकायाः चरमोऽध्यायः ईशावास्योपनिषत्, शुक्लयजुर्वेदीयस्यकाण्वमाध्यन्दिनभेदेन द्विविधस्य शतपथब्राह्मणचरमभागः बृहदारण्यकोपनिषत्, कृष्णयजुर्वेदीयकठशाखान्तर्गता कठोपनिषत्, कृष्णयजुर्वेदीय तैत्तिरीयशाखायाः ब्राह्मणचरमभागरूपा तैत्तिरीयोपनिषत्; सामवेदस्य छान्दोग्यं, केनोपनिषच्च; अथर्वणवेदस्य तु प्रश्नोपनिषत्, मुण्डकोपनिषत्, माण्डूक्योपनिषच्च ।

उप निषीदति—अव्यवधानेन नित्यं समन्वेतीत्युपनिषत् । अद्वारक भगवत्प्रतिपादकवेदभागः उपनिषच्छब्दार्थः । पूर्वोत्तरभागद्वयात्मके

वेदे पूर्वभागः न साक्षात् ब्रह्म प्रतिपादयति । तदेवाग्निस्तद्वायुः तत् सूर्यस्तदु चन्द्रमाः'' इत्यादौ अग्न्यादिशब्दाः न साक्षात् परमात्मानं बोधयितुं प्रवृत्ताः । वेदान्तभागरूपोत्तरभागस्तु साक्षात्परब्रह्मण एव बुबोधयिषया प्रवृत्तः इति विवेकः । यद्वा उपनिषच्छन्दः रहस्यपर्यायः । अतिरहस्येऽर्थे उपनिषच्छब्दः प्रयुज्यते वेदे । बृहदारण्यके (7-4-2) 'सत्यं ब्रह्म' इत्युपक्रम्य आदित्यमण्डले व्याहृतिशरीरत्वेन सत्यस्य ब्रह्मणः उपास्यत्वमुक्त्वा "तस्योपनिषदहरित्यधिदैवतं'' इत्युक्तम् । तथा अक्षिणि व्याहृतिशरीरत्वेन सत्यस्य ब्रह्मणः उपास्यत्वमुक्त्वा 'तस्योपनिषदहमित्यध्यात्मं'' इति चोक्तम् । तत्र "द्वे उपनिषदौ–रहस्यनामनी इति श्रीमद्भाष्यम् । अतः उपनिषच्छब्दः रहस्यार्थं बोधयतीति सिद्धम् । एवं चातिरहस्यभूतब्रह्मविद्यारूपार्थबोधकः उपनिषच्छब्दः इति निश्चीयते । उप, नि, सत् इति पदत्रयघटितोऽयं शब्दः । तत्र उप, नि इत्युपसर्गद्वयम् । षद्लृधातुः विशरणगत्यवसादनार्थकः । क्विप् प्रत्ययान्तोऽयं शब्दः । ब्रह्मविद्या पुरुषविशेषं प्राप्य तद्गतपापानां विशरणकर्त्री, अवसादयित्री च । यद्वा इयं पुरुषं प्राप्य तस्य ब्रह्म गमयित्री । समस्तपापानि नाशयति इयम् । तन्नाशद्वारा ब्रह्मप्रापिका च भवति । अतः एवंभूतब्रह्मविद्यैवोपनिषत् । एतादृशब्रह्मविद्याप्रतिपादकवेदभागे उपनिषच्छब्दः गौण्या वृत्त्या वर्तत इति निरवद्यम् ॥

अथ कस्मादुपनिषत् ? उप=समीपे निषद्य=उपविश्य शिष्येण आचार्यात् गृह्यमाणत्वात् उपनिषत् इति केचित् । यद्यपि सर्वस्मिन् वेदे विद्यास्थाने च सर्वत्राविशिष्टमिदं, अथापि परमरहस्यत्वात् वेदान्तभाग एव शिष्येणात्यन्तसमीपे उपविश्य गृह्यते इति वेदान्तभाग एव उपनिषच्छब्दवाच्यः इत्यवसेयम् ॥

शाङ्करे चोपनिषद्भाष्ये — षद्लृ विशरणगत्यवसादनेष्विति विशरणार्थकोऽयं धातुः, अयं च उप, नि पूर्वकः निश्शेषतापत्रय-

विशरणज्ञानपदः तत्संपादकवेदभागपरश्च इत्युक्तम् । श्रुतप्रकाशिकायां तु प्राचीनः सांप्रदायिकोऽर्थः प्रदर्शितः । 'ब्रह्मण्युपनिषण्णेति उपनिषत् । उपनिषण्णत्वाद्वा उपनिषत्' इति हि वाक्यम् । 'गहने हीयं विद्या सन्निविष्टा' इति तद्विषयं द्रमिडभाष्यम् । 'गहने ब्रह्मणि उपनिषण्णा' इति भाष्यविषया वामनटीका । अद्वारकभगवत्प्रतिपादकत्वमुपनिषण्णत्वं इति ।। यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च । गृणन्ति सत्यकर्माणं इति महाभारतवचनम् । वाकेषु=मन्त्रेषु । अनुवाकेषु=तदर्थदर्शिषु ब्राह्मणेषु निषत्सु=देवता भागप्रतिपादकेषु भागेषु । तथा उपनिषत्सु च इत्यर्थः । सत्यकर्माणं=सर्वकर्मसमाराध्यं सृष्टिस्थिति-संहाराख्य सत्यक्रियं नित्यविभूतिविहारावतारादिसत्यक्रियं वा परम-पुरुषम् । अत्र निषत्पदाभिधेयो देवतान्तरप्रतिपादकभागोपि परमात्म-विषये निषत् भवति । उपेत्युपसर्गबलात् साक्षात् भगवत्प्रतिपादक-वेदान्तः उपनिषत् भवतीत्यवगम्यते । अतः अद्वारकभगवत्प्रतिपादकत्व-मुपनिषदाम् । 'श्रुतिशिरसि विदीप्ते ब्रह्मणि' इत्येतदपि एतादृशार्थ-विभागबोधकमिति 'ब्रह्म श्रुतौ दीप्तं श्रुतिशिरसि विशेषेण दीप्तं-इति व्याचख्युः ।।

निषीदति अस्यां देवता इति निषत् इति केचित् । निषीदतीयं देवतायां इति निषत् इत्यपि केचित् । सर्वथापि उपनिषत्पदं अद्वारक-भगवत्प्रतिपादकवेदान्तभागपरमेव ।।

## 13. मीमांसाकालनिर्णयः

भागद्वयात्मको वेदः इति पूर्वमवोचाम । स एव काण्डद्वयशब्दे-नापि व्यवह्रियते । तत्र पूर्वकाण्डं विमृशन् जैमिनिः सूत्ररूपेण मीमां-सते स्म । उत्तरभागविमर्शार्थं बादरायणो वेदव्यासः मीमांसारूपाणि सूत्राणि चकार ।

चतुर्दशविद्यास्थान निर्देशप्रकरणे मीमांसा शब्दोऽपि पठितो विराजते । सुबालोपनिषदि अन्यत्र महाभारते पुराणेषु तैत्तिरीय

प्रातिशाख्यादिषु च मीमांसाशब्दः पठ्यमानो दृश्यते । यथा वेदानां प्रवाहनित्यत्वं, यथा च विद्यास्थानान्तराणां तथैव मीमांसाया अपि प्रवाहतो नित्यत्वमुशन्ति । पूजितपदार्थविचारो मीमांसेति वृद्धा विदन्ति । तत्र वेद एवार्थः अस्माकं पूजित इति तु निश्चप्रचम् । अतो वेदार्थविचारं प्रति प्रवृत्तं विद्यास्थानं मीमांसाशब्दाभिलप्यं भवति । तत्र पूर्वकाण्डरूपवेदार्थविचारात्मकं मीमांसाशास्त्रं जैमिनिना कृतं, उत्तरकाण्डरूपवेदार्थविचारात्मकं तु मीमांसाशास्त्रं बादरायणेन ।

ननु वेदेष्वेव मीमांसाशब्दस्य प्रयोगात् तदर्थविचारात्मकस्य मीमांसाशास्त्रस्य ततः पश्चाद्भावि जैमिनिव्यासरचितत्वं कथं योयुज्यते इति मावोचः । यतः अस्य शास्त्रस्य प्रवाहनित्यत्वमभ्युपगच्छामः । एकैकस्मिन्नपि कल्पे एकैको जीवः तपसा वसिष्ठादिपदमिव जैमिनिव्यासादि स्थानमस्थाय तत्तत्काण्डविचारात्मकं मीमांसाशास्त्रं करोति । यश्च वेदविभजनपूर्वकं पुराणादि तनोति तस्य व्यास इति नाम, स एव ब्रह्मकाण्डमीमांसाशास्त्रं करोति । एवमेव कश्चिज्जैमिनिर्भूत्वा पूर्वकाण्डमीमांसाशास्त्रम् । न हि डित्थडवित्थदेवदत्तादि संज्ञावत् एकस्मिन्नेव व्यक्तिविशेषे जैमिनि व्यासादिसंज्ञेति वदामः । कश्चिदुपचितपुण्यविशेषस्सन् जैमिनिः व्यासादिर्वा भूत्वा तत्तच्छास्त्रं निर्मिमीते इति निरवद्यम् । तत्र पूजितपदार्थविचारस्यैव मीमांसारूपत्वात् जैमिनिकृतस्य पूर्वकाण्डविचारात्मकस्य न्यायनिबन्धनस्येव व्यासकृतोत्तरकाण्डविचारात्मकस्यापि न्यायनिबन्धनस्य शास्त्रस्य मीमांसात्वमस्त्येवेति उभावपि मीमांसाशब्दोऽभिदधाति । अनयोरुभयोरपि मीमांसात्वेन व्यावृत्तिसिध्यर्थं जैमिनिकृतं शास्त्रं 'कर्म मीमांसा' 'धर्ममीमांसा' 'पूर्वमीमांसा' इति व्याहरन्ति । बादरायणकृतं च शास्त्रं ब्रह्ममीमांसा, उत्तरमीमांसा इति वृद्धा व्यवहरन्ति । बादरायणकृतस्य 'वेदान्तशास्त्रं' इति तु प्रायिको व्यवहारः । तथा जैमिनिकृतस्यापि केवलं=निरुपपदं 'मीमांसा' इति च व्यवहारोऽनुभवसिद्धः ।

अन्यदप्यत्र किञ्चिदालोच्यते—कस्यचिन्मन्दमतेः एवमप्यभिप्रायः स्यात्—जैमिनिरेव प्रथमं पूर्वकाण्डविचारात्मकं निबन्धनं निबन्धेति निर्बन्धो न भवति। यतः तत्कृतेष्वेव सूत्रेषु कतिपये आचार्याः संकीर्त्यन्ते। अतस्तेषामपि जैमिनेः प्राक् एतच्छास्त्रप्रणेतृत्वं संभवति। एवमेव बादरायण सूत्रेष्वपि बहवः ऋषयः संकीर्त्यमानाः दृश्यन्ते। अतस्तेऽपि बादरायणात्पूर्वमेव उत्तरकाण्डविचारात्मकनिबन्धनप्रबन्धारो भवेयुः। एवञ्च पूर्वमीमांसाशास्त्र जैमिन्युपज्ञमिति उत्तरमीमांसाशास्त्रं बादरायणोपज्ञं इति च न भवतीति।

अस्य समाधिरेवं वाच्यः—"अथातो धर्मजिज्ञासा"—इत्यारभ्य-स्थितानि सूत्राणि जैमिनीयानि। "अथातो ब्रह्मजिज्ञासा" इत्युपक्रम्य "अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्" इत्यन्तानि सूत्राणि च बादराय-णीयानीति तु निर्विवादम्। एषु सूत्रेषु तत्तन्मतनिर्देशपूर्वकं तत्तदृषि-नामसङ्कीर्तनमस्तीत्यपि न विदुषां तिरोहितम्। परन्तु तत्तदृषिनाम-सङ्कीर्तनमात्रमुपजीव्य जैमिनिव्यासकृतसूत्रात्मक निबन्धनाभ्यां पूर्वमेव कैश्चित् काण्डद्वयविचारात्मकप्रबन्धाः कृताः सन्तीति वा तांश्च प्रबन्धानवलोक्यैव आभ्यां सूत्राणि कृतानीति वा न वक्तुं शक्यते। यतः जैमिनेः व्यासस्य च समानकालिकाः बहवः ऋषयः स्युः। तेचैकत्र संभूताः जैमिनि व्यासेन वा मिलिताः वेदार्थविचारे स्वंस्वमा-शयं आविष्कृतवन्तो भवेयुः। तत्तदभिसन्धि च विज्ञाय इमौ ऋषी तत्तन्नामनिर्देशपूर्वकं काण्डद्वयविचारात्मकनिबन्धने चक्रतुः। बहवो विद्वांसः यज्ञशालासु वादगोष्ठीषु च मिलिताः वेदार्थविचारं कुर्वन्ती-त्येतत् अद्याप्यनुभवसिद्धम्। देवोत्सवादिषु भगवत्सेवार्थमागतानां विदुषां भगवदनुयात्रां कुर्वतां वेदार्थविचारकरणं अद्यापि दृश्यते। अतो जैमिनेः व्यासस्य वा इतरमुनिश्रेष्ठाशयाभिज्ञानं अतिसुलभमिति स्वकृतप्रबन्धेषु तेषां मतविशेषप्रदर्शनपूर्वकं तत्तन्मुनिनामकीर्तनं युक्त-मित्यलं पल्लवितेन ॥

## 14. ऐकशास्त्र्यम्

मुनिद्वयप्रणीतयोः विचारात्मकयोरनयोः मीमांसानिबन्धनयोः ऐकशास्त्र्यमभ्युपगच्छन्ति विशिष्टाद्वैतिनः। कर्तृद्वयं नैतद्विरोधि। भिन्नकर्तृकयोः निबन्धनयोरपि एकप्रबन्धत्वदर्शनात्। व्याख्यानरूपमिदं द्वयमपि एकशास्त्रं भवितुमर्हति। भिन्नकर्तृकाणां कथमैकशास्त्र्यं इति तु न शङ्क्यम्। ऐकशास्त्र्यस्य व्याख्येयैक्यनिबंधनत्वात्। धूर्तस्वामि कपर्दिकर्तृकस्य आपस्तम्बीयगृह्यसूत्रव्याख्यानस्य एकप्रबन्धत्वं ह्युपेयते। कर्तृभेदो हि नैकग्रन्थत्वाभावसाधकः। कादम्बर्यादौ कर्तृभेदेऽपि एकप्रबन्धत्वदर्शनात्।

अथात्रकश्चिदेवं मनुते—कर्तृभेदः एकप्रबन्धत्वविरोधी न भवतीति वास्तवमेव। यत्र तु परस्परविरुद्धार्थवक्तृकर्तृभेदः तत्रैकप्रबन्धत्वं कथमभ्युपगमार्हम्। कादम्बर्यादौ कर्तारौ न विरुद्धार्थवादिनौ। अत्र जैमिनिव्यासौ तु एकव्याख्येयव्याख्यानकर्तारावपि परस्परविरुद्धार्थवादिनौ भवतः। जैमिनिर्हि देवतां निराकरोति। बादरायणस्त्वभ्युपगच्छतिः। सिद्धपरवाक्यानां न साक्षात्प्रामाण्यं क्रियाशेषतयैवेति जैमिने र्मतम्। व्यासस्य तु स्वत एव प्रामाण्यम्। एवमन्यत्र बहुलं विरोधो दृश्यते। सति चैवं एकप्रबन्धत्वमनयोः निर्लज्जया जिह्वया कथं वक्तुं शक्यमिति।

जैमिनिव्यासहृदयानभिज्ञस्यायं पूर्वपक्षः। न हि जैमिनिः सुहृदयं क्वचिद्देवतां निराकरोति। यत्र देवतानिराकरणमिव दृश्यते तत्प्रकरणं त्वन्याभिप्रायकम्। अतो देवतानिराकरणं अन्वारुह्येति ध्येयम्। तथाहि—यस्तु वेदस्यान्यस्य सर्वस्याचाप्रामाण्यं ब्रूते, न तं प्रति प्रथमत एव देवतां साधयितुं शक्यते। अतस्तन्मत एव प्रविश्य देवता माऽस्तु, वेदस्य प्रामाण्यमवश्यमङ्गीकार्यं, धर्माः, कर्तव्याः इति प्रथमं प्रसाध्य तदनन्तरं देवता साधनीयेति अभिप्रायेण जैमिनिः प्रवर्तते इति देवतानिराकरणे न जैमिनेः तात्पर्यम्। अयमर्थः—

जैमिन्युक्तं विरुद्धं यदिह बहुविधं दर्शितं सूत्रकारैः
तस्मादत्रैकशास्त्र्यं हठकृतमिति न, ब्रह्मसंवाददार्ढ्यात् ।
तन्नस्तात्पर्यभेदः विहतिपरिहृतिः काण्डवत् काण्डयोस्स्यात्
बाह्याक्षेपार्थगूढाशयवचनभवद्भ्रान्तिशान्त्यादिसिद्धेः ॥ इति ।

जैमिन्युक्तं विरुद्धं ......... बाह्याक्षेपार्थ ............इति सारावल्यां स्पष्टः । अत एव हि व्यासः, स्वरचितमीमांसायां 'सम्पत्तेरिति जैमिनिः' 'परं जैमिनिर्मुख्यत्वात्' इत्यादिषु जैमिनेः देवताङ्गीकारपक्षं व्यक्तं कथयति । जैमिनिरपि स्वं देवताङ्गीकारपक्षं 'द्रव्यदेवतासामान्ये द्रव्यं बलीयः' इत्यादिना प्रकटयति । यदि देवतैव नासीत्, तर्हि कथं बलाबलविचारः क्रियते ? अतः द्रव्यस्य प्राधान्यकथनं तु प्रत्यक्षगम्यत्वमनुसन्धाय । एवमर्थवादविशेषेष्वपि विरोधः परिहार्यः । अतः कुत्रचिदपि मुनिद्वयस्य विरोधाभावात् न केनापि कारणेन एकशास्त्र्यभञ्जनं सुघटम् । देवतात्वङ्गीकृता । तस्याः विशेषणपञ्चकं तु न स्वीकृतम् । विग्रहो हविरादानं युगपत्कर्मसन्निधिः प्रीतिः फलप्रदानं च देवतानां न विद्यते इत्यपि वदन्ति ।

ये त्वैकशास्त्र्यमनयोः नेच्छन्ति, ते तावत् पूर्वमीमांसा उत्तरमीमांसेति च न व्यवहरेयुः । मीमांसकास्तु जैमिनिकृतस्य 'अथातो धर्मजिज्ञासा' इत्यादिसूत्रस्य व्यासकृतेन निबन्धनेन एकशास्त्रत्वमभ्युपगच्छन्ति । अद्वैतिनस्तु व्यास निबन्धनस्य जैमिनिकृतनिबन्धनेन नैकशास्त्रत्वम् । उभयेऽपि निबन्धनद्वयमपि पृथक् पृथक् निबन्धनमित्येव वदन्ति । अतः पूर्वमीमांसकान् कबन्धमीमांसकान् अद्वैतिनश्च राहुमीमांसकान् आचार्या वदन्ति । तदुक्तं सारावल्याम्, 'मीमांसायाः कबन्धं कतिचन जगृहू राहुकल्पं शिरोऽन्ये' इति ।

### 15. ब्रह्मसूत्रे बादरायणनामनिर्देशौचित्यम्

अन्यदप्यत्र किञ्चिद्विमृशामः—'अथातो धर्मजिज्ञासा' इत्युपक्रमपूर्वकं दृश्यमानं निबन्धनं जैमिनिकृतमिति 'अथातो ब्रह्मजिज्ञासा' इत्यारभ्य कृतं निबन्धनं च बादरायणकृतं इति च सर्वे वदन्ति । कथमिदमुपपद्यते ? यदि ब्रह्मसूत्रस्य बादरायणः कर्ता भवेत्, तर्हि कथं

स आत्मानं तृतीयपुरुषवन्निर्दिशेत् ? 'अवस्थितेरिति काशकृत्स्नः', 'अभिव्यक्तेरित्याश्मरथ्यः' 'पूर्वं तु बादरायणो हेतुव्यपदेशात्' इति काशकृत्स्नादितुल्यतया हि आत्मानं निर्दिशति। एवं जैमिनिरपि मीमांसासूत्रेषु स्वात्मनो निर्देशं करोति। अतो व्यासजैमिनी नेदं निबन्धनद्वयं निबबन्धतुरिति प्रतीयते। एवमन्यदपि कारणमस्ति अनयोः मीमांसाकर्तृकत्वाभावे। जैमिनिर्हि स्वसूत्रेषु बादरायणं कीर्तयति। बादरायणोऽपि जैमिनिम्। यद्यत्र जैमिनिः स्वसूत्राण्यकार्षीत्, तदा पूर्वं बादरायणसूत्राभावेन तदाशयमजानानः तन्मतं कथं स्वसूत्रेषु निर्दिशेत् ? एवं यदि बादरायणः प्रथमं ब्रह्मसूत्राणि चकार, तदा पूर्वं जैमिन्याशायानभिज्ञः तदभिसन्धिं कथं वा सूत्रेण प्रकटयेत् ? अत इदं निश्चीयते-जैमिनिः स्वशिष्यान् स्वमतमध्यापयामास। एवं बादरायणोऽपि। ते च शिष्याः परस्परं मिलिताः मतद्वयं जानन्तोऽवर्तन्त। तेषु शिष्येषु एकेन द्वाभ्यां वा कर्मब्रह्मसूत्राणि कृतानि भवेयुरिति।

अत्र ब्रूमः—बहोः कालात्प्रभृति पूर्वमीमांसाशास्त्रं जैमिनिकृतं उत्तरमीमांसाशास्त्रं च बादरायणकृतं इति च प्रथा लोके वरीवर्ति। पण्डितपामरवैलक्षण्यं विना तथैव व्यवहरन्ति च। एवं स्थिते केनचिदाभासहेतुना विषयान्यथाकरणं न हृदयङ्गमं भवति। परस्पराभिसन्धिपरिज्ञानं निबन्धेनैवेति नियमो न युक्तः इति पूर्वमेवावोचाम। परस्परसमागमादपि परस्पराभिप्रायज्ञानं सुलभम्। बादरायणशिष्यो जैमिनिरिति प्रथा तु लोकव्यापिनी। बादरायणः जैमिनेः परमात्मतत्त्वज्ञानमुपदिशतीति महाभारते हयशिर उपाख्याने च दृष्टम्। अतो जैमिनिः बहुमानपुरस्सरं स्वाचार्यं बादरायण स्वस्वनिबन्धने कीर्तयन् तन्मतं प्रदर्शयामास। बादरायणोऽपि अतिमेधाविनं स्वशिष्यं वेदविचारनिपुणं जैमिनिं स्वनिबन्धने कीर्तयामास। अतः सूत्रद्वयस्य पौर्वापर्यविचारनिबन्धनाकर्तृत्वाक्षेपः न समीचीनः। स्वग्रन्थेषु तृतीयपुरुषवत् स्वस्वनामकीर्तनं न स्वस्याकर्तृत्वसाधकम्। वेङ्कटनाथो हि स्वग्रन्थेषु स्तोत्रेषु च स्वनाम सर्वत्र कथयति। न हि तेन तद्ग्रन्थकर्ता स न भवति। द्राविडप्रबन्धेषु सर्वत्रान्तिमगाथायां स्वस्य कर्तृ

नामधेयं प्रथमपुरुषवत् नित्यसूरिणो निर्दिशन्ति। शठकोपोक्तं इदं दशकं पठतां इह परत्र च न दुःखोपलब्धिः इति वदन् शठकोपः तद्दशकस्य कर्ता किं न भवति? अतः स्वग्रन्थे स्वनामसंकीर्तन सम्प्रदायः प्राचां स्पष्टः इति। प्रायशस्सर्वेऽपि नित्यसूरयः एवंरीतिका एव। गीताचार्योऽपि स्वोपदिष्टगीतायां 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति ईश्वरभूत एव स्वात्मानं परोक्षया निर्दिशति। बहूनि मे व्यतीतानि जन्मानि तव चार्जुन। तान्यहं वेद सर्वाणि, 'कालोऽस्मि लोक क्षयकृत्,' 'रसोऽहमप्सु' इत्यादिषु स्वं अस्मच्छब्देन विनिर्दिशन्नपि कुत्रचित् तृतीयपुरुषतया व्यपदिशति। अतः स्वनामनिर्देशनिबन्धनाकर्तृत्वाक्षेपः शोभनो न भवति। वृद्धौ च मातापितरौ सतो भार्या सुतः शिशुः। अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्' इति, आह ऋषिः इति चात्र द्रष्टव्यम्। अत्र मनुः, ऋषिश्च (वेदः) स्वात्मानं तृतीयपुरुषतया निर्दिशतः इत्यपि द्रष्टव्यम्।

बादरायणः शारीरकशास्त्रं चकारेति तु निर्विवादम्। वेदविभजनकर्ता व्यासः पुराणादि निर्ममे, न तु शारीरकशास्त्रं, अयं तु बादरायणादन्यः इति केचिद्विमर्शकाः निर्मूलं विमृशन्ति। 'सुमन्तुं जैमिनिं बैल्वं शुकं चैव स्वमात्मजम्। प्रभुर्वसिष्ठो वरदो वैशम्पायनमेव च॥ वेदानध्यापयामास महाभारतपञ्चमान्' इत्यादिना जैमिनिः व्यासशिष्यः इति प्रतीयते। स एव पराशरपुत्रो व्यासः बादरायणः इति च सुस्पष्टमभिधीयते अन्यत्र। 'द्वीपे बदरिकामिश्रे बादरायणमच्युतम्। पराशरात्सत्यवतो पुत्रं लेभे परन्तपम्' इति। एवं व्यासबादरायणोरैक्यं स्पष्टमभिदधति प्रमाणे जागरूके को वा बादरायणादन्यं व्यासं ब्रूयात्प्रमाणानुयायी। अतः व्यास एव बादरायणः शास्त्रं शारीरकं निबबन्ध, जैमिनिश्च पूर्वमीमांसां, अनयोश्चैकशास्त्र्यं इत्यादि सिद्धमित्यलं विस्तरेण॥

## 16. काण्डत्रयविचारः

वेदतच्छिरोभेदेन भागद्वयात्मकं वेदस्योक्तमस्माभिः। तद्विचाररूपतया प्रवृत्तं न्यायनिबन्धनात्मकं मीमांसामात्रं तु काण्डत्रयात्मकं विंशत्यध्यायसमन्वितम्। 'संहितेयं त्रिकाण्डी'ति सेश्वरमीमांसायाम्। 'कर्मदेवताब्रह्मगोचरा सा त्रिधा़ऽद्बभौ सूत्रकारतः। जैमिनेर्मुनेः काशकृत्स्नतः बादरायणादित्यतः क्रमात्॥' इति च। षोडशाध्यायात्मकं धर्मविचाररूपं मीमांसाशास्त्रं धर्मविचारणपरम्। ब्रह्मविचारपरं मीमांसाशास्त्रं तु उत्तरभाग विचारणार्थं प्रवृत्तं चतुरध्यायात्मकम्। तत्र द्वादशाध्यायात्मकस्य कर्मकाण्डः इति तदुपरिस्थस्य चतुरध्यायस्य देवताकाण्डः, सङ्कर्षणकाण्डः इति; ततोऽपि चरमाध्याय चतुष्टयस्य ब्रह्मकाण्डः इति च नाम। प्रथमकाण्डं जैमिनिश्चकार, देवताकाण्डं काशकृत्स्नः प्रणिनाय, ब्रह्मकाण्डं तु व्यासो बादरायणः इति वदन्ति।

षोडशलक्षणमपि पूर्वमीमांसाशास्त्रं जैमिनिरेव चकार इति वृत्तिकारः प्राह। सेयं वृत्तिः—'संहितमेतत् शारीरकं जैमिनीयेन षोडशलक्षणेने'ति इति। पूर्वतनग्रन्थेषु कालविप्रकर्षात् अस्य ग्रन्थस्य अयमेव कर्ता इति निश्चयः प्रायशः दुर्निरूप एव दृश्यते। शैलीं अन्यं वा कञ्चनप्रकारमभिवीक्ष्य सन्दिग्धकर्तृकेषु कोशेषु कथञ्चित् कर्ता शक्योहः। क्वचित्तथापि कर्तृनिरूपणं दुर्घटमेव भवति। अतः एवंविधेषु विषयेषु वैमनस्यं विनोपपादनं कार्यमिति। जैमिनिनैवकृतं देवताकाण्डं काशकृत्स्नः अध्यापयामास इति वा काशकृत्स्नेन कृतमेव तं काण्डं जैमिनिरध्यापयामास इति वा उभयोः कर्तृत्वोक्तिः इति सुदृढमभ्युपगन्तव्यमिति। तदुक्तमधिकरणसारावल्यां—'वृत्तिग्रन्थे तु जैमिन्युपरचिततया...एक तात्पर्ययोगः' इति।

सङ्कर्षकाण्डस्यापि जैमिनिरेव कर्तेति वदतामयमाशयः। जैमिनिः धर्मविचारार्थं द्वादशलक्षणात्मकं शास्त्रमकरोत्। ततः तत्र

अविचारितमेव कञ्चनांशं मनसि निधाय चतुरध्यायीं सङ्कर्षणाख्यां प्रणिनाय। अतः उभावपि काण्डौ धर्मविचारपरावेव। एतदालोच्यैव 'जैमिनीयेन षोडशलक्षणेन' इति वृत्तिकारः प्राह इति।

काशकृत्स्नकृतत्ववादिनामपरेषां त्वन्योऽभिप्रायः। सङ्कर्षकाण्डे न कर्मस्वरूपं विचार्यते। कर्मभिः आराधनीयदेवतानां स्वरूपमेव विचारयितुं प्रवृत्तः स काण्डः। अत एव देवताकाण्डशब्देन व्यवह्रियते सः काण्डः। धर्मविचारार्थं प्रवृत्तो जैमिनिः द्वादशाध्याय्यैव निवृत्तः इति।

अन्ये त्वेवमाशेरते—देवताकाण्ड इति काण्डद्वयं वर्तते। एकस्तु धर्मविचाररूपः जैमिनिकृतः। अपरस्तु देवताविचारपरः काशकृत्स्नरचित इति।

अत्र सर्वैरपि विद्वद्भिरुदासितव्यमेव भवति यतः द्वादशाध्याय्या मीमांसायाः परभूतः उत्तरमीमांसाया चतुरध्यायाः पूर्वश्च मध्यभूतो देवताकाण्डः चतुरध्यायात्मकः सुचिरमन्वेषणेऽपि न दृष्टिगोचरो भवति। यथा द्वादशलक्षणात्मकं शास्त्रं शबरादिभिः व्याख्यातं विश्व विख्यातं प्रचारपथं प्राप्तम्। यथा च चरमभागरूपं चतुर्लक्षणात्मकं व्यासनिबन्धनं शङ्कररामानुजप्रभृतिभिर्व्याख्यातं सत् प्रचारपथं नीतं, न तथा देवताकाण्डः प्रचारमार्गमानीतः केनापीति। अतो देवताकाण्डः किमेक एव, उतोभौ, तत्प्रतिपाद्यविषयः कः केन वा कृतः इत्यादि तु सुदृढं निश्चेतुं न कोऽपि प्रभवति।

परन्तु यदि 'अन्ते हरौ तद्दर्शनात्' 'वचनात् सर्वेषां सहावदीयेरन्', 'तेषां सहप्रदानं अवरानैकत्वात्', 'नाना वा देवता पृथक्त्वात्', 'सविष्णुराह हि', 'तद्ब्रह्मेत्याचक्षते', 'तद्ब्रह्मेत्चक्षते' 'आग्रयणाभ्यासः प्रकरणात्', 'दर्शपूर्णमासयोवऽन्तिरालसंयोगान्नह्यन्यत्प्रत्यक्षं' इत्येवादीनि शतदूषणी, अणुभाष्य, न्यायसुधोदाहृतानि सूत्राणि नोपलभामहे, नूनं देवताकाण्ड एव नासीत् इति प्रवक्तुं प्रगल्भामहे। देवताकाण्डस्य सङ्कर्षेण केनाचित्

भाष्यं भाषितं, अत एव सङ्कर्षकाण्ड इति नाम्नः उपपत्तिः इति प्रवादः परं अस्ति । भाष्यं तु केनाप्यद्यावधि न उपलब्धम् । द्वादशलक्षणस्य पूर्वमीमांसा निबन्धनस्य व्याख्यानानोपि शबरस्वामी देवताकाण्डे जोषमेवास्ते । भास्करमिश्रप्रणोतः 'भाट्टचन्द्रिके'ति कश्चन ग्रन्थः अद्योपलभ्यते, यत्र देवताकाण्डे प्रत्यधिकरणं आद्यसूत्र प्रादाक्षराणि लेशतो निर्दिश्य विषयचर्चा त्रियते । प्रपञ्चहृदयनामके ग्रन्थे देवताकाण्ड प्रत्यध्यायार्थः संग्रहेणानुसंहितः । 'तथा देवताकाण्डस्य प्रथमाध्याये सर्वेषां मन्त्रविशेषाणां देवतात्वप्रदर्शने तात्पर्यमिति प्रदर्शितम् । द्वितीयेऽध्याये विध्यर्थवाद नामधेयानां मन्त्रदेवताविषयत्वम् । तृतीयेऽध्याये देवतातत्त्वं स्वेच्छाविग्रहवत्त्वादि गुणगणालंकृतम् । चतुर्थाध्याये देवता फलं सत्कर्मणां अपवर्गाधिकारिणः तादात्म्यलक्षणापवर्गफलमिति' इति ।

अधिकरणसारावलीव्याख्यानभूते चिन्तामणौ कुमारवरदाचार्य विरचिते देवताकाण्डाध्यायार्थः सङ्ग्रहतः श्लोकरूपेण दर्शितः । स्वरूपमादौ तद्भेद. तदुपासनपूर्वकम् । फलञ्च देवताकाण्डे देवतानां तु कथ्यते इति । एतत्सर्वं इतोऽप्यधिकञ्च पण्डितराज इत्यादि बिरुदभूषितैः विश्वप्रसिद्धैः श्रीशैलताताचार्य महाशयैः विरचिते 'मीमांसाभ्युदये' स्फुटं द्रष्टव्यम् ।

वस्तुतस्तु–काशकृत्स्नकृतो देवताकाण्डः लुप्त एव । कर्मविचारपरः सङ्कर्षणकाण्डः ततोऽन्य जैमिनिकृतसूत्ररूपः न्यायनिबन्धनात्मकः......नामधेयकेन कृत व्याख्यानेन सहितः अडैयार् कोशालये विद्यत इति कर्णपरम्परया अस्मभिः श्रुतं इति ।।

## 17. ब्रह्मसूत्रस्य नामभेदः

बादरायणेन विरचितस्य सूत्ररूपस्यास्य निबन्धनस्य, 'ब्रह्ममीमांसा', 'शारीरकमीमांसा', 'वेदान्तमीमांसा', 'उत्तरमीमांसा', 'मीमांसायाः उत्तरभाग' इत्यादीनि नामधेयानि श्रूयन्ते । पूजित

पदार्थवाची मीमांसाशब्दः इति शास्त्रज्ञा वदन्तीति पूर्वमेवाभ्यधाम। अनवधिकातिशयानन्दरूपस्य ब्रह्मण एव सर्वपूजितत्वात् तद्विचारपरमिदं शास्त्रं ब्रह्ममीमांसाशब्देनाभिधीयते। अतोऽस्य निबन्धनस्य 'ब्रह्ममीमांसा' इति नामोदभूत्।

एवमेतत् शास्त्रं उत्तरमीमांसाशब्देनाप्यभिधीयते। मीमांसा हि पूर्वमीमांसा, उत्तरमीमांसा इति द्वेधा विभज्यते। मीमांसाशास्त्रं त्वेकमेव। मीमांसायाः पूर्वभागः पूर्वमीमांसा, उत्तरभागश्च उत्तरमीमांसा। पूर्वकाय-उत्तरकायशब्दयोरिव पूर्वमीमांसाशब्द-उत्तरमीमांसा शब्दयोः विग्रहः कार्यः। 'अङ्गानि वेदाः चत्वारः मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रञ्च विद्या ह्येताः चतुर्दश' इत्यत्र 'मीमांसा' इत्येकवचनश्रवणात् मीमांसाशास्त्रमेकमिति निश्चीयते।

यद्यपि 'पुराणं धर्मशास्त्रं' इत्यत्रापि एकवचनश्रवणेपि पुराणानि धर्मशास्त्राणि च नाना इत्यत्र नैव विवादः, अथापि मीमांसा इत्येकवचनावगतैक्यस्य बाधकाभावेन न त्याज्यत्वमिति ब्रूमः। पुराणधर्मशास्त्राणामनेकत्वस्य दृढप्रमाणसिद्धत्वेन बाधस्तु युक्तः। अतस्तत्रैकवचनावगतैकत्वस्य त्याज्यतैव। मीमांसा इत्येकवचनावगतैक्यबाधने तु न प्रमाणं पश्यामः॥

वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषा, इति वृत्तिकारवचनमप्यत्र प्रमाणम्। संहितमेतत् शारीरकं जैमिनीयेन षोडशलक्षणेन इत्यप्यत्र प्रमाणमनुसन्धेयम्॥

सङ्कर्षणात्मिका चतुरध्यायी च कर्ममीमांसा, अथातो ब्रह्मजिज्ञासेत्यादिना व्यासप्रणीता चतुरध्यायी शारीरकमीमांसा च' इति च। अनेन विंशतिलक्षणात्मकमिदं मीमांसाशास्त्रं एकमिति निश्चिनुमः। अत एव श्रीरामानुजमुनिवर्या अपि स्वकीये श्रीभाष्यग्रन्थे 'मीमांसा पूर्वभागज्ञातस्य कर्मणोऽल्पास्थिरफलत्वात् उपरितनभागावसेयस्य ब्रह्मज्ञानस्य' इति, मीमांसाशास्त्र 'अथातो धर्मजिज्ञासा

इत्यारभ्य 'अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्' इत्येवमन्तं सङ्गति-विशेषेण विशिष्टक्रमम्' इति च निरर्गलं अभाषन्त ॥

प्राचीना बोधायनटङ्कद्रमिडभाष्यकारादयोऽपि मीमांसाशास्त्र-स्यैकत्वमभ्युपगच्छन्ति । बादरायणकृतस्यास्य सूत्रस्य सुसूक्ष्मपरि शीलनेऽपि अयमर्थः स्फुटं ज्ञायत एव । बादरायणो हि चतुरध्यायात्मकं सूत्रं न्यबध्नात् । ग्रन्थकाराणां एवं शैली सर्वत्र दृश्यते । उत्तरत्र व्याख्यानकरणसमये पूर्वोक्तार्थस्य प्रमाणत्वेन प्रदर्शनम् । पूर्वमेवेदं व्याख्यातं, इत्यादि कथनम् । अत्रापि हि 'संज्ञातः...श्चेत्तदुक्तं जीव-मुख्यप्राणलिङ्गात् नेति चेत् तद् व्याख्यातम्' इति स्वकीयनिबन्धने प्रदर्शयति । एकत्वेनाभिमतेऽस्मिन् मीमांसाशास्त्रे पूर्वमीमांसोक्ताः अर्थाः बहवः शारीरके परिदृश्यन्ते। 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' 'श्रुत्यादि बलीयस्त्वाच्च न बाधः' 'द्वादशाहवदुभयविधं बादरायणोऽतः' इत्यादिषु पूर्वमीमांसावगतार्थपरिज्ञानापेक्षा अवश्यमस्तीति तु सर्वं संप्रतिपन्नम् ॥ अतोऽत्र 'प्रदानवदेव तदुक्तं, अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तं, 'हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम्' इति वदन् बादरायणः ऐकशास्त्र्य नाभिप्रैति इति कथं वक्तुं पारयेम ॥

श्रीशंकरोपि शरीरे-भावाधिकरणे स्वाभिमतं एकशास्त्रत्वं प्रकटीकरोति । देहव्यतिरिक्तात्मसद्भावस्थापनं न युक्तम् । शास्त्र-प्रमुखे एव (एतन्मीमांसापूर्वभागे प्रथमपादे) शास्त्रफलभोगार्हस्यात्मनः उक्तत्वादित्याशंक्य 'सत्यमुक्तं भाष्यकृता, न तु तत्रात्मस्वरूपशोधनं कृतं अत्र स्वयं सूत्रकृदेवाह' इति प्राह ॥ आत्मनः स्वरूपस्वभावादिकं कथयिष्यते, अतस्तत्रैव तदवसेयमिति जैमिनिः आत्मस्वरूपे न सूत्रं प्रणिनाय इति ॥

उपरिचैवं श्रीशाङ्करभाष्यम्—'इत एवाकृष्य आचार्येण शबर-स्वामिना प्रमाणलक्षणे वर्णितम् । अत एव च भगवतोपवर्षेण प्रथमे

तन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्यामः इत्युद्धारः कृतः॥ इहचेदं चोदनालक्षणेषूपासनेषु विचार्यमाणेष्वात्मास्तित्वं विचार्यते कृत्स्नशास्त्रशेषत्वप्रदर्शनाय इति॥ शाङ्करभाष्यादौ अपशूद्राधिकरण शरीरे भावाधिकरणादौ पौनरुक्त्यशंका कृता। तत्परिहारोपि। एवं शङ्कापरिहार प्रवृत्त्यन्यथानुपपत्यापि ऐकशास्त्यं शाङ्कराभिमतं इति ज्ञायते।

अतो 'मीमांसान्यायविस्तरः' इति एकवचनावगतमेकत्वं न प्रतिषेधार्हमिति मीमांसाशास्त्रं त्वेकमेव न तु शास्त्रद्वयम्। तत्र मीमांसापूर्वभागस्य पूर्वमीमांसा इति, उत्तरभागस्योत्तरमीमांसा इति च नामधेयम्॥

## 18. मीमांसाशब्दार्थविचारः

'मनेर्जिज्ञासायां' इति विचारार्थे मीमांसाशब्दस्य निष्पन्नत्वात् वेदार्थविचाररूपार्थे मीमांसाशब्दः बहुलं प्रयुज्यते। धर्मस्येव ब्रह्मणोपि वेदार्थरूपत्वेन तद्विषयकविचारयोरुभयोरपि मीमांसाशास्त्रत्वमिति धर्मविचारपरं जैमिनिकृतं पूर्वमीमांसाशब्दाभिधेयं, ब्रह्मविचारपरं बादरायणप्रणीतं उत्तरमीमांसाशब्दाभिधेयं च भवतीति सर्वं समञ्जसम्॥

धर्मशब्दो हि वेदार्थं सामान्येन वदतीति ब्रह्मप्रतिपादकोत्तरमीमांसाया अपि अथातो धर्मजिज्ञासा' इत्यत्र क्रोडीकारः संभवति। ब्रह्मणोपि, कृष्णं धर्मं सनातनं रामोविग्रहवान् धर्मः इति धर्मत्वं वदतां अत्रविषये नैव विवादस्य प्रसक्तिः।

'शारीरकमीमांसा' इत्यन्यदस्य नामधेयमस्ति। शारीरकशब्दो हि परमात्मपरः। तद्विषयविचाररूपत्वेन अस्य निबन्धनस्य तथात्वव्यवहारः। जगत्सर्वं शरीरं ते इति सर्वस्यापि परमात्मशरीरत्वात् शारीरः परमात्मा। 'तस्यैष एव शारीर आत्मा' इति परमात्मनः श्रुतावेव शारीरकत्वोक्तेः तदुपरि कप्रत्ययः। यद्वा शारीरं पर-

मात्मानं प्रतिपादयतीति शारीरकं–वेदान्तशास्त्रम् । तदुक्तं श्रीमति भाष्ये–'स्वव्यतिरिक्तचेतनवस्तुजातं स्वशरीरमिति स एव निरुपाधिकः शारीरः आत्मा । अत एवेदंपरं ब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तैः अभिधीयते इति ।।

'संहितमेतत् शारीरकं जैमिनीयेन' इति वृत्तिकारवचनेऽपीदं स्पष्टम्'। अतः शारीरकशब्दः ब्रह्मप्रतिपादकवेदान्तशास्त्रपरः। तादृशशास्त्रविचाररूपं इदं न्यायनिबन्धनात्मकं बादरायणप्रणीतं शारीरकमीमांसाशब्देनोच्यते ।

प्रथमाध्याये द्वितीयपादे प्रथमाधिकरणे 'अनुपपत्तेस्तु न शारीरः इति सूत्रे केवलं शारीरशब्दः जीवपरः । तत्र जीवनिरासार्थप्रवृत्तत्वात्तत्सूत्रस्य । अनुपपत्तेस्तु नेतरः इत्यनुक्त्वा न शारीरः' इति शारीरशब्देनोपादानं तु शरीरसंबन्धयोग्यस्य नानाविधदुःखभागिनः तत्प्रकरणे स्वीकारायोग्यत्वप्रदर्शनायेति ध्येयम् ।

वेदान्तमीमांसा इत्यपि प्राञ्चो व्यवहरन्ति । वेदो हि पूर्वभाग-उत्तरभागभेदेन हि द्विविधो भवति। तत्र पूर्वभागः कर्मप्रतिपादकभागः, उत्तरस्तु ब्रह्मप्रतिपादकः । अयमेव भागः वेदान्तशब्देनाभिधीयते । उत्तरभागोप्येवमेव । 'श्रुतिशिरसि विदीप्ते' इति शिरश्शब्देनायमर्थः उक्तः। एवं वेदान्ते वेदोत्तरभागे इति पर्यवसानात् वेदान्तमीमांसा इति फलितम् । कृत्स्नोपि वेदो व्याख्येयः। मीमांसाशास्त्रं तु तद्व्याख्यानरूपम् । जैमिनिकृतं सूत्रं तु पूर्वभागव्याख्यानरूपम् । 'स्वाध्यायोऽध्येतव्यः' इति वेदाध्ययनं विधिदृष्टं । तत्र पूर्वभागे प्रथममधीते उत्तरभागस्याध्ययनं पश्चाद्भवति, एव मध्ययनक्रमादिनैव पूर्वभागे विचारिते उत्तरभागविचारः प्रवर्तते । अनेन कर्मब्रह्मविचारक्रमोपि सिध्यति। वेदविचारानन्तरं हि तदन्तविचारप्रसक्तिरिति । अत एव विशिष्टाद्वैतिनः 'अथातो ब्रह्मजिज्ञासा' इत्यत्राथशब्दस्य कर्मविचारानन्तरार्थकत्वं ब्रुवते । 'भास्कराचार्योपि सौत्रस्याथशब्दस्य प्राचीनैरुक्तं कर्म-

विचारानन्तर्यंरूपमेवार्थं परिगृहीतवान् । अद्वैतिनस्तु साधनचतुष्टयानन्तर्यं रूपार्थं ब्रुवते । तच्च साधनचतुष्टयं नित्यानित्यवस्तुविवेकः शमदमादिसाधनसंपत् इहामुत्र फलभोगविरागः मुमुक्षुत्वं चेति वदन्ति ।

**19. अथ सूत्रशब्दं किंचिद्विमृशामः**

श्रीबादरायणप्रणीतस्यास्य मीमांसाभागस्य ब्रह्मसूत्रं इति नाम ।

अल्पाक्षरमसन्दिग्धं सारवत् विश्वतोमुखम् ।
अस्तोभमनवद्याञ्च सूत्रं सूत्रविदो विदुः ।।

इति सूत्रस्य लक्षणं प्राञ्चः प्राहुः । सूचकत्वात् सूत्रत्वं इति अन्ये प्राहुः । इमां रीतिं विहाय केचित्तु सूत्रशब्दः लोके तन्तुपरः । 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' इत्यादिप्रयोगात् शास्त्रेऽपि सूत्रशब्दः तन्तुवाची दृष्टः । एवं च न्यायजालात्मकमणिगणग्रथनरूपत्वात् अस्य सूत्रत्वव्यवहारः । पूर्वकाले बहवो विद्वांसः पत्राद्यलाभेन तालपत्रेषु ग्रन्थान् विलिखन्ति स्म । तेषु च द्वारं किंचित्कृत्वा प्रोतेन सूत्रेण तान् बबन्धुः। अतः तेषां ग्रन्थानां सूत्रत्वव्यवहारः । अत एव जन्मादिसूत्रव्याख्यानावसरे 'तत्र वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणां' इति शङ्करभाष्यप्रवृत्तिः ।। अतो यथा लोके मणिकुसुमादिग्रथनार्थं सूत्रमुपयुज्यते तथा न्यायनिबन्धनमिदं वेदान्तवाक्यकुसुमग्रथनार्थं सूत्रयुक्तं भवतीति सूत्रमिति समाख्या प्रादुरभूत् इति वदन्ति ।।

वस्तुतस्त्विदं चमत्कारभाषितमेव । शङ्करभाष्यमपि सूत्रपदप्रवृत्तिनिमित्तबोधनाय न प्रवृत्तम् ।। तथा सति सर्वेषामपि ग्रन्थानां सूत्रमिति समाख्या प्रसज्येत ।। पूर्वकाले सर्वेषामपि ग्रन्थानां मुद्रणाद्यभावेन शैथिल्यपरिहारार्थं सूत्रेण बन्धनकरणात् ।

अतः 'अल्पाक्षरमसन्दिग्धं' इति प्रमाणोक्तरीत्या शब्दविस्तरं विना अल्पाक्षरयुक्तः संशयपरिहारकरूपः सारार्थबोधकः सर्वशास्त्रसारग्राहकश्च शब्दराशिः यः तदेव सूत्रमित्यास्थेयम् । एकमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः । दैर्घ्यं विना लघुभूतसूत्रप्रणयने एव

पाणिनेरभिरुचिः । प्रायेण पाणिनिः द्वित्रिसूत्राण्यपहाय दैर्घ्यं विना ह्रस्वभूतान्येव सूत्राणि व्यरचयत् । स्वौजस... ..ङ्मोसां ङिओस्सुप् 'जानपदकुण्ड गोण स्थल भाज नाग काल नील कुश कामुक कबराद्वस्य मत्रावपनाकृत्रिमाश्राणास्थैल्यवर्णानाच्छादनायाविकारमैथुनेच्छाकेशवेशेषु 'अव्ययं विभक्ति समीप समृद्धि व्यृध्यर्थाभावात्ययासम्प्रति शब्दप्रादुर्भाव पश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्ति साकल्यान्तवचनेषु. अचतुरविचतुरसुचतुरस्त्रीपुंस......। इत्येवमादीनि सूत्राणि परं अतिदीर्घभूतानि । अवशिष्टानि तु ह्रस्वान्येव । अल्पाक्षरत्वव्यग्रचित्तः पाणिनिः अध्याहारानुसन्धेयत्वसौकर्याय तथा चकार । कणादाक्षपादविरचितसूत्राणि उभयविधान्यपि दृष्टानि । भगवद्बादरायणकृतेष्वपि सूत्रेषु उभयविधत्वमपि दृश्यते । केवलार्थप्रदर्शनमात्रदृष्टयः इमे ऋषयः यावद्भिश्शब्दैः प्रयुज्यमानैः विवक्षितार्थबोधो भवेत् तावदक्षरैः संयुज्य चक्रुः सूत्रजातम् । अल्पाक्षरेषु न मनः एतेषां प्रवृत्तम् ।

'तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया' इतीदमेकमेवसूत्रं अतिदीर्घभूतं दृश्यते अस्मिन् शारीरके' 'स्वाप्ययात्' श्रुतत्वाच्च, स्मृतेश्च, विशेषणाच्च, प्रकरणात्, अपि स्मर्यते' इत्यादि बहुसूत्राणि अतिह्रस्वभूतानि दृश्यन्ते । श्रेष्ठश्च अणुश्च इत्यादि कामं अणुसूत्रं शारीरके विराजते । न्यायनिबन्धनरूपत्वादेतेषां सूत्राणां हेतुवाचकपञ्चम्यन्तनिर्देशः अधिकः ।।

## 20. ब्रह्मसूत्रसमाख्या

तत्र ब्रह्मप्रतिपादकत्वादेतेषां सूत्राणां ब्रह्मसूत्रमिति समाख्या । ब्रह्मशब्दः प्रणवे वेदे प्रकृतौ जीवे परमात्मनि च प्रयुज्यते ।

1. ओमित्येकाक्षरं ब्रह्म—इति प्रणवे । 2. ब्रह्मणावन्दमानः, नमो ब्रह्मणे, जिज्ञासुरपि योगस्य शब्दब्रह्मणि वर्तते इत्यादौ वेदे, 3. तस्मादेतद्ब्रह्मनामरूपमन्नं च जायते इत्यादौ प्रकृतौ ब्रह्मशब्दप्रयोगो दृष्टः ।

4. 'निर्दोषं हि समं ब्रह्म' इत्यादौ जीवेपि ब्रह्मशब्दः प्रयुक्तः 5. सत्यं ज्ञानमनन्तं ब्रह्म इत्यादौ परमात्मवाचकतयापि ब्रह्मशब्दः प्रयुज्यते। एवं पञ्चस्वर्थविशेषेषु ब्रह्मशब्दप्रयोगात् ब्रह्मसूत्रमित्यत्र ब्रह्मशब्दः कमर्थ विशेषमभिधत्ते? इति चेत् परमात्मानमेवेत्यवेहि। प्रकृते प्रणवादिविषयत्वमनुपपन्नमननुपयुक्तम् च। प्रथमतः प्रणवमुच्चार्यं सूत्रपाठारम्भेऽपि-सूत्रे कुत्रापि प्रणवार्थविचाराभावेन ब्रह्मसूत्रस्य तद्विषयकत्वासंभवात्। ईक्षतिकर्मव्यपदेशाधिकरणे एकमात्रद्विमात्रप्रणवोपासनतत्फलबोधक-श्रुतिविचारस्य क्रियमाणत्वेऽपि कात्स्न्र्येन ब्रह्मसूत्रस्य प्रणवविषयकत्वं नास्ति। तत्रापि प्रणवेन परोपासनमेव। स इति सूत्रस्वारस्यमपि। अत्र परमपुरुषध्यायिन एव सर्वकर्मविनिर्मोकपूर्वकं ब्रह्मलोकप्राप्तिरभिधीयते इति परमपुरुषोपासनमेवाभिहितम्। न तु प्रणवोपासनम्। सूत्रेपि ईक्षतिकर्मव्यपदेशात्सः इति परमात्मविषयकविचार एव प्रस्तुतः स इति निर्देशात् न तु प्रणवविषयकविचारः। प्रपद्ये प्रणवाकारं भाष्यं रङ्गमिवापरम्। परस्य ब्रह्मणो यत्र शेषित्वं स्फुटमीक्ष्यते॥ इति सूत्र-विवरणरूपस्य श्रीमतो भाष्यस्य श्रीरामानुजयतिविरचितस्य प्रणवा-कारत्वोक्तेः प्रणवविवरणरूपत्वावश्यकतया विवरणीयस्य सूत्रस्यापि प्रणवार्थविचाररूपत्वमक्षतमिति चेत् अस्तु नाम। का नः क्षतिः। अखिलभुवन इत्यकारोपक्रमात् 'उक्तं ब्रह्मोपासिसिषाजननाय' इति फलाधि-करणे मध्ये उकारस्य उक्तत्वात् 'सर्वं समञ्जसं' इति मकारावसानाच्च शब्दतः श्रीभाष्यस्य प्रणवाकारत्वं परब्रह्मणः शेषित्वबोधनेनार्थतश्च प्रणवाकारत्वं इति संप्रदायविदो वदन्ति। तत्र परब्रह्मणः शेषित्वबोधनात् श्रीभाष्यस्य तद्विवरणीयस्य सूत्रस्य च प्रणवत्वरूपत्वमिति ब्रह्मसूत्रस्य परमात्मविचारपरत्वमेव पर्यवस्यतीति सिद्धं नः समीहितम्। ब्रह्मपदस्य वेदपरत्वेऽप्ययमेव रीतिः। यथा प्रणवार्थप्रतिपादकत्वेन ब्रह्मसूत्रमिति समाख्या तथा वेदार्थप्रतिपादकत्वेनापि तत्समाख्या उपपद्यते। एवं प्रकृतिं जीवात्मानं प्रत्यपि क्वचित्क्वचित् विचारसद्भावदर्शनात् ब्रह्मशब्दस्य प्रकृतिजीवपरत्वाभ्युपयमेपि ब्रह्मसूत्रमिति समाख्योपपत्तिः संभवत्येव। परंतु परमात्मपरत्वमभ्युपगम्य क्रियमाणा उपपत्तिरेव सुशोभना भवति।

यतः सर्वेषामपि सूत्राणामन्ततः परमात्मपर्यवसानस्यैव दृष्टत्वात् । प्रकृतिजीवात्मबोधने प्राधान्येनतात्पर्याभावाच्च। चतुरध्यायात्मकेऽस्मिन् सूत्रग्रन्थे 'कारणत्वमबाध्यत्वमुपायत्वमुपेयता' इति एकैकेनाप्यध्यायेन परमात्मगतकारणत्वादीनामेव बोधनात् कृत्स्नमपि सूत्रजातं परमात्मपरमेवेत्यत्र न विप्रतिपत्तिगन्धः ।। ब्रह्मसूत्राणि सूत्रयन् बादरायणोपि प्रथमं 'अथातो ब्रह्मजिज्ञासा इति ब्रह्मणोजिज्ञास्यत्वं प्रतिपाद्य 'जन्माद्यस्य यतः' इति जगत्कारणत्वेन जिज्ञास्यं ब्रह्म विशिषन् स्वकृतं ब्रह्म सूत्रं परमात्मविषयकविचाररूपमित्यभिप्रैति । अत एवात्र सूत्रे ब्रह्मशब्दार्थं भाषमाणैः भाष्यकृद्भिः 'ब्रह्मशब्देन न स्वभावतः अभिधीयते इत्यभाषि ।। अतः परमात्मविचारपरतयैवेदं शास्त्रं प्रवृत्तमिति अस्य ब्रह्मसूत्रमिति समाख्या प्रवृत्तेति निश्चप्रचम् ।। ननु सर्वाणि सूत्राणि कथं ब्रह्मैव प्रतिपादयन्ति । अन्यार्थप्रतिपादकान्यपि हि सूत्राणि बहूनि दृश्यन्ते। 'महद्वच्च' धर्मं जैमिनिरतएव, इत्यादीनि ब्रह्मव्यतिरिक्तार्थबोधकान्यपि हि सूत्राणि सन्ति इति चेन्न, अन्ततः सर्वेषामपि ब्रह्म बोधने एव तात्पर्यमित्यदोषात्। स्पष्टं चेदं 'यद्यपि संबन्धसामान्य परिग्रहेपि ' इति ब्रह्मजिज्ञासापदविवरणरूप श्रीभाष्य व्याख्यानश्रुतप्रकाशिकायाम् । पूर्वपक्षसूत्राण्यपि हि अन्ततः सिद्धान्तपरसूत्रोपयुक्तानि संतिब्रह्मप्रतिपादने उपकारकारकाणि, भवंति। अत एवमाध्वमतप्रवर्तकाः सर्वाण्यपि सूत्राणि सिद्धान्तसूत्राणि व्याचक्षाणाः व्याख्यान्ति । वस्तुतः चतुरध्यायात्मकमिदं व्यासप्रणीतं कारणस्य अबाध्यस्य उपायस्योपेयस्य ब्रह्मणः प्रतिपादकमिति सर्वमपि सूत्रं ब्रह्मसूत्रमिति समाख्यां भजति। स्वशेषाशेषार्थः निरवधिकनिर्बाधमहिमा—फलानां दाता यः फलमिति च शारीरकार्थतः । श्रियं तत्सध्रीचीं तदुपसदनक्लाशमनीं अभिष्टौति स्तुत्यामवितथमतिर्यामुनमुनिः ।। इत्यप्यन्वगृह्णन् आचार्याः । कारणत्वमबाध्यत्वं उपायत्वमुपेयता । इति शारीरकस्थाप्यं इह चापिव्यवस्थितं, इत्यप्यनुसन्धेयम् ।

शास्त्रं त्वेतत् समन्वित्यविहृति करणप्राप्तिचिन्ताप्रधानैः

अध्यायैः षोडशांघ्रि द्विकयुगभिदुरं षट्कभेदाद्वितीया।

तत्राद्यं वक्ति सिद्धं विषयमपि परं तत्प्रतिद्वन्द्वियुग्मं
स्वप्राप्तेः साधनं च स्वयमिति हि परं ब्रह्म तत्रापि चिन्त्यम् ।।

स्रष्टा देही स्वनिष्ठो निरवधिमहिमाऽपास्तबाधः श्रिताप्तः
खात्मादेरिन्द्रियादेः उचितजननकृत् संसृतौ तन्त्रवाही ।
निर्दोषत्वादिरम्यः बहुभजनपदं स्वार्हकर्मप्रसाद्यः
पापच्छित् ब्रह्मनाडीगतिकृदतिवहन् साम्यदश्चात्र वेद्यः ।।

इत्यादि सारबल्यामयमर्थो द्रष्टव्यः । अत्र हि पादभेदात् अर्थभेदकथनेपि सर्वेषामपि पादानां ब्रह्मविचाररूपत्वमेव, तत्तत्पादोक्तानामर्थविशेषाणां एकस्मिन्नेव ब्रह्मणि पर्यवसानादित्युक्तम् । अतस्सर्वमपि सूत्रजातं साक्षात्परंपरया वा ब्रह्मप्रतिपादकमेवेति ।।

## 21. काण्डत्रयप्रतिपाद्यसंग्रहः

अथैकत्वेनाभिमतेऽस्मिन् मीमांसाशास्त्रे विंशतिलक्षणात्मके प्रत्यध्यायं प्रतिपाद्यप्रमेयं संग्रहेण प्रदर्शयामः । तत्र द्वादशाध्यायीं पूर्वषट्कं उत्तरषट्कं इति द्वेधा विभजन्ति । तत्र पूर्वषट्कं उपदेशविचाररूपं उत्तरषट्कं तु अतिदेशविचाररूपम् ।

मानं भेदः शेषभावः प्रयुक्तिः पौर्वापर्यं चाधिकारोऽतिदेशः ।
सामान्येनाथो विशेषातिदेशः ऊहो बाधस्तन्त्रमन्ते प्रसङ्गः ।।

इति क्रमेणैकैकोऽप्यध्यायः एकैकमर्थं वदति ।।

अध्यायचतुष्टयात्मके देवताकाण्डे चाधिकरणचिन्तामणौ

स्वरूपमादौ तद्भेदः तदुपासनपूर्वकम् ।
फलं च देवताकाण्डे देवतानां तु कथ्यते ।। इति ।

कुमारवरदाचार्यैरुक्तरीत्या एकैकस्याध्यायस्य एकैकार्थप्रतिपादनपरत्वं अनुसन्धेयम् ।। मध्यमकाण्डस्य सङ्कर्षकाण्डः देवताकाण्डः इत्युभयविधव्यवहारोपि दृश्यते । वरदगुरुभिः अनुगृहीतरीत्या देवताविषयविशेषविचार एव तत्र प्रवर्तितः इति निश्चीयते । तेन देवताकाण्ड-

नामानुगुण्यमपि घटते । सङ्कर्षकाण्डे देवताविषयकविचारः लेशतोपि नास्तीति देवताकाण्डः इति व्यवहारः क्लेशेनैव निर्वाह्यः इति अप्पय्य दीक्षितादयः कथयन्ति । तत्र यूपपादः इष्टकापादः अवदानपादः होमपादः कालपादः अग्निपादः ग्रहपादः वरणपादः सामिधेनीपादः निगमपादः वषट्कारपादः इति पादानां विभागदर्शनात् कर्मविचारपरतैव प्रतीयते सङ्कर्षकाण्डस्य । न देवतास्वरूपप्रतिपादनपरता । अतः देवतास्वरूपप्रतिपादनैदम्पर्यं नास्तीति देवताकाण्ड इति व्यवाहारः न अक्लेशेन निर्वाह्यो भवति । काशकृत्स्नकृतः सङ्कर्षकाण्डः जैमिनिकृतात् सङ्कर्षात् अनन्यः । स एव देवताप्रतिपादकः । स च प्रकृतकर्ममीमांसोपयोगी । तत्र च तं ब्रह्मेत्याचक्षते इत्यादीनि सूत्राणि वर्तन्ते । तेषां शारीरकशास्त्रपूर्वभागत्वं उपपद्यते । काशकृत्स्नबादरायणौ हि समानाभिप्रायौ । यत्र जीवब्रह्मणोरभेदः श्रुतिप्रतिपन्नः तत्राभेदनिर्वाहः कथं इति विचारे बादरायणः मतत्रयमुपदिशति—'प्रतिज्ञासिद्धेः लिङ्गमाश्मरथ्यः, उत्क्रमिष्यत एवं भावादित्यौडुलोमिः अवस्थितेरितिकाशकृत्स्नः' इति । तत्र जीवब्रह्मैक्यमाश्मरथ्यमतम् । पार्थक्येनैव स्थितस्य जीवस्य ब्रह्मणा ऐक्यं मुक्तौ भविष्यतीति तदाशयेनैक्यव्यपदेशः इत्यौडुलोमिमतम् । काशकृत्स्नस्य मतं तु विशिष्टाद्वैतिमतम् । जीवे ब्रह्मणः अवस्थितिमात्रेण उभयोरैक्यं वदन्ति वेदान्ताः इति भेदः अभेदश्च सार्वकालिकः इति विशिष्टाद्वैतिनामाशयः । एतदेव मतं काशकृत्स्नोपि अभिप्रैतीति बादरायणः "अवस्थितेरिति काशकृत्स्नः' इत्यसूत्रयत् । अतः काशकृत्स्न बादरायणयोः समानाभिप्रायकत्वदर्शनात् बादरायण प्रणीतशारीरकपूर्वभागत्वं काशकृत्स्नकृतदेवताप्रतिपादकसङ्कर्षकाण्डस्य योयुज्यत एव । बादरायणो हि उपनिषद्विचारार्थं प्रवृत्तः । तत्रादौ चेतनाचेनविलक्षणब्रह्मणः उपासनं उपास्यमानं ब्रह्म वा प्रधानमिति निश्चित्य तस्य जिज्ञास्यत्वबोधनाय 'अथातो ब्रह्मजिज्ञासा' इति सूत्रं प्रणिनाय । स्वयं सूत्रप्रणयनकाले यावन्तो विद्वांसः ब्रह्मज्ञाननिपुणाः उपनिषदर्थविचारविशारदा वाक्यार्थकुशलाः तावतोपि ऋषीन् आहूय स्वयं मिलितः सन् उपनिषदर्थविचारं प्रवर्तयति स्म । तत्र येषां

ऋषीणां विचारक्षमत्वंबुद्धिकुशलतावाक्यार्थनैपुण्यं च तेषां मतं तैरेवोक्तं स्वसूत्रे प्राचीकशत् । अथ तैरुक्तमर्थमादौ प्रतिपाद्य स्वसिद्धान्तमन्ते प्रत्यपीपदत् ।। एवमत्र शैलीपरामर्शेन स्फुटं अयमर्थः विज्ञायते ।।

प्रकृतमनुसरामः एवं काण्डद्वयप्रतिपाद्यार्थः उक्तः । शारीरकेप्य-यमर्थः उच्यते । शारीरकशास्त्रं तु चतुरध्यायात्मकं । अत्र षोडशपादाः सन्ति । प्रत्यध्यायं चत्वारः पादाः इति क्रमः । पूर्वमीमांसायां तु प्रत्यध्यायं पादचतुष्टयमिति क्रमो नादृतः । तृतीयषष्ठदशमेषु अष्टौ पादाः प्रत्येकम् । अन्यत्र सर्वत्र चत्वारः । अत्र तु एकयैव रीत्या पाद व्यवस्थापनं दृश्यते ।

यथा पूर्वकाण्डः पूर्वषट्क उत्तरषट्कभेदेन द्विधा विभक्तः तथै-वोत्तरकाण्डोपि पूर्वद्विक उत्तरद्विकभेदेन द्विधा विभक्तः । तत्र पूर्वद्विकं सिद्धद्विकं विषयद्विकमिति व्यवह्रियते, उत्तरद्विकं तु साध्यद्विकं विषयि द्विकं इति । पूर्वाध्यायद्वये सिद्धस्य, उपासनविषयस्य ब्रह्मणः प्रतिपा दनात् तस्य तथात्वव्यवहारः । उत्तराध्यायद्विकस्य, साध्यस्य ब्रह्मो-पासनस्य, तथाभूतस्य ब्रह्मानुभवस्य च प्रतिपादकत्वात् तथात्वव्यव-हारः । सर्वेषामपि जगत्कारणवादिवाक्यानां ब्रह्मणि समन्वयप्रतिपाद नात् प्रथमाध्यायस्य समन्वयाध्यायः इति नाम । ब्रह्मणि प्रतिपादि तस्य कारणत्वस्य विरोधपरिहारमुखेन स्थूणाखातक्रमेण स्थाप्यमान-त्वात् द्वितीयस्याध्यायस्य अविरोधाध्यायः इति नाम । तृतीयाध्यायः भगवत्प्राप्तिरूपफलसाधनप्रतिपादनपरत्वात् साधनाध्यायशब्देन व्यव ह्रियते । चतुर्थश्च भगवत्प्राप्तिरूपफलप्रतिपादकत्वेन फलाध्याय इति । सारवल्यां चैतदुक्तम्—

शास्त्रं त्वेतत्समन्वित्यविहितिकरणप्राप्तिचिन्ताप्रधानैः
अध्यायैः षोडशांघ्रि द्विकयुगभिदुरं षट्कभेदादिनीत्या ।
तत्राद्यं वक्ति सिद्धं विषयमपि परं तत्प्रतिद्वन्द्वियुग्मं
स्वप्राप्तेस्साधनं च स्वयमिति हि परं ब्रह्म तत्रापि चिन्त्यम् ।।

इति । एवं काण्डत्रयेपि प्रत्यध्यायं प्रतिपाद्यार्थः सुखग्रहणाय संक्षेपतः प्रदर्शितः ।

## 22. द्विकादिविभागकरणम्

अथास्मिन् शारीरकशास्त्रे द्विकाध्यायादिविभागकरणे किं नियामकं इत्यत्र किंचित् दृशं निक्षिपामः। पूर्वद्विकं उत्तरद्विकं इति किमिति विभज्यते। त्रयोऽध्यायाः पञ्च वाऽध्यायाः इति अविभज्य चत्वार एवाध्यायाः इति त्रिभागः किमर्थं इष्यते। एवमेकैकस्मिन्नध्याये चत्वार एव पादाः इति नियतिकल्पनं किं निबन्धनम्। एवं पादेऽपि इयं शङ्का भवति। अत्र ब्रूमः—न वयं नूतनतया द्विकाध्यायादि भेदं कल्पयामः परं नु वेदान्तार्थनिर्णयार्थं प्रवृत्तो भगवान् वेदव्यास एव मनसि कञ्चन कञ्चनार्थविशेषं निधाय सूत्रं प्रणिनाय। सूत्रेषु च तत्तच्छ्रुति वाक्यानि चासूचयत्। अतः श्रुतिस्वारस्यात् सूत्रस्वारस्याच्च कश्चन विभागो विशेषज्ञैरूह्यते। 'एनेन सर्वे व्याख्याताः व्याख्याताः' वैशेष्यात्तु तद्वादः तद्वादः, एवं मुक्तिफलानियमः तदवस्थावधृतेः तदवस्थावधृतेः इति अन्ते पदावृत्तिश्रवणात् अध्यायविभागः स्फुटः। शास्त्रपरिसमाप्त्यर्थः अनावृत्तिः शब्दात् इति सूत्राभ्यासः इति च स्फुटम्। पादावसानसूचकं चिह्नं तु नोपलभ्यते। अथापि प्रकरणबलात् विषयस्वारस्याच्च अत्रैव पादः परिसमाप्तः इति ज्ञायते। मुखप्रसादमालिन्यदर्शनेन हि कस्यचित् सुखदुःखे लोके अनुमीयेते। अस्य पुरुषस्यायमेवाभिप्रायः इत्यभिप्रायपरिज्ञानं तस्य वृत्तेन वाक्येन वा सुशकं भवति। अतः सूत्रकारस्य सूत्ररचनाशैलीं श्रुतिस्वारस्यपरिस्थितिं चावेक्ष्य एवं विषयविभागः क्रियते॥ तत्रान्यूनानतिरिक्ततया यथा विषयविभागः उपपन्नो भवेत् तथाऽत्र विभागं दर्शयामः। शारीरकशासनं पूर्वोत्तरद्विकभेदभिन्नम्। तत्र प्रथमद्विकं प्रमेयत्वव्यापककार्यतानिरूपितकारणतावत्वं ब्रह्मणोलक्षणं इतीममर्थंप्रतिपादयति। द्वितीयं तु द्विकं उपासनप्रवृत्तिप्रयोजकार्थनिरूपणपरं। जगत्कारणत्वमिति यत् ब्रह्मणो लक्षणं तस्याव्याप्त्यतिव्याप्त्यसंभवरूपदूषणत्रयराहित्यं उपपादनीयम्। तथैव हि तस्य लक्षणत्वसंभवः। दूषणत्रयरहितो धर्मो हि लक्षणम्। ब्रह्मण एकस्यैव लक्ष्यत्वात् लक्ष्यैकदेशावृत्तित्वरूपव्याप्तेः प्रकृते उपपादनसंभवेन लक्षणस्याव्याप्तत्वरूपदूषणं तु

न जाघटीति ।। असंभवातिव्याप्तिशङ्कापर मेव शिष्यते । सापि शङ्का द्विविधा भवति । श्रुतिविप्रतिपत्त्या वादिविप्रतिपत्त्या च । एवं च श्रुति विप्रतिपत्तिप्रयुक्तासंभवशङ्का तादृशी अतिव्याप्तिशङ्का, वादि विप्रति पत्तिप्रयुक्तासंभवशङ्का तादृशी अति व्याप्तिशङ्का चेति चतस्रः शङ्का भवन्ति। एतच्छङ्काचतुष्टयपरिहारार्थं प्रथमद्विकगत पादषङ्कं प्रवृत्तम् ।

प्रथमाध्यायगतप्रथमपादो हि श्रुतिविप्रतिपत्तिप्रयुक्तासंभवशङ्कां अपाकरोति । त्रिपादी तु तादृशातिव्याप्तिशङ्काम् । वादिविप्रतिपत्ति प्रयुक्तां असंभवातिव्याप्तिशङ्कां द्वितीयाध्यायगत प्राथमिकपादद्वयमिति विवेकः ।। यद्यपि लक्ष्ये लक्षणस्यासत्वमेवासंभव इति प्रकृते ब्रह्मरूप-लक्ष्यस्यैवाप्रसिद्धेः तत्र लक्षणासत्वशङ्कापरिहारावनुपपन्नाविव भायात्। तथापि, लक्ष्ये लक्षणस्यासत्वं एकोऽसंभवः यत्र लक्ष्यमेवाप्रसिद्धं तत्र लक्ष्यासंभवप्रयुक्तलक्षणासंभवः इत्यपरोऽसंभवः इत्यसंभवस्य द्विविध-त्वात् । लक्ष्यप्रसिद्धिस्थले लक्षणासत्वे प्रथमासंभवस्य लक्ष्याप्रसिद्धि-स्थले द्वितीयासंभवस्य च सूत्रपादत्वात् प्रकृते द्वितीयासंभवशङ्कापरि-हारार्थं प्रथमपादप्रवृत्तिः इत्यदोषः इति ध्येयम् । प्रथमपादेन चिद चिद्विलक्षणब्रह्मासिद्धिशङ्का हि परिह्रियते । एवं प्रथमेन पादेन ब्रह्मणः सिद्धौ सत्यां ब्रह्म जगत्कारणमस्तु प्रधानादिकमपि तथा स्यात् इत्यतिव्याप्तिशङ्कावारणार्थं त्रिपादी प्रवृत्ता ।।

एतादृशविभागः श्रुतिस्वारस्यात् सूत्रस्वारस्याच्चावसीयते । कारणवादिवाक्यानि सर्वासु विद्यासु वर्तन्ते । तत्र सद्विद्याकारणवादि-वाक्यमेव प्रधानभूतम् । पुरोवादरूपत्वात् । तदितरकारणवाक्यानि ह वै पदघटितानि अनुवादरूपाणि भवन्ति । सूत्रकारोपि चतुस्सूत्र्या शास्त्रारंभं प्रसाध्यशास्त्रोपक्रमे 'ईक्षतेर्नाशब्दं' इति सद्विद्याकारणवाक्य मेवादौ प्रस्तौति । व्यष्टिसमष्टिसृष्टित्रिवृत्करणादयोऽप्यत्र प्रदर्श्यन्ते सृष्ट्युपयुक्ताः इति । सद्विद्यैव प्रधानभूता सूत्रकाराभिमता च । अतः सद्विद्यायाः प्रधानपरत्वनिर्णये इतरविद्यानामपि तत्परत्वमेव स्यादिति प्रथमं सद्विद्यायाः प्रधानभिन्नपरमात्मपरत्वं स्थाप्यते । एवमानन्द-वल्याः जीवपरत्वे भृग्वानन्दवल्योः समानार्थकत्वेन भृगुवल्लीस्थस्य

यतो वा इमानि भूतानि जायन्ते इति लक्षणवाक्यस्यापि जीवपरत्वं स्यात् । विशेषसमर्पकतया प्रसिद्धानां आकाशप्राणज्योतिरिन्द्रादिपदानां प्रसिद्धाकाशादिपरत्वे तत्प्रकरणस्थानामपि वाक्यानां तत्परत्व मेव सुनिश्चेयं भवतीति ब्रह्मैवाप्रसिद्धं भवेत् । अतः प्रथमपादे उद्धाहृत श्रुतिवाक्यानां स्वारस्यपरामर्शे सर्वात्मना ब्रह्मसद्भावमसहमानेन पूर्वं पक्षिणा ब्रह्मनास्तित्वशङ्का प्रवर्तितेति ज्ञायते । अतः प्रथमपादः ब्रह्मासंभवशङ्काप्रयुक्तलक्षणासंभवशङ्कापरिहारार्थः इति निश्चीयते ॥ त्रिपाद्यां आनुमानिकाधिकरणे 'आनुमानिकमप्येकेषां' इति सूत्रे अपि शब्दं प्रयुञ्जानः सूत्रकारोपि विभागममुं प्रकटीकरोति ।

कल्पतरुग्रन्थे आनुमानिकाधिकरणेऽप्ययमर्थः उक्तः—पूर्वत्र हि प्रधानाद्येव जगत्कारणमिति प्रत्यवस्थितं परमात्मनिषेधेन । इह तु तमभ्युपेत्य प्रधानाद्यपि कारणमिति प्रत्यवस्थीयते । सूत्रकारोपि अपि शब्दं प्रयुञ्जानः ब्रह्माभ्युपगमेन क्वाचित्कोऽयं विचार इति सूचयामास" इति । प्रथमाध्यायचतुर्थपादारंभे आनुमानिकाधिकरणे एव अपि शब्दश्रवणात् चतुर्थपादस्य केवलं अतिव्याप्तिशङ्का परिहारपरत्व मस्तु, अवशिष्टाद्यपादत्रयस्यासभवशङ्कापरिहारपरत्वं किं नाभ्युपगम्यते इति न शङ्क्यम् । प्रथमपादे – 'ईक्षतेर्नाशब्दम्' इत्यत्र नाशब्दमिति, नेतरोऽनुपपत्तेः इत्यत्र नेतरः इति, 'भेदव्यपदेशाच्चान्यः' इत्यत्रान्यः इति च पदानां श्रवणात्, द्वितीयपादे–'अत एव च स ब्रह्म' इति ब्रह्मपदस्य, तृतीये ईक्षतिकर्मव्यपदेशात्सः इत्यत्र तच्छब्दस्य चतुर्थे 'प्राज्ञो हि प्रकरणादित्यत्र प्राज्ञपदस्य च श्रवणाच्च प्रथमपाद अवशिष्टत्रिपाद्योः वैलक्षण्यावगमात् नाशब्दं, नेतरः अन्यः इति पदानां स्वारस्य परीशीलने प्रधानादिभेदसाधने एव सूत्राणां व्यग्रता प्रतीयते । तदुक्तं ईक्षतिकर्मव्यपदेशाधिकरणश्रुतप्रकाशिकायाम् । अत्र स इत्युक्तिः अस्मिन् पादे सर्वाधिकरणेषु साध्यप्रतिज्ञानुवृत्यर्था यथा प्रथमपादे भेदव्यपदेशाच्चान्यः इति 'अन्यशब्दोक्तिः' यथा च द्वितीये अत एव च स ब्रह्म इति ब्रह्मशब्देक्तिः । यथा चतुर्थे वदतीतिचेन्न प्राज्ञो हि प्रकरणात् इति प्राज्ञशब्दोक्तिश्च । तद्वदिति ॥ अत एव श्रीभाष्ये 'इतश्च न

प्रधानं, इति, जगत्कारणवादिवाक्यं न प्रधानादिप्रतिपादनयोग्यम्, इति अशुद्धात् शुद्धाच्च प्रत्यगात्मनोऽन्यत् इति, प्रत्यगात्मनोजीवशब्दाभिलपनीयादन्यपरमात्मा अतः स एवेति, इति च व्यतिरेकमुखेन भाषितम् । अतोऽत्रेदं निश्चीयते, सर्वथापि ब्रह्मसद्भावं शङ्कमानस्य पूर्वपक्षिणः शङ्कापरिहारार्थं प्रवृत्तश्चेतनाचेतनभिन्नत्वसाधकः प्रथमपादः एवं चिदचिद्विलक्षणत्वेन परब्रह्मणः सिद्धौ इतरोपनिषद्वाक्यानामपि कारणवादिनां ब्रह्मपरत्वमेव न प्रधानादिपरत्वमिति स्थापनाय त्रिपादी प्रवृत्ता । अतः तादृशवाक्यप्रतिपाद्यः परमात्मैवेति साक्षात् तादात्म्येन साध्यसमर्पकप्राज्ञादिपदैः सूत्राणि रचयामास बादरायणः । 'सर्वत्र प्रसिद्धोपदेशात्' इति द्वितीयपादस्याद्यसूत्रमेवामुमर्थविशेषं संयगभिव्यनक्ति । वेदान्तेषु, परस्मिन्नेव ब्रह्मणि प्रसिद्धस्य मनोमयत्वादेः उपदेशात् 'मनोमयः प्राणशरीरः' इति वाक्योदितगुणवान् परमात्मैव भवितुमर्हतीत्युक्तौ हि पूर्वमेव ब्रह्मणः सिद्धिरभ्युपगता भवति । अतः एतत्सूत्रपूर्वसूत्रपर्यन्तं ब्रह्मासिद्धिप्रयुक्तासंभवशङ्कापरिहारपरं, एतत्सूत्र प्रभृति सूत्रजातं सर्वं अन्यस्य कारणत्वप्रतिक्षेपद्वारा अति व्याप्तिशङ्का परिहारपरमिति सुदृढं निश्चेतुं शक्यते ।।

एतेनेदमपि निर्व्यूढम्—आनुमानिकाधिकरणे अपि शब्दश्रवणात् परमात्मानमभ्युपगम्य प्रधानाद्यपि कारणं इति प्रत्यवस्थीयते इति निश्चीयते इतीदं न संभवति । तत्राधिकरणे निरीश्वरसांख्यस्यैव पूर्वंपक्षित्वात् परमात्माभ्युपगमस्यैवासिद्धेः । अत एव तत्र 'पुरुषान्न परं किंचित्' इति पंचविंशपुरुषातिरिक्ततत्वनिषेधपूर्वकं पूर्वपक्षवर्णनं यो युज्यते । अन्यथेश्वराभ्युपगमे अतिरिक्ततत्वनिषेधासंभवात् एतत्सर्वमभिसन्धायैव श्रीमति भाष्ये प्रकृत्यधिकरणारम्भे "एवं निरीश्वर सांख्यः प्रत्यवतिष्ठते इत्यभाषि । अतः ब्रह्माभ्युपगमपूर्वकातिव्याप्तिशङ्कावारणं त्रिपाद्या क्रियते इतीदमनुपपन्नं इति अगत्यापि शब्दस्य महदाद्यर्थत्वं स्वीकृत्य परब्रह्मसमुच्चायकत्वानभ्युपगमेपि पूर्वोक्तार्थस्य क्षतिविरहात् । अत्र श्रुतप्रकाशिका – ननु तृतीयपादेपि असंभवशङ्कापरिहारो दृश्यते । यथासुषुप्त्युत्क्रान्त्योर्भेदेन, पत्यादिशब्देभ्यः इति,

अत्र हि 'नेतरोनुपपत्तेः इति वत् मुक्तातिरिक्त ब्रह्मसद्भावः स्थाप्यते । 'अथ स्यात् प्रत्यगात्मनोऽर्थान्तरभूतमात्मान्तरमेव नास्ति ऐक्योपदेशात् द्वैतप्रतिषेधाच्च' इति श्रीमद्भाष्यम् ।। एवं चतुर्थपादे कारणत्व जगद्वाचित्व वाक्यान्वयाधिकरणानि प्रधान जीवव्यतिरिक्त ब्रह्मस्थापनपराणीति असंभवशङ्कापरि पराणि 'अतः अयोगव्यवच्छेदपरस्याद्यस्यैव वासंभवशङ्कापरिहारपरत्वं अन्ययोगव्यवच्छेदपरायाः त्रिपाद्याः अतिव्याप्तिशङ्कापरिहारपरत्वं इति नियमो न संभवतीति, उच्यते प्रथमाध्याये प्रथमपादः अत्यन्तास्पष्टमितिजीवादिलिङ्गवाक्यविचारपरः । द्वितीयः अस्पष्टजीवादिलिङ्गकवाक्यविचारपरः । तृतीयः स्पष्टजीवादिलिङ्गकवाक्यविचारपरः चतुर्थस्तु तत्तत्प्रतिपादछायानुसारिवाक्यविचारपरः इत्यपि विभागत्व क्रियते तदुक्तम् सारावल्यां 'अस्पष्टरूपस्फुटरतचिदचिल्लिगवद्वाक्यचिन्ता भाष्ये दीपावसानेऽप्यभाणि......... तत्राद्येत्यन्तगूढाविशदविशदसुस्पष्टजीवादिवाचः—इति ।। अतः स्पष्टजीवादिलिङ्गकवाक्यविचाराभावविशिष्टासंभवशङ्कपरिहार परत्वं प्रथमपादस्योज्यते । इदं तु नान्यपादेषु भवतीति नक्षतिः ।। नन्वाद्यपादस्य ब्रह्मसिद्धिशङ्काप्रयुक्तासंभवशङ्कापरिहारार्थत्वे 'आकाशस्तल्लिङ्गात्' अन्तस्तद्धर्मोपदेशात् इत्यादिषु कथं ब्रह्मणः तच्छब्देन निर्देशः । ब्रह्मण एवाप्रसिद्धेः । ब्रह्मसिद्धौ हि तत् तच्छब्देन निर्दिश्य तदसाधारणधर्मस्य हेतुत्वकरणं युक्तम् ? सत्यं—तद्धर्मादित्यस्य तस्य धर्मः तद्धर्मः । तस्मात् इति विग्रहः । सर्वं वाक्यं सावधारणमितिन्यायेन 'अब्भक्षो वायुभक्षः इत्यादाविव तस्यैव धर्मः तद्धर्मः इत्यर्थोऽवश्यं अङ्गकार्यः । तच्छब्दं परमात्मपरः । तथा च परमात्मेतरावृत्ति परमात्मवृत्तिधर्मवत्वं हेतुर्भवति । तत्र धर्मे परमात्मवृत्तित्वविशेषणमनुपयुक्तमिति न तत् विवक्ष्यते । एवं च परमात्मेतरासंभावितधर्मस्यैव हेतुत्वमिति अनेना हेतुना अचेतनान्यत्वं साध्यते । सूत्रकारस्य बुद्धौ सर्वदा ब्रह्मणः विपरिवर्तनात् परमात्मेतेरेति व्यतिरेकमुखेन निर्देशः कृतः । अतो न दोषप्रसक्तिः । आकाशः तत् लिङ्गात् इत्यपि पदच्छेदमारचय्य प्रकरणे श्रुतानां लिङ्गानां भूताकाशेऽसंभवात्

'आकाशशब्दवाच्यं तत् — ब्रह्म' इत्यपि सूत्रं व्याकुर्वन्ति । एवं अन्यत्रापि । एवं पादचतुष्टयात्मकस्याद्यस्याध्यायस्य गमनिका उक्ता।। द्वितीयाध्यायगतौ द्वौ पादौ वादिविप्रतिपत्तिप्रयुक्तसंभवातिव्याप्ति शङ्कां परिहरतः । तत्र हि वादी ब्रह्मैव नास्ति इति, सद्भावेपि प्रधान-मेव जगत्कारणं भवितुमर्हतीति च विप्रतिपद्यते स्मृतिविरोधं तर्क-विरोधं चावलम्ब्य । अतस्तत्परिहारार्थं पादद्वयप्रवृत्तिरिति ।। एवं षट्पाद्याः प्रवृत्तिरुक्ता । अथ पूर्वद्विकगतान्तिमपादद्वयं, ब्रह्मलक्षणत्वे-नोक्ते प्रमेयत्वव्यापककार्यतानिरूपितकारणत्वे कार्यतां प्रमेयत्वव्याप-कत्वोपपादनाय प्रवर्तते ।। आकाशेन्द्रियादीनां नित्यत्वमभ्युपगम्य ब्रह्मकार्यत्वानुपपादने सर्वमपि जगत् ब्रह्मकार्यं न भवितुमर्हति किल । एवं च सर्वजगत्कारणत्वं न ब्रह्मलक्षणं भवेत् । तदुक्तं श्रीभाष्ये— 'ब्रह्मकार्यतयाऽभिमतचिदचिदात्मकप्रपञ्चस्य कार्यताप्रकारो विशोध्यते' सारावल्यामप्येवमनुगृहीतम्—'कार्यत्वं यस्य यावत् श्रुतिभिरवगतं तस्य तत्तादृशं च' 'कार्यद्वारेण पादान्तरयुगमुदयत्यान्तर क्षोभशान्त्यै' इति नित्यभूतस्यापि हि जीवात्मनः उत्पत्त्यभावेपि कार्यत्वमुपपाद्य तन्निरूपितकारणतावत्वरूपजगत्कारणत्वलक्षणस्य ब्रह्मण्युपपत्तिः अत्रैव क्रियत इति न लक्षणदोषगन्धः ।

अथोत्तरद्विकार्थं ब्रूमः । उपासनप्रवृत्ति प्रयोजकार्थ निरूपणपरं उत्तरद्विकम् । यस्तु मोक्षेच्छावान् स एव तदुपायभूतोपासने प्रवर्तते इति निर्विवादम् । मोक्षश्च निश्शेषाविद्यानिवृत्तिपूर्वकब्रह्मानुभवः । अविद्यानिवृत्तिर्नाम कर्मतत्प्रयोज्यप्रकृतिसंबन्धैतदुभयरूपसंसारनिवृत्तिः। एतादृशाविद्यानिवृत्तौ, प्रतियोगिभूतसंसारे त्विष्टसाधनताज्ञानं कारणम् संसारनिवृत्त्यात्मकाभावरूपफलेच्छायां प्रतियोगिनि इष्टसाधनता-ज्ञानस्य कारणत्वात् । अतः कर्मणि तत्प्रयोज्यप्रकृतिसंबन्धे च दुःख-साधनत्वनिरूपणाय वैराग्यपादः प्रवृत्तः प्रकृतिसंबंधरूपसंसारस्य दुःखादि साधनरूपोऽप्यर्थः उपासनप्रवृत्तिप्रयोजकोऽर्थः ।। एवं ब्रह्मानुभवस्यैव मोक्षत्वात् तद्विषयकेच्छायां तत्रानुकूलत्वज्ञानं कारणम् । ब्रह्मानुभवः अनुकूलः इति ज्ञाने सति हि तद्विषयकेच्छा जायेत । ब्रह्मानुभवे

अनुकूलत्वज्ञानं च विषयभूतब्रह्मण: अनुकूलत्वे सत्येव संभवति। ज्ञान गतानुकूल्यस्य विषयानुकूल्याधीनत्वात्। ब्रह्मणि अनुकूलत्वज्ञानं ब्रह्मण: निर्दोषत्वकल्याणगुणाकरत्वज्ञानाधीनमिति तदुभयनिरूपणाय उभयलिंगपादस्य प्रवृत्तिः। अत: ब्रह्मगतनिर्दोषत्वकल्याणगुणाकरत्व-ज्ञानमपि उपासनप्रवृत्तिप्रयोजकम्। निर्गुणे वस्तुनि उपासनाप्रवृत्तेः सगुणस्यैवोपास्यत्वमिति तत्तद्विद्योदिततत्तद्विषयकत्वनिरूपणाय गुणोप-संहारपादः तृतीयः प्रवृत्तः। निश्शेषाविद्यानिवृत्तिपूर्वकब्रह्मानुभवरूप-मोक्षं प्रति तत्तद्गुणविषयकब्रह्मोपासनंमात्रं न कारणं भवति। कर्मापि हि तत्र कारणम्। विद्यां चाविद्यांच यस्तद्वेदोभयं सह।

'अविद्याया मृत्युं तीर्त्वा विद्ययऽमृतमश्नुते' इति कर्मणामपि हेतुत्वबोधनात्। तत्र कर्म अङ्गभूतं सत् हेतुर्भवति विद्यावाङ्गीभूता-कारणमिति तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशके न' इत्यादिश्रुतिसिद्धमिति। कर्मांगकोपासनस्यैव तत्र फले कारणत्वमिति तृतीयाध्यायस्य उपासनप्रवृत्ति प्रयोजकार्थनिरूपण परत्वम्॥ अथ चतुर्थाध्यायस्याप्येतदर्थनिरूपणपरत्वमुपपाद्यते। ब्रह्म प्राप्तेः मोक्षत्वं ब्रूमः। ब्रह्मप्राप्तिश्च उत्तरपूर्वाघाश्लेषविनाशपूर्वक: यः भोगाधीनप्रारब्धनाश: तदनन्तरभाविनो तत्प्रयोज्या च या उत्क्रान्तिः तदनन्तरकालीना च या अर्चिरादिगतिः तज्जनितदेशविशेषावच्छिन्न ब्रह्मप्राप्तिः या सैव तत्र उत्तरपूर्वाघाश्लेषविनाशपूर्वक भोगाधीन-प्रारब्धनाशप्रतिपादनपरः चतुर्थाध्यायप्रथमपादः। द्वितीयस्तु प्रारब्ध नाशानन्तरभाव्युत्क्रान्तिप्रतिपादनपरः। अर्चिरादिगतिप्रतिपादनपरः तृतीयः। देशविशेषावच्छिन्नब्रह्मानुभवप्रकारविशोधनपरश्चतुर्थः॥ 'तद्यथा इषीकतूलमग्नौ प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते, पुष्कर पलाश आपो नाश्लिष्यन्ते, 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये, अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय अर्चिषोऽहः अह्नः आपूर्यमाणपक्षं...इत्यादि श्रुतिशतसिद्धं मोक्षस्यैतद्रूपत्वम्। एतादृशब्रह्मानुभवरूपमोक्षेच्छोरेव उपासनप्रवृत्तेः इच्छाविषयभूत-तादृशार्थस्य उपासनप्रवृत्ति प्रयोजकत्वमिति ध्येयम्। एतत्सर्वं तदन्तर

प्रतिपत्त्यधिकरणारम्भश्रीभाष्यसिद्धम् । इयमत्र श्रीभाष्य श्रीसूक्तिः— उत्तरेणेदानीं तत्प्राप्त्युपायैस्सह प्राप्तिप्रकारः चिन्तयितुमिष्यते । तत्र तृतीयाध्याये उपायभूतोपासनचिन्ता वर्तते । उपासनारम्भाभ्यर्हितोपायश्च प्राप्यवस्तुव्यतिरिक्तवैतृष्ण्यम् । प्राप्यतृष्णा चेति तत्सिध्यर्थं जीवस्य लोकान्तरेषु सञ्चरतो जाग्रतः सुषुप्तस्य मूर्च्छतश्च दोषाः परस्य च ब्रह्मणः तद्रहितता कल्याणगुणाकरत्वं च प्रथमद्वितीययोः पादयोः प्रतिपाद्यन्त इति । एवं पूर्वोत्तरद्विकभेदभिन्न शारीरकशास्त्रे 'कारणत्वमबाध्यत्वमुपायत्वमुपेयता' इति चतुर्णामप्यध्यायानां क्रमेण द्विकद्वयस्य उपपत्तिरुक्ता ।। जगत्कारणत्व तदबाध्यत्व, ब्रह्मोपायत्व, तदुपेयत्वप्रतिपादकत्वं बोध्यम् । प्रथमस्याध्यायस्य समन्वयाध्याय इत्यपि नाम । लक्षणत्वेनोक्तस्य जगत्कारणत्वस्य ब्रह्मणि समन्वयकरणात्तन्नामोपपत्तिः। पूर्वाध्यायोक्तमेवपरमात्मनो जगन्निमित्तोपादानरूपकारणत्वं स्मृति तर्कविरोधपरिहारमुखेन स्थूणाखातक्रमेण स्थापनात् अविरोधाध्यायः इति द्वितीयाध्यायो व्यवह्रियते । भगवत्प्राप्तिरूपमोक्षाख्यफलस्य साधनभूतं यत् कर्माङ्गकोपासनं तत्प्रतिपादकत्वेन तृतीयस्य अध्यायस्य साधनाध्यायनामत्वम् । भगवत्प्राप्तिरूपफलस्य सविस्तारं प्रतिपादनात्, फलाध्याय इति तुर्यस्य नाम ।

### 23. पादनामक्रमनिर्देशः ।

अथ पादानां क्रमं नाम च निर्दिशामः—एकैकस्मिन्नप्यध्याये चत्वार एव पादाः । अतः इदं शारीरकं अध्यायचतुष्टयात्मकं षोडश पादात्मकं च ।।

'शास्त्रं त्वेतत्समन्वित्याविहतिकरणप्राप्तिचिन्ताप्रधानैः

अध्यायैः, षोडशांघ्रि द्विकयुगभिदुरं षट्कभेदादिनीत्या

इत्यधिकरणसारावल्यां अन्वग्राहि ।। प्रथमपादस्य अयोगव्यवच्छेदपादः इति नाम । तत्र जगत्कारणत्वस्य परमात्मायोगव्यवच्छेदप्रतिपादनं हि दृश्यते । त्रिपाद्याः अन्ययोगव्यवच्छेदप्रतिपादनपरता । अस्पष्टजीवादिलिङ्गकपादः द्वितीयः स्पष्टजीवादिलिङ्गकः तृतीयः । स्पष्टतरजीवादिलिङ्गकः चतुर्थः इति त्रिपद्यामपि परस्परं वैलक्षण्यम्।

अत्र त्रिपाद्यां क्रमेण अस्पष्टजीवादिलिङ्गक वाक्यादीन्यादाय तेषां यथायथं जीवप्रधानपरत्वमुद्भाव्य जन्मादिकारणत्वस्य ब्रह्मलक्षणस्य अन्यत्राप्यतिप्रसङ्गेन अतिव्याप्तत्वं चाशङ्कय तत्र कारणत्वायोगव्यवच्छेदः क्रियते। अतः तेषां पादानां अस्पष्टजीवादिलिङ्गकवाक्यादिविचारपरत्वमिति तत्तन्नामभिः ते ते पादा व्यपदिश्यन्ते ॥

द्वितीये प्रथमः स्मृतिपादः। द्वितीयस्तर्कपादः। वियत्पादः तृतीयः। चतुर्थः प्राणपादः। प्रथमे कपिलयोगादिस्मृतिविरोधात् वेदान्तवाक्यानां ब्रह्मपरता नास्तीत्याशंक्य तन्निराकरणपूर्वकं आप्ततममन्वादिस्मृत्यानुकूल्यमेवास्तीति स्थापनात् स्मृतिपाद इति संज्ञा। यद्यप्यस्मिन्नेव पादे तर्कमवलम्ब्य विलक्षणत्वाधिकरणानां प्रवृत्तिरिति अस्यापि तर्कपादत्वं संभवति। अत एव 'तर्कमवलम्बमानः प्रत्यवतिष्ठते' इत्यधिकरणारंभे श्रीभाष्यकारश्चासूक्तिसामञ्जस्यमपि, अथापि तर्कमवलम्ब्यापि स्मृति विरोधे एव पूर्वपक्षिणः प्रवृत्तेः स्मृतिपादत्वमेव तस्य। एतत्सूचनायैव 'स्मृतिविरोधवादी तर्कमवलम्बमानः प्रत्यवतिष्ठते' इति तत्रैवभाषितम्। अनन्तरस्तर्कपादः—अत्र सांख्य वैशेषिकसौगतजैनपाशुपतपक्षाः प्रतिक्षिप्यन्ते। अत एव परपक्षप्रतिक्षेपपादः इत्यप्यस्य नामान्तरम्। 'अतः परपक्षप्रतिक्षेपायानन्तरः पादः प्रवर्तते इति श्री रामानुजभाष्यम्। अत्र परैरुक्ततर्कानुदूष्य सत्तर्कैः स्वमतस्थापनात् तर्कपादत्वमस्य ॥ तर्कपादे' इत्यधिकरणसारावलिः। परपक्षप्रतिक्षेपः किमर्थं क्रियते ? स्वपक्षे परैरुद्भावितदोषपरिहारेणैव स्वमतस्थापनात् इति चेत्। अत्र श्रीभाष्यं 'इदानीं स्वपक्षरक्षणाय परपक्षाः प्रतिक्षिप्यन्ते इतरथा कस्यचित् मन्दधियस्तेषां पक्षाणां युक्त्याभासमूलतामजानतः प्रामाणिकत्वशंकया वैदिकपक्षे किंचित् श्रद्धावैकल्यं जन्येतापि' इति ॥ तुल्यत्वभ्रान्तिसिद्धा प्रकरणसमता तर्कपादे हि वार्या' इत्यपि सारावल्यां द्रष्टव्यम् ॥

यद्यप्यस्मिन् पादे उत्पत्त्यसंभवाधिकरणं दृश्यते। तत्र पञ्चरात्र तन्त्रस्य प्रामाण्यं स्थाप्यते। न तु प्रतिक्षिप्यते इति पादा सङ्गत्यं तदधिकरणस्य। अप्रामाण्यकथने तु तस्य पादसांगत्यं संभवतीति

ऐकमत्यं वोपपादनीयम्। अथापि–पांचरात्रप्रामाण्यवादिपक्षस्यापि पर-पक्षत्यात् तदत्र प्रतिक्षिप्यते इति पादसांगत्यं तस्य सूपपादमिति ब्रूमः।

'प्रत्यर्थित्वं विरोधभ्रममपनयता पञ्चरात्रस्य वार्यं ।
दुस्तर्काद्युत्थितोक्त्या तदितरसमयेष्वित्यनुस्यूतसिद्धिः ॥'

इति सारावल्यामयमर्थः स्फुटः ॥

तदनन्तरं वियत्पादप्राणपादौ, "न वियदश्रुतेः, तथा प्राणाः इति आरंभे वियत्प्राणपादयोः श्रवणादेवं नामधेयं संवृत्तम् ॥ वियत्पादे आकाशस्योत्पत्तिः नित्यस्याप्यात्मनः उत्पत्तिप्रकारशोधनं तस्य ज्ञान-रूपत्वं ज्ञातृत्वं कर्तृत्वं कर्तृत्वस्य परमात्मायत्तत्वं, आत्मनः भगवदंश-रूपत्वमित्येतेऽर्थाः सुविशदमुपन्यस्यन्ते ॥

प्राणपादे वियन्नीत्या समनस्कानां इन्द्रियाणामुत्पत्तिः तेषां संख्या परिणामविशेषः श्रेष्ठप्राणस्य स्वरूपविशेष परिमाणविशेषः देवताभोक्तृगतशरीरेन्द्रियाधिष्ठातृत्वस्य परमात्मायत्तत्वं मुख्यप्राण-व्यतिरिक्तस्य इन्द्रियत्वव्यपदेशः समष्टिसृष्टौ तेजोबन्नादिशरीरकस्य परमात्मनः उत्तरोत्तरकार्यकर्तृत्वमिव व्यष्टिसृष्टावपि चतुर्मुखादि शरीरकस्य तत्कार्यकर्तृत्वमित्याद्यर्थाः स्थाप्यन्ते ॥

अष्टपादघटिते पूर्वद्विके एवमपि कश्चन विभागः — प्रथमे पादे स्वरूपेणासिद्धैः केवलं वादिपरिकल्पितैः हेतुभिः पूर्वपक्षोत्थानम्। द्वितीये—स्वरूपतः सिद्धैरपि व्यभिचारिभिः हेतुभिः पूर्वपक्षकरणम्। तृतीये स्वपक्षसाधकहेतुभिरेव। चतुर्थे परसिद्धान्तानुवादप्रायैः हेतुभिः। पञ्चमषष्ठौ–कारणभूतपरब्रह्मणि वेदबाह्योक्त बाधप्रतिरोधपीडां परि-हरतः। सप्तमाष्टमौ वेदान्तवाक्यान्योन्यविरोधम् इति।

तृतीये प्रथमः वैराग्यपादः। अत्र संसाराग्निविदीपनेन भृशं तप्तानां अतिशयितानंदरूपमोक्षसागरनिमज्जनार्थमुक्त्युपायप्रारंभोपयुक्तं वैराग्यं प्रतिपाद्यते। शारीरकशास्त्रार्थश्रवणोपयोगिवैराग्यं तु नात्रोच्यते। श्रवणारंभे एव तस्यसिद्धत्वात्। तदुक्तं–

संसारोद्विग्नचेताः तनुभृदधिकरोत्यत्र शारीरकांशे
वैराग्यार्थस्तु पादः किमिति पुनरसौ सूत्रकारैर्निबद्धः।

सत्यं प्राप्यांतराणां निरयगणतुलारोपणं मुक्त्युपाय
प्रारंभेऽभ्यर्हितं स्यात् त्वरत इह खलु स्पष्टदृष्टस्वदोषः ।।

स्वर्गलोकगमनकाले स्वर्गात् पुनरागमनकाले पुनश्शरीरप्राप्तौ सर्वत्र जाग्रतो जीवस्य दोषाः कथ्यन्ते ।

अथात्र द्वितीयपादः उभयलिङ्गपादः । अत्र 'परस्य ब्रह्मणः न स्थानतोपि' इत्यारभ्य नित्यनिर्दोषत्वं कल्याणगुणाकरत्वं चोच्यते ।। परब्रह्मणः निर्दोषत्वसिध्यर्थं अचिद्वस्तुनः ब्रह्मरूपत्वप्रकारः, तथा अनवधिकातिशयगुणत्वसिद्ध्यर्थं अन्यस्य परत्वाभावः, अस्य फलप्रदत्वं चोच्यते ।। यद्यप्यादौ अधिकरणचतुष्टयं जीवस्य स्वाप्नदोषप्रतिपादकं दृश्यते इति उभयलिङ्गपादे सांगत्यं नास्तीति प्रतिभायात् । अथापि स्वाप्नार्थं स्रष्टृभाव प्रभृतिबहुविधब्रह्मगुणानामेवात्र प्रतिपादने तात्पर्यात् उभयलिंगपादसङ्गतमेवेदमधिकरणचतुष्टयमिति न दोषः । अत एव 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' इति सूत्रस्वारस्यमुपपद्यते । तत्र जीवगत बन्धनमोक्षकारणत्वप्रतिपादनेन ब्रह्मणः अनवधिकातिशयगुणवत्ताद्युच्यते ।

तृतीये तृतीयो गुणोपसंहारपादः—सगुणब्रह्मोपासनमेव मोक्षजनकं शाण्डिल्यदहरादिविद्याः तत्र तत्र श्रूयमाणाः किमेकविद्याः उत विभिन्नाः । भेदे अनेकशाखासु श्रूयमाणाया एव दहरादिविद्यायाः अपि किं भेदः उताभेदः । केषां केषां गुणानां कुत्र कुत्रोपसंहार्यत्वं कुत्र न इत्यपि बहवो विषयाः अत्र प्रतिपाद्यन्ते । अतः विद्यैक्ये गुणानां उपसंहारः भिन्नत्वे अनुपसंहारश्च कथ्यते ।। अत्र पादे उपसंहार-अनुपसंहारयोः द्वयोरर्थयोः कथनात् विद्ययोः भेदोऽभेदश्च स्थाप्यौ। भेदे अनुपसंहारः अभेदेऽनुपसंहारः इति । एवं च भेदाभेदयोरुभयोः एकविषयत्वाभावात् पादानुगुण्यं नास्तीति अस्य पादस्य गुणोपसंहारपादः इति नाम परित्यज्य 'वेद्यावच्छिन्नविद्यानियमकृत्पादः इति नामान्तरमन्वग्राहि श्रीदेशिकचरणैः ।

एकस्मिन्नेव पादे निपुणनयकृता न द्वयोस्तर्कणं स्यात्
भेदोऽभेदश्च नैको विषय इह भवेदन्यहानप्रसंगात् ।

तस्मादस्मिन्प्रकीर्णा नयविततिरिति प्रेक्षितग्रन्थचोद्ये
वेद्यावच्छिन्नविद्यानियमनकृदयमित्यैदमर्थ्यं समर्थ्यम् ।।

अयमर्थः—वेद्यं भिन्नं चेत् विद्यापि भिन्ना, अभिन्नं चेत्साप्यभिन्ना ।। अतो वेद्यानुरूपं विद्यानियमनमत्र पादे क्रियते, वेद्यभेदस्तु न ब्रह्मभेदनिबन्धनः, परं तु गुणभेदनिबन्धनः इति ।। एवमर्थद्वयप्रतिपादनेपि तदनुगुणनामधेयं एकरूपत्वेन युक्तम् । चतुर्थस्त्वंगपादः—ब्रह्मविद्यायाः कर्म अङ्गमिति स्थाप्यते, अधिकारिभेदेन कानि कर्माणि अङ्गभूतानीत्यप्युच्यते, सन्यासिनां यागाद्यंगाभावेपि तदुचिताश्रमकर्मणा अङ्गसाकल्यं, शमदमादीनां यज्ञादिप्रवृत्तिकर्मभिः न विरोधः प्राणसंशयकाले सर्वान्नानुमतिः पतितस्य विद्यायामनधिकारः इत्याद्यार्थाः स्फुटं परीक्ष्यन्ते ।

चतुर्थध्याये प्रथमः आवृत्तिपादः । द्वितीयः उत्क्रान्तिपादः तृतीयः गतिपादः अन्तिमः फलपादः इति । 'आवृत्तिरसकृदुपदेशात्' इत्यारंभे आवृत्तिपदश्रवणादेतादृशं नाम । अत्रापि यद्यपि फलाध्याये अधिकरणषट्कं साधनभूतोपासने विशेषप्रतिपादनार्थं प्रवृत्तमिति साधनाध्यायभूततृतीयाध्याये एवं सङ्गतं तथापि स्वर्गादिविलक्षणस्यास्योपायस्य 'सुसुखं कर्तुमर्हसि' भजनसुखमेकस्य विपुलं इति सुखरूपफलरूपत्वमेवेति द्योतनायात्राधिकरणषट्कस्यानुबन्धः कृतः इति ।। तदुक्तं अधिकरणसारावल्यां

सूक्ता प्रागेव विद्या किमिति पुनरिमां वक्ति यद्यस्ति शेषं
ब्रूतामेतच्च तत्र पूर्वं नहि तदिहफले सङ्गतेतेति चेन्न ।।
मुक्तेरन्यैरसिद्धिं प्रकृततदविनाभावं आसन्नसिद्धिं
मुक्तावस्थासमं च स्थिरभजनरसं व्यंक्तुमत्रानुबन्धः ।।

अथ द्वितीयः उत्क्रान्तिपादः । अत्र विदुषामुत्क्रान्तिप्रकारः उत्क्रान्तेः विद्वदविद्वत्साधारण्यं विदुषो मूर्धन्यनाड्यैव गमनं मरणकालनियमाभावः इत्यादयः कीर्त्यन्ते ।

तृतीयः गतिपादः । अर्चिरादिना तत्प्रथितेः इति प्रथमं अर्चिरादि गतिश्रवणात् एवं पादनामव्यवस्था ।। बहुधा श्रुतिषु मार्गप्रकारस्याम्नातत्वेपि एकरूपत्वं निरुह्यते । अर्चिरादीनां आतिवाहिकत्वं,

परब्रह्मोपासकगर्भायतृत्वमित्यादयः प्रोच्यन्ते अन्तिमः। फलपादः—अत्र फलस्वरूपं विशोध्यते ।। स्वस्वरूपाविर्भावः, तत्र मतभेदप्रदर्शनपुरस्सरं स्वमतकीर्तनं सङ्कल्पादेवसर्वविधकैंकर्यसिद्धिः स्वेष्टप्रकारेण अशरीर स शरीर नानाविध शरीरत्वेन कैंकर्यकरणं, शरीरस्य स्वेनैव सृज्यत्व निबन्धनाभावः ज्ञानविकासः भगवता भोगमात्रे साम्यं जगत्कारण-त्वादि भगवच्चिह्नं बिना अन्यत्र साम्यमित्यादयोऽत्र वर्ण्यन्ते ।।

अष्टपादयुक्ते उत्तरद्विकेऽपि पूर्वपादद्वयं भवभयतप्तजीवानां ब्रह्मविद्याधिकारमुत्पादयति। उत्तरं पादद्वयं साङ्गब्रह्मविद्यां उपदिशति।

पञ्चमः—ब्रह्मवित्संबन्धिपुण्यपापरूपकर्मनिरसनं बोधयति । षष्ठः स्थूलदेहनिवृत्ति, सप्तमः सूक्ष्मशरीरनिवृत्ति, अष्टमः निर्धूतोपाधि-राशेः निरुपाधिकमहानन्दं वक्तीति विभागप्रकारोपि द्रष्टव्यः ।

## 24. मतद्वयपादसंग्रहः ।

एवमस्मिन् शारीरकशास्त्रे रामानुजभाष्यमवलम्ब्य विशिष्टा-द्वैतिमते स्थित्वा पादार्थाः निरूपिताः । अथाद्वैतिनां द्वैतिनां मतेऽपि पादार्थान् संग्रहेण विलिखामः—प्रथममद्वैतिमतं प्रस्तौमः—

### प्रथमाध्याये–प्रथमे पादे

1 जगत्कारणं ब्रह्मेति प्रथमं निरूप्य अर्थान्तरप्रसिद्धाः अपि आकाशादिशब्दाः ब्रह्मपरा एव स्पष्टब्रह्मलिङ्ग सद्भावात् इति निर्णीयते।

2 द्वितीये—सविशेष ब्रह्मलिङ्गनिरूपणं क्रियते, योगाख्यशक्ति मत्पदविचारो वा

3 तृतीये निर्विशेषब्रह्मलिङ्गनिरूपणम् रूढिशक्तिमत्पद-विचारोपि ।

4 चतुर्थे—जगत्कारणत्वस्य प्रधानादौ व्यभिचारात् अलक्षणत्व मित्याशंक्य परिह्रियते ।

### द्वितीयाध्याये–प्रथमे पादे

1 ब्रह्मणः जगत्कारणत्वाभ्युपगमे स्मृतिन्यायविरोधः इति शङ्कामुद्भाव्य परिहारः क्रियते ।

2 प्रधानादिवादाः न्यायाभासमूलकाः इति कथ्यते ।

3 श्रुतिविप्रतिषेधपरिहारे मानान्तरानुगुणश्रुत्युपष्टंभेन भूत-भोक्तृविषयकश्रुतिविरोधपरिहारः क्रियते ॥

3 भौतिकविषयश्रुतिविप्रतिषेधपरिहारः इन्द्रियाणां तन्मते भौतिकत्वात् तद्विचारस्यात्र क्रियमाणत्वात् ॥

तृतीयाध्याये प्रथमपादे

1 वैराग्यनिष्पत्त्यर्थं संसारगतिभेदप्रदर्शनम् ।

2 महावाक्यार्थनिर्णयाय–त्वंपदतत्पदार्थविवेकः ।

3 सगुणविषयकविज्ञानभेदाभेदचिन्ता ।

4 इतिकर्तव्यतानिरूपणम् ।

चतुर्थेऽध्याये–प्रथमपादे

1 निर्गुणविद्याफलैकदेशरूपबन्धनिवृत्तिः पूर्वोत्तरकर्म विनाशाश्लेषौ ॥

2 अपरविद्यानिष्ठस्योत्क्रान्तिः ।

3 सगुणविद्याकार्यार्चिरादिगतिः ।

4 द्विविधविद्याफलम् ।

अथ द्वैतिमते पादार्थसंग्रह :—

1-1 नामसमन्वयः अन्यत्र प्रसिद्धपदानामपि समन्वयः ।
अत्र स्पष्टास्पष्टब्रह्मलिङ्गत्वादिरूपो विभागो नाभिमतः ।

2 लिङ्गानां–अन्यत्र प्रसिद्धानां वाक्यानां समन्वयः ।

3 उभयत्र प्रसिद्धलिङ्ग (वाक्य) समन्वयः ।

4 अन्यपरत्वाभावेऽनुपपन्नत्वेन संयग्बुध्यमाननां शब्दानामपि समन्वयः ।

2-1 युक्त्यविरोधः ।

2 समयाविरोधः—विरुद्धसमयनिराकरणम् ।

3 युक्तिसहित श्रुत्यविरोधः अधिभूताधिदैवतश्रुतिविरोधपरिहारः।

4 अध्यात्मविचारः। एतद्वयतिरिक्ताधिभूतादिविचारः पूर्वं वृत्तः।

3-1 मुमुक्षुनिष्ठे मुक्तिसाधनचतुष्टये प्रथमस्य वैराग्यस्योक्तिः ।

2 माहात्म्यज्ञानपूर्वक सुदृढस्नेहस्य भक्तिवर्धनम् ।

3 तारतम्योपेतोपासननिरूपणं फलतासम्यसिध्यर्थम् ।

4 उपासनजन्यापरोक्षज्ञानरूपसाधननिरूपणम् ।

4-1 कर्मक्षयः । 2 उत्क्रान्तिः । 3 अर्चिरादिमार्गः ।

4 भोगरूपफलप्रदर्शनम् ।

अत्र सुसूक्ष्मं मतत्रयोक्तस्यार्थस्य परिशीलने क्रियमाणे प्रायशः पादार्थाः मतत्रयेऽपि एकरूपतामेव भजन्ति । वाचकशब्दाः परं भिन्नाः दृश्यन्ते । निर्गुणं सगुणं इति ब्रह्मणः द्वैविध्यं परं अद्वैतिनः कल्पयन्ति । द्वैतिनश्च उपासनानन्तरं जायमानात् तद्भिन्नादपरोक्षज्ञानान्मुक्तिं उशन्ति । एतद्व्यतिरिक्ताः सर्वे अंशाः एकरूपा एव प्रायः ।। अधिकरणनिरूपणप्रक्रिया अधिकरणभेदकल्पनं विषयवाक्यभेदकल्पनं इत्यादि बहुलं भिद्यते । तत्रापि द्वैतिनः अन्यदन्यदेव विषयवाक्यं निर्दिशन्ति ।

प्रायशस्तत्तन्मतप्रवर्तकाचार्याः स्वपूर्वप्रदर्शितमतसिद्धार्थविपरीतार्थकथने एव स्वस्य ख्यातिः भवेदिति आलोच्य विपरीतार्थवर्णनासक्तचित्ताः श्रुतिसूत्रस्वारस्यमप्यनालोढ्य युक्त्याभासं प्रधानत्वेनावलम्बमानाः अधिकरण सूत्रभेदादिकल्पनमपि विरचय्य अपूर्वमपूर्वं कंचन अर्थं ब्रुवन्तो दृश्यन्ते ।। सूत्राण्यपि भङ्क्त्वा परसूत्रात् तच्छेषं संयोज्यापूर्वसूत्रमपि प्रणयन्ति ।।

यथोपपादने सर्वासामपि श्रुतीनां सूत्रजालानां च सामरस्यं भवेत् तथोपपादनं श्रीरामानुजभाष्ये एवेति सर्वमतानुयायिनोऽपि ब्रुवते । पण्डितपामरसाधारण्येन सर्वैरप्ययमर्थः उररीक्रियते । देशान्तरस्था अपि श्रीभगवद्रामानुजमुनिप्रणीतं ब्रह्मसूत्रार्थविवरणरूपं श्रीमद्भाष्यं भाषान्तरेण विपरिणमय्य तदर्थं आशयं च बुध्वा श्रीमद्रामानुजमुनिं प्रशंसन्ति इति कर्णपरम्परया श्रुतं सर्वैः । लोकविरोधं विनाऽर्थवर्णनं तत्रैकत्रैवेति विदुषां निश्चप्रचम् । स्तुवन्ति चेमं रामानुजमुनिमभियुक्ताः—

प्रायो लोकानुसारात् निखिलनिगमवाक्यानुगुण्यात् परैर-
प्यादर्तव्याखिलार्थात् अखिलतनुभृतां रूपमुक्त्यादिसाम्यात् ।

भूतेष्वीशाङ्गतोक्तेः शरणवरणतः सर्वमोक्षार्हतोक्त्या
मुक्तावानन्दसाम्यात् यतिपतिकथितं सर्वसंमाननार्हम् ।।

## 25. पेटिकाविभागः ।

अथ पेटिकाविभागे किञ्चिदवतरामः—

1 यथा एकस्यां पेटिकायां अनेकानि वस्तूनि निक्षिप्यन्ते । एवमेवात्रापि एकस्यां पेटिकायां द्वे त्रीणि चत्वारि अधिकरणानि निक्षिप्तानि सन्ति । संभूयैकार्थप्रतिपादिका एका पेटिका भवति । तद्यथा—

व्युत्पत्त्यभावः प्रतिपत्तिदौस्थ्य मन्येनलभ्यत्वमथाफलत्वम् ।
एतानि वै सूत्रचतुष्टयेनानारम्भमूलानि निराकृतानि ।।

इत्यवान्तरैकैकार्थप्रतिपादनं एकैकस्मिन्नधिकरणे प्रथमाध्यायप्रथमपादाधिकरणचतुष्टये । अथाप्यनेनाधिकरणचतुष्टयेन शास्त्रारम्भसमर्थनरूपैकमुख्यार्थप्रतिपादनमिति तच्चतुष्टयमेकपेटिकान्तर्गतम् । अवान्तरानेकार्थप्रतिपादिका सती एकमुख्यार्थप्रतिपादिका पेटिका । अत्रेयं यथासंभव मूह्या । अत्रेमं पेटिकाविभागं प्रत्यध्यायं प्रतिपादं विस्तरेणाधिकरणनामनिर्देशपूर्वकं ब्रूमःसुखग्रहणाय ।

प्रथमाध्याय प्रथमपादे प्रथममधिकरणचतुष्टयं शास्त्रारम्भार्थोपोद्घातपेटिकान्तर्गतम् । तत्राप्यधिकरणद्वयं सिद्धे ब्रह्मणि प्रतीतिजननार्थपेटिकारूपं, शिष्टमधिकरणद्वयं अप्राप्तत्व सफलत्वरूपतात्पर्यलिङ्ग समर्थनार्थपेटिकारूपम् । अवशिष्टान्यधिकरणान्येकपेटिका अनुमानयोग्यप्रधानपुरुषनिराकरणपरत्वात् । तत्रापि ईक्षत्यधिकरणादीनि त्रीणि सदात्मपुरुषरूप सामान्यशब्दात्मकश्रुत्या समुत्पन्नस्य पूर्वपक्षस्य ईक्षत्यादिलिङ्गबलेन प्रतिक्षेपपराणि अवान्तरपेटिकान्तर्गतानि । अकाशाधिकरणप्राणाधिकरणे अप्येकावान्तरपेटिकारूपे । रूढिं हित्वा योगशक्त्या परब्रह्मप्रतिपादनपरत्वात् । एवं ज्योतिरधिकरणेन्द्रप्राणाधिकरणे अपि अवान्तरपेटिकारूपे । रूढिभङ्गमन्तरेण परमात्मप्रतिपादन परत्वात् । ज्योतिरधिकरणे दिव्यतेजोविशिष्टविग्रहयुक्तपरमपुरुषप्रतिपादनं, इन्द्रप्राणधिकरणे इन्द्रप्राणविशिष्टपरमात्मबोधनम्, पूर्वत्र

रूढ्यर्थमात्रस्वीकारः; परत्र रूढ्यर्थस्वीकारेण सहापर्यवसानवृत्तिः स्वीकृतेति विशेषः। एवमुक्तप्रकारेण पेटिकासङ्गताववान्तरपेटिका - सङ्गतिरपि बोध्या ॥

द्वितीये पादे–अत्राधिकरणषट्कं विद्यते। सर्वमपि इदमधिकरणं एकपेटिकारूपम् — अत्रोदाहृतविषयवाक्येषु ब्रह्मात्मपुरुषपदश्रवणात् तेषां च शब्दानां 'ब्रह्मपरिबृढं सर्वतः, आत्मनः आकाशस्संभूतः, पुरुष एवेदं सर्वं, इति लोकवेदप्रसिद्धरूढिविशेषात् परमात्मपरत्वात् तत्प्रति पादकत्वमिति एका पेटिका। यद्वा अत्र प्रथममधिकरणत्रयं उपासितृणां अल्पीभूतहृदयगुहाक्ष्यन्तरस्थपरब्रह्मोपासनप्रतिपादकम्। उत्तरं च जगदन्तर्यामित्वविभुत्वअभिविमानत्वगुणैः महापरिमाणविशिष्टतया परमात्मोपासनप्रतिपादकमिति पेटिकाद्वयं द्रष्टव्यम्। उक्तं च सारावल्यां—

त्रिष्वत्रोपासितृणां मितहृदयगुहाक्ष्यन्तरश्चिन्त्य उक्तः
विश्वान्तर्यामितादेः विपुलपरिमितः चिन्तनीयस्त्रयेऽथ।
षट्सु ब्रह्मात्मशब्दौ पुरुषपदमपि क्षेत्रतज्ज्ञप्रपञ्च—
व्यावृत्ते विश्वहेतौ प्रकरणनियमान्नामवृत्त्या नमन्ति।

3 तृतीयपादे–अत्राद्यमधिकरणषट्कं दशमं च तत्र तत्रोदाहृत श्रुतिवाक्यानां स्पष्टजीवादिलिङ्गकानां परमात्मपरत्वस्थापनरूपत्वात् एका पेटिका, मध्यगतमधिकरणत्रयं देवताशूद्रयोः ब्रह्मोपासने अधि- कारतदभावसमर्थनार्थप्रवृत्तत्वेनान्यविषयत्वात् पेटिकान्तरम्॥

4 चतुर्थे—आद्यमधिकरणषट्कं सांख्योक्तार्थशङ्काप्रतिक्षेपपरम्। अन्तिमं अधिकरणद्वयं योगसिद्धान्तोक्तार्थप्रतिक्षेपपरं इति पेटिकाद्वयं बोध्यम्। अत्रापि आद्याधिकरणद्वयेन कपिलाभिमतप्रधानप्रतिक्षेपः तृतीयेन कपिलाभिमततत्वसंख्याप्रतिक्षेपः चतुर्थेन प्रधानवाचिनः अव्या कृतशब्दस्यापि प्रकृतिद्वारवृत्त्या परमात्मपरत्वस्थापनं पञ्चमषष्ठाभ्यां बद्धमुक्तव्यावृत्तिः अवशिष्टाधिकरणद्वयेन योगादितन्त्रान्तरोक्तनिमित्त मात्रेश्वरनिरासः इत्यवान्तरपेटिकापि ऊह्या ॥

1 द्वितीयाध्यायप्रथमपादे — स्मृत्यधिकरण योगप्रत्युक्ताधिकरणे स्मृतिविरोधपरिहारपरे इत्येका पेटिका अवशिष्टमधिकरणाष्टकं न्यायविरोधपरिहारपरमित्यपरा पेटिका ।। पूर्वत्र स्मृतिमात्रविरोधपरिहारः । उत्तरत्र न्यायविरोधोद्भावनमुखेन प्रवृत्तस्मृतिविरोधस्य परिहारः ।

2 द्वितीयपादे—अत्राद्यधिकरणसप्तकं सौगतादिपरपक्षप्रतिक्षेपपरत्वात् एकपेटिकान्तर्गतम् । अष्टमं तु पञ्चरात्रतन्त्रप्रामाण्यसमर्थनपरमित्यपरा पेटिका ।।

यद्वा पञ्चरात्रतन्त्रस्याप्यप्रमाण्यं ये वदन्ति, तद्वादस्यापि परपक्षत्वात् तत्प्रतिक्षेपोऽत्र क्रियते इति सर्वमप्यधिकरणं परपक्षप्रतिक्षेपपरं इत्येकैव पेटिका । तदुक्तं सारावल्यां—

प्रामाण्यं कर्मकाण्डस्मृतिनयवशतः सात्त्वतस्यापि सिद्धं
पादेऽस्मिन् सङ्गतिश्च प्रतिमतदमने नास्त्यमुष्येति चेन्न ।
प्रत्यर्थित्वं विरोधभ्रममपनयता पञ्चरात्रस्य वार्यं
दुस्तर्काद्युत्थितोक्त्या तदितरसमयेष्वित्यनुस्यूतसिद्धिः ।।

अयमाशयः—परमताप्रमाण्यस्थापनार्थं प्रवृत्तोऽयं पादः । अत्र प्रामाण्यस्थापनं कथं सङ्गतं इति शङ्का । अस्याः एवमत्र परिहारः । सामान्यतः कस्यचिदर्थस्य प्रतिपादनेपि तदपवादतयाप्यन्यार्थप्रतिपादनं युक्तम् । यथा भेदनिरूपणस्याध्यायस्य द्वितीयस्यान्ते शाखान्तराधिकरणे तदपवादतयाऽभेदप्रतिपादनम् । यथा वा प्रकृतिविशेषनिर्धारणार्थे अष्टमाध्याये अन्ते तदपवादतया दर्वीहोमानां प्रकृत्यभाव निरूपणं तथा अप्रामाण्यापवादतया प्रामण्यनिरूपणमिह सङ्गतम् । अपवादे सति तदनुक्तौ पादस्य न्यूनतापत्तिरिति ।। अत्राप्यतृप्तेन अनुस्यूतार्थापेक्षिणा शङ्कायां कृतायां अस्याप्यधिकरणस्यानुस्यूतार्थबोधने तात्पर्यमस्तीति बोधनाय सारावलिः ।।

अत्र पादे सर्वेष्वप्यधिकरणेषु सर्वाणि सूत्राणि सिद्धान्तसूत्राणि । अस्मिन् पंचरात्राधिकरणे 'उत्पत्त्यसंभवात्, न च कर्तुः करणं, इति सूत्रद्वयं पूर्वपक्षसूत्रं, विज्ञानादिभावे वा तदप्रतिषेधः, विप्रतिषेधाच्च;

सूत्रद्वयं सिद्धान्तसूत्रं, इति विपर्यासो वर्तते । तत्कथं एकरूपत्वमिति शङ्का । अस्यैवं परिहारः–सर्वमपि सिद्धान्तसूत्रमेव । इयमत्राधिकरण रचना—पञ्चरात्रं वेदार्थविरोधि उताविरोधीति शङ्का—विरोधीति पूर्वपक्षे उत्तरं प्रथमसूत्रद्वयम् । तस्य विरोधित्वे जीवस्योत्पत्तिः जीवान्मनसश्चोत्पत्तिश्चाङ्गीकृता स्यात् । तत्तु न युक्तम् । एवं आशङ्कापरिहारे कृते जीवोत्पत्तिबोधकत्वेन जीवान्मनसश्चोत्पत्तिबोधकत्वेन च मतान्तरवत् पञ्चरात्रस्याप्यप्रामाण्यं स्यात् । पूर्वमीमांसास्मृत्यधिकरणविरोधश्च इत्याशङ्कायां उत्तरसूत्रप्रवृत्तिः इति न कोपि दोषः ।।

आद्यमधिकरणद्वयं कल्पितवस्तूपादानभावप्रतिक्षेपपरमित्येकपेटिकान्तर्गतम् । यद्वा--प्रथमं रचनानुपपत्त्यधिकरणं सप्तमं पशुपत्यधिकरणं च एकपेटिकान्तर्गतं प्रधानकारणत्वनिरासपरत्वात् । प्रधानकारणत्वाभ्युपगमसाम्यात् प्रथमाधिकरणानन्तरं सप्तमाधिकरणस्य कुतो न प्रवृत्तिरितिचेत् पाशुपतमतस्य सौगतार्हतमतात् अत्यन्तवेदबाह्यत्वेन न जघन्यत्वसूचनार्थमित्यवधारय । ततः वैशिषिकमतनिरासकं महद्दीर्घाधिकरणं, सौगतमतनिरासार्थकाधिकरणत्रयं आर्हतमतप्रतिक्षेपकं एकस्मिन्नसंभवाधिकरणं परमाणुकारणवादनिरासपरत्वादेका पेटिका ।

3 तृतीयपादे — पूर्वमधिकरणत्रयं उत्पत्तिविषयकविचाररूपत्वादेकपेटिकान्तर्गतम् । अवशिष्टाधिकरणचतुष्टयं जीवस्वरूपतद्गत विशेषादिविचारपरत्वादन्या पेटिका ।।

4 चतुर्थे — अधिकरणत्रयं इन्द्रियाणां उत्पत्तिसंख्यापरिमाणबोधनपरत्वादेका पेटिका । अथ वायुक्रियाधिकरणं, श्रेष्ठाणुत्वाधिकरणं सप्तमं इन्द्रियाधिकरणं चैकपेटिकान्तर्गतम् । आद्याधिकरणत्रयेपि प्राणस्यैव विचार्यमाणत्वात् 'त इन्द्रियाणि तद्व्यपदेशात् अन्यत्रश्रेष्ठात्' इति श्रेष्ठप्राण व्यतिरिक्त सर्वेषामिन्द्रियत्वोक्तेः तस्यानिन्द्रियत्वस्थापनेन तस्यापि श्रेष्ठप्राणविषयकं विचारपरत्वमिति ध्येयम् । मध्यपतितं षष्ठं ज्योतिराद्यधिष्ठानाधिकरणं तु प्रासाङ्गिकं देवताद्यधिकरणमिव संज्ञामूर्तिक्लृप्त्यधिकरणं तु पृथक् पेटिका ।

3–1 तृतीयाध्यायप्रथमपादे अधिकरणषट्कं विद्यते । अत्र पेटिकाद्वयं, आरोहणपेटिका अवरोहणपेटिकाचेति । आरोहणावच्छेदेन जीवस्य दोषप्रतिपादिका आरोहणपेटिका, अवरोहणावच्छेदेन दोष-प्रतिपादिका अवरोहणपेटिका । प्रथमं तदन्तरप्रतिपत्त्यधिकरणं आरोहणपेटिका, शिष्टमधिकरणपञ्चकं अवरोहणपेटिका । आरोहणं धूम रात्रि अपरपक्षदक्षिणायनषण्मास पितृलोक आकाशचन्द्रक्रमेण, अवरोहणं तु चन्द्रमसः स्थानात् अकाशवायुधूमाभ्रक्रमेण ।। एकस्या-मपिपेटिकायां एकमपि वस्तु निक्षिप्यते । तथाऽत्रारोहणपेटिका एका-धिकरणरूपा । अत्र बहुभिस्सूत्रैः बह्वर्थप्रतिपादनं त्वस्ति ।

3–2 द्वितीयपादेऽपि पेटिकाद्वयमेव—जीवस्य सर्वास्ववस्थासु न दोषवत्वप्रतिपादनमुखेन ब्रह्मणः जाग्रत्स्वप्नसुषुप्त्यादि सर्वावस्थाकर्तु-त्वरूपमाहात्म्यादिगुणवत्वबोधनपरा चतुरधिकरणी एका पेटिका । अवशिष्टा ब्रह्मणः गुणवत्वबोधनपरा अपरा । तत्र पूर्वाभ्यां उभय-लिङ्गाधिकरण अहिकुण्डलाधिकरणाभ्यां ब्रह्मणः दोषवद्वस्तु संसर्गमूलाः ब्रह्मप्रकृतितादात्म्याभिधानमूलाश्च दोषाः परिह्रियन्ते । अवशिष्टा-भ्यामधिकरणाभ्यां परमात्मनः सर्वस्मात्परत्वनिरतिशयौदार्यहानी परिह्रियेते ।। इत्यावन्तरपेटिकाद्वयं बोध्यम् । उक्तं च सारावल्यां 'संसर्गैक्यादिमूलान् परिहरति ततो दोषवर्गानुभाभ्यां हीनत्वौदार्यहानी परमपनयते नीतियुग्मेन नेतुः ।।' इति ।

3–3 तृतीयपादे — विद्याभेदाभेदनिबन्धनगुणानुपसंहारगुणोप-संहारौ विद्यानां परस्परमत्रोच्येते इति भेदसाधकाधिकरणान्येका पेटिका अभेदसाधकान्यधिकरणान्यपरा पेटिका । अभेदसाधकाधि-करणेषु मध्ये भेदसाधकाधिकरणानां भेदसाधकाधिकरणेषु मध्ये अभेदसाधकाधिकरणानां च प्रवृत्तिः सङ्गत्यतिशयादिति निष्कृष्टव्यम्। 'इदानीं गुणोपसंहारानुपसंहारविकल्पनिर्णयाय भेदाऽभेदचिन्ता प्रस्तू-यते' इति श्रीमद्भाष्यम् ।। कार्याख्यानाधिकरणं वेधाद्यधिकरणं एवं अन्यच्च प्रासङ्गिकं बोध्यम् ।

3–4 चतुर्थपादे—पुरुषार्थाधिकरणं स्तुतिमात्राधिकरणं पारिप्लवार्थाधिकरणंचैका पेटिका, विद्यायां फलश्रुतेः प्रतर्दनो हवै दैवोदासिः इत्यादीनां वेदान्तेषूक्तानां रसतमत्वप्रतिपादकवाक्यानां च, आख्यानानां च स्तुतिरूपत्व खण्डनात् । अत्र प्रथमाधिकरणं साक्षात् सङ्गतम् । अनन्तराधिकरणद्वयं प्रासङ्गिकम् ।। ततः अग्नीन्धनाद्यधिकरण, सर्वापेक्षाधिकरण शमदमाद्यधिकरण सहकार्यन्तरविध्यधिकरण-अनाविष्काराधिकरणानि कर्मविशेषाणां ब्रह्मविद्याङ्गत्वप्रतिपादन पराणीत्यपरा पेटिका। सर्वान्नानुमत्यधिकरणं प्रासङ्गिकमित्यन्या पेटिका विहितत्वाधिकरणमपि तथा । विधुरतद्भूताधिकरणद्वयं विधुर पतितयोः ब्रह्मविद्यायां अधिकारतदभावस्थापनपरं पेटिकान्तरम् ।। ऐहिकाधिकरणमुक्तिफलाधिकरणे अङ्गिनिष्ठासिद्धिसमयनिरूपणपरे इत्येका पेटिका ।।

4–1 चतुर्थाध्याये प्रथमपादे—आवृत्त्यधिकरणं आत्मत्वोपासनाधिकरणं आसीनाधिकरणं च एकपेटिका । उपासने विशेषप्रतिपादनपरत्वात् । प्रतीकाधिकरणं आदित्यादिमत्यधिकरणं च प्रासङ्गिकम् । सप्तममष्टमंचाधिकरणं उत्तरपूर्वपुण्यपापयोः अश्लेषविनाश प्रतिपादनपरत्वेन एकपेटिका । नवमं दशमं एकादशे च पृथक् पृथक् ।

द्वितीयपादे — अधिकरणान्येकादश । प्रथमाधिकरणादारभ्य अविभागाधिकरणपर्यन्तम् । विद्वदविदुषोः समानाकारोत्क्रान्तिप्रकारप्रतिपादनपरत्वादेकपेटिका । आसृत्युपक्रमाधिकरणं तु मध्ये आक्षेपतः प्राप्तम् ।। तदोकोधिकरणं रश्म्यनुसाराधिकरणं च पृथक् पृथक् पेटिका । उपर्यधिकरणद्वयं निशादक्षिणायनमृतस्यापि ब्रह्मप्राप्तिप्रतिपादनपरं पेटिका ।।

4–3 तृतीयपादे — अधिकरणत्रयं अर्चिरादिमार्गप्रकारनिर्णयरूपत्वेन एकपेटिका । चतुर्थं पञ्चमं च पृथक्पृथक् ।।

4–4 चतुर्थपादे—अत्र षडधिकरणानि सन्ति, प्रथममधिकरणत्रयं एकपेटिका। परं ज्योतिरूपसंपन्नस्य स्वस्वरूपाविर्भावविचारपरम्।

द्वितीयमधिकरणत्रयं स्वच्छन्दकैंकर्यभोगाभिधानपरमपरा पेटिका इति।।
तदुक्तं सारावल्याम्—

स्वाविर्भावोऽत्र चिन्त्यः त्रिभिरधिकरणैः छन्दवृत्तिस्त्रिभि
श्चेत्येवं द्वे पेटिके स्तः उभयमिदं नोपधेरीशनिघ्नम् ।। इति ।।

एवमत्र तत्तन्मताचार्याः विद्वांसश्च स्वस्वप्रतिभातिशयावलम्बनेन सूत्रभेदाधिकरणभेदकल्पनमिव पेटिकाविभागभेदमपि कल्पयेयुः परं तु सर्वोपि विभागः अन्ततः पूर्वोक्तविभागे एव पर्यवस्यतीति नातीव विचारविषयोऽयम् । एकाकारतया स्थितायाः उपनिषदः सूत्रजातस्य भगवद्गीतायाश्च हि स्वबुद्धिबलात् पदच्छेदमन्यथा निर्धार्य अर्थभेदं वर्णयन्ति विद्वांसः। अविभागो वचनात्' इत्येकाकारमेव सूत्रम्। अत्र हि वचनात्, इति च अवचनात् इति वा पदच्छेदः कर्तुं शक्यते । उभयथाप्यर्थे साङ्गत्यमपि भवति । तदत्र श्रीमद्भाष्यम्—

एवं श्रुतिसूत्राकारभेदे च वाक्यवैलक्षण्ये च स्थितेऽर्थं वदतां किमु वक्तव्यमिति ।।

## 26. सङ्गतिविभागः

एवमस्मिन् शारीरके नये पेटिकाविभागं पूर्वाचार्य संप्रतिपन्नया दिशा अब्रूमहि । अथ सङ्गतिविभागं संगृह्णीमः—

शास्त्र काण्ड द्विक अध्याय पाद पेटिका अधिकरणरूप संबन्धभेदेन सप्तविधाः सङ्गतयः । जिज्ञसाधिकरणानन्तरं जन्माद्यधिकरणारंभे इमाः सङ्गतयः एवमुपपादनीयाः ।। उभयोः वेदार्थविचार रूपत्वात् शास्त्रसंगतिः । वेदान्तार्थविचाररूपत्वात् काण्डसङ्गतिः । कारणविषयत्वात् द्विकसङ्गतिः । कारणविषयकवाक्यतर्करूपत्वादध्याय सङ्गतिः । अयोगव्यवच्छेदविश्रान्तेः पादसङ्गतिः । शास्त्रारंभार्थत्वात् पेटिकासङ्गतिः । एवं तत्र तत्र सङ्गतिप्रकारः उपपादनीयः।। एकाधिकरणविचारानन्तरं अन्याधिकरणारम्भे अधिकरणसङ्गतिः वाच्या । नासङ्गतं प्रपुञ्जीत इति न्यायात् । नैयायिकास्तु—एवं विभजन्ति—

सप्रसङ्ग उपोद्घातः हेतुताऽवसरस्तथा ।
निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरिष्यते ।। इति ।

वेदान्तिनस्तु एवमत्राशेरते—असङ्गतं किमपि न वक्तव्यमिति सर्वेषां संप्रदायः । मीमांसा तु भिन्नरूपेण विभक्ता । भिन्नभिन्न प्रकरणगत भिन्नभिन्नवाक्यान्यादाय विचारार्थं प्रवृत्ताधिकरणपुञ्जरूपा । तत्र कं सङ्गतिविशेषं पुरस्कृत्य एकाधिकरणानन्तरं अन्यस्याधिकरणस्य प्रवृत्तिः इत्याकांक्षा जायते—तदर्थं प्रसङ्गादि सङ्गतिः पुरस्करणीया—

प्रसङ्ग, अवसर, आक्षेप, दृष्टान्त, प्रत्युदाहरण ।
अपवाद, अतिदेश, उपोद्घातरूपेणाष्टविधा सङ्गतिः ।।

1 उपस्थितस्योपेक्षानर्हत्वं प्रसंगः । संगत्यन्तराभावस्थले सुलभोपपादनेयं, अत एव प्राथम्यम् । 2 स्थानप्राप्तिरवसरः । 3 पूर्वोक्तार्थस्यान्यथाकरणसूचकः भवेत् इत्यादि शब्दाभिव्यङ्ग्यः आक्षेपः । 4 पूर्वाधिकरणन्यायमुपजीव्य स्थलान्तरेपि तथाविधे पूर्वपक्षे दृष्टान्त संगतिः । 5 पूर्वाधिकरणसिद्धयुक्त्यप्रसरणात् प्रकारान्तराविष्करणं प्रत्युदाहरणम् । 6 पूर्वाधिकरणोपात्तविषयान्तर्गते क्वचित् सिद्धान्तस्यान्यथोक्तौ अपवादसंगतिः । 7 यत्राधिकरणे पूर्वाधिकरणोक्तपूर्वपक्ष सिद्धान्तावेव अधिकाशङ्कापरिहारपूर्वकं उच्येते तत्र अतिदेशसंगतिः । 8 प्रकृतसिद्धयर्थविचारः उपोद्घातसंगतिः इति तत्तत्स्वरूपं बोध्यम्। एवं अन्या अपि काश्चित्संगतयः प्रकरणवलेनानन्तर्यप्रयोजकाः तत्रतत्रोदाहार्याः ।

## 27 अधिकरणलक्षणम् ।

**अथ अधिकरणस्वरूपं पर्यालोचयामः—**

अधिकरणं पञ्चांगमिति वदन्ति ।
विषयः संशयश्चैव विचारो निर्णयस्तथा ।
(विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्)
प्रयोजनं च पञ्चाङ्गं प्राञ्चोऽधिकरणं विदुः । इति ।

अधिकरणं दशांगमित्यपि केचिदाचार्याः आशेरते—
संगतिर्विषयश्चैव संशयोत्थानकारणम्
संशयस्य प्रकारश्च तदर्था च विचारणा।
तस्याः फलफलित्वं च न्यायौ द्वौ पक्षयोः द्वयोः
निर्णयस्तत्फलं चेति बोध्यानि अधिकृतौ दश ।। इति ।
उक्तं चेदं मीमांसापादुकायां श्रीमद्वेङ्कटनाथैः—
आहुश्चान्ये दशांगान्यधिकरणगमे वेद्यमाद्यं तथाऽर्थे
संशीतिं तन्निदानं विविधमपि तथा संगतेश्च प्रकारम् ।
तादर्थ्यार्थं विचारं फलफलिभवनं पक्षयोः न्याययुग्मं
निर्णीतिं तत्फलश्चाप्ययमपि निपुणन्यायवित्संप्रदायः इति
अत्राधिकरणेषु विषयः विषयवाक्यरूपतयैव भाव्यः इति
न निर्बन्धः। संशयास्पदस्सर्वोपि विषयः ।।

28. **सूत्रसंख्या प्रतिपादमधिकरण संख्या च ।**

अत्र शारीरके 'अथातो ब्रह्मजिज्ञासा' इत्यारभ्य 'अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्' इति सूत्रपर्यन्तं स्थितानां सूत्राणां अधिकरणानां च संख्या मतभेदेन भिद्यते अध्यायपादभेदस्तु सर्वमतेऽप्येकरूप एव । न तत्र मतस्थाः विवदन्ते । अधिकरणसंख्याभेदे सूत्रसंख्याभेदे सूत्रान्यथापाठभेदे च परं बहुलं विवादः परिदृश्यते । पूर्वकाले तालपत्रेष्वेव ग्रन्थानां विलेखनमासीत् । संप्रति पत्रादिलाभेन मुद्रणादिसौकर्यसत्वेन च मतानां प्रचारप्रचयः निव्याभिवृद्धः । न तथा पूर्वकाले ग्रन्थानां प्रचारः । तालपत्रविलिखितोपि ग्रन्थः प्रचारापचयात् तालपत्रशैथिल्याच्च कालक्रमेण क्वचित् क्वचित् लुप्तोऽभवत् । वैयाकरणग्रन्था अपि क्वचित् क्वचित् अजभक्षिताः इत्यपि संप्रदायविदो वदन्ति । अक्षराणि च तत्र तत्र मलिनानि चासन्निति निर्विवादम् । तेन शोधकानां बुद्धिदौर्बल्यप्राबल्यबलेन अक्षरभेद पाठान्यथाकरणादि संवृत्तमिति शक्योहम् । केचिदेव तु मेधाविनः पदाक्षराणामावोद्वापाभ्यां अयमेव पाठः समीचीनः अयं तु न इति ऊहित कुशलाः समीचीनं यथावस्थितं पाठं ज्ञातुं प्रभवन्तीति सांप्रतं वक्तुम्

तत्र श्रीरामानुजभाष्यरीत्या सूत्राणां अधिकराणानां संख्या प्रतिपादमधिकरणसंख्या च सारावल्यां स्पष्टं प्रत्यपादि—तद्यथा—

सौत्री संख्या शुभाशीः अधिकृतिगणना चिन्मयी ब्रह्मकाण्डे
तादर्थ्येऽनन्तरत्वेऽप्यधिकरणभिदा नाल्पसारैः प्रकल्प्या ।
अक्षोर्म्याशाहिकाष्ठाद्विरदमुनिवसूर्म्यद्रितत्त्वातिशक्व-
र्यक्षैरक्षैः प्रयाजैः इहभवति रसैः पादनीतिप्रबन्धः ।।

पञ्चचत्वारिंशदधिका पञ्चशती सूत्रसंख्या 545 ।

षट्पञ्चाशदधिकं शतं अधिकरणसंख्या 156 ।

1 अक्षाण्येकादश प्रथमपादे, द्वितीये ऊर्मयः षट् । तृतीये आशा—दश। चतुर्थे अहयः महासर्पाः अष्टौ। पञ्चमे काष्ठा—दश—षष्ठे काष्ठा—दश—षष्ठे द्विरदाः दिग्गजाः अष्टौ । सप्तमे—मुनयः सप्त । अष्टमे—वसवः अष्टौ । नवमे—ऊर्मयः षट् । दशमे—अहयः अष्टौ । एकादशे—तत्त्वानि षट्विंशतिसंख्याकानि । द्वादशे—अतिशक्वरी पञ्चदश । त्रयोदशे—अक्षाण्येकादश । चतुर्दशे—अक्षाण्येकादश—पञ्चदशे—प्रयाजाः षट् । षोडशे—रसाः षट् । एवं प्रतिपादमधिकरणानि निबद्धानि दृश्यन्ते ।।

अथ सुखग्रहणाय केषु ,केषु पादेष्वधिकरणसंख्यासाम्यमस्तीति एतत्प्रदर्शयामः—

प्रथमाध्याय प्रथमपादे, चतुर्था...प्रथमे द्वितीये च—11 अधिकरणानि ।
प्रथमध्याय...द्वितीयपादे, तृतीयाध्याय प्रथमे
चतुर्थाध्याये चतुर्थपादे 6 अधिकरणानि ।
प्रथमाध्यायतृतीये द्वितीयप्रथमे 10 अधिकरणानि ।
प्रथमाध्याये चतुर्थपादे, द्वितीयाध्यायद्वितीये
द्वितीयचतुर्थे, तृतीयाध्यायद्वितीयपादे 8 अधिकरणानि ।

अवशिष्टपादेषु नियतैवाधिकरणसंख्या - साम्यं नास्ति ।
तद्यथा—

द्वितीयाध्याय तृतीयपादे 7 अधिकरणानि ।
तृतीयाध्याय तृतीयपादे 26 अधिकरणानि ।

तृतीयाध्याय चतुर्थें 15 अधिकरणानि ।
चतुर्थाध्याय तृतीयपादे 5 अधिकरणानि ।।

एवमस्मिन् शारीरके सिद्धान्तसूत्रसंख्या पूर्वपक्षसूत्रसंख्या गुणसूत्रसंख्या पूर्वपक्षोपक्रमसूत्रसंख्या इतरमुनिमतप्रकाशसूत्रसंख्याचेति विभागोपि यथायथं ज्ञेयः ।

## 29. औपनिषदविद्याः ।

शारीरकेऽस्मिन् तत्रतत्राधिकरणे औपनिषदविद्याः प्रदर्शिताः ताश्चार्वाचीनफलकाः मोक्षफलकाश्चेति द्विविधाः । सूत्रकारेणापि, कासांचित् विद्यानां मुक्तिफलकत्वं कासांचित् ऐहिकफलकत्वंचेति प्रादर्शि । विकल्पोऽविशिष्टफलत्वात् काम्यास्तु यथाकामं समुच्चीयेरन् नवा पूर्वहेत्वभावात् इति सूत्रद्वयेन । एवं 'ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् 'एवं मुक्तिफलानियमः' इति सूत्राभ्यामप्ययमर्थः प्रपञ्चितः।। तत्ताधिकरणक्रमेण विद्याः प्रदर्शयामः—

1-1-5 ईक्षत्यधिकरणे—सद्विद्या 1
1-1-6 आनन्दमयाधिकरणे—आनन्दमयविद्या 2
1-1-7 अन्तरधिकरणे-उद्गीथहिरण्मयपुरुषदृष्टिः 3
1-1-8 आकाशाधिकरणे—उद्गीथाकाशदृष्टिः 4
1-1-9 प्राणाधिकरणे—प्रस्तावप्राणदृष्टिः 5
1-1-10 ज्योतिरधिकरणे—गायत्रीविद्या कौक्षेयज्योतिर्विद्या 6-7
1-1-11 इन्द्रप्राणाधिकरणे—प्रतर्दनविद्या 8
1-2-1 सर्वत्रप्रसिद्ध्यधिकरणे—शाण्डिल्यविद्या 9
1-2-2, 1-3-6, 1-4-1 अत्त्रधिकरणादौ—नाचिकेतविद्या 10
1-2-3 अन्तराधिकरणे—उपकोसलविद्या, अग्नित्रयविद्या 11-12
1-2-4 अन्तर्याम्यधिकरणे—अन्तर्यामिविद्या (ब्राह्मणं) 13
1-2-5, 1-3-1, 1-3-3 अदृश्यत्वदिगुणकाधिकरणादौ—
—अक्षरविद्या 14
1-2-6 वैश्वानराधिकरणे—वैश्वानरविद्या 15
1-3-2 भूमाधिकरणे—भूमाविद्या 16

एवमत्रोपनिषत्प्रतिपाद्यभूताः मुक्तिफलकाः अर्वाचीनफलकाश्च विद्याः याः तासां सर्वासां विचारः कृतः। ब्रह्मप्राप्तिफलकविद्यानामेव विचारः कार्यः इति नियमो नादृतः। ज्ञानरूपत्वात्सर्वासामपिविद्यानां निरूपणम्। तदुक्तं श्रीमति भाष्ये—

उद्गीथाद्युपासनानि कर्मसमृद्धयर्थान्यपि ब्रह्मज्ञानापेक्षाणि इति इहैव चिन्तनीयानि। तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादकानीति तत्साद्गुण्यापादनान्येतानि सुतरामिहैव संगतानि इति॥

30. पाठभेद अधिकरणभेदादि

मतत्रयेपि अध्यायपादौ न भिद्येते। अध्यायाश्चत्वारः। शास्त्रमिदं अध्यायचतुष्टयात्मकं षोडशपादात्मकं च। पूर्वमीमांसायां प्रत्यध्यायं पादसंख्यानियमं नेच्छन्ति। 5-6-10 अध्यायेषु अष्टौ पादाः अपि सन्ति। अत्र सर्वमतेपि ऐकरस्यमेवैति विशेषः॥ पादाध्यायान्तिमसूत्रे च नैव वैलक्षण्यं पश्यामः। सर्वत्रैकरूपमेव दृश्यते। पादांते पदस्यावृत्तिः न दृश्यते। अध्यायान्ते तु पदावृत्तिः। शास्त्रान्ते तु सूत्रस्यैवावृत्तिः लक्ष्यते। एवं मतत्रयेपि सूत्रसंख्याभेदं अधिकरणसख्याभेदं च प्रतिपादमुशन्ति। अत्र क्वचित्क्वचिदेव द्वयोस्साम्यं, त्रयाणां साम्यं नैव अधिकरणसंख्यायां सूत्रसंख्यायां वा॥

प्रथमाध्याय प्रथमपादे वैराग्यपादे विशिष्टाद्वैतिनां च मते अधिकरणसंख्याचैकरूपा भवति। वैराग्यपादे सूत्रसंख्याप्येकरूपा। चतुर्थाध्याय प्रथमपादे आवृत्तिपादे चतुर्थचतुर्थे फलपादे सूत्रसंख्यात्वेकरूपा। अधिकरणसंख्या विभिन्ना। द्वितीयद्वितीये तर्कपादे प्रथमचतुर्थे स्पष्टतरजीवादिलिङ्गकपादे सूत्रसंख्या विभिन्ना। अधिकरणसंख्यात्वेक रूपा। प्रथमप्रथमपादेपि सूत्रसंख्यैव भिन्ना न त्वधिकरणसंख्या। द्वितीय तृतीयपादे उभयलिङ्गपादेपि अधिकरणसंख्यैवैकरूपा। चतुर्थद्वितीये उत्क्रान्तिपादेपि अधिकरणसंख्यैव एकरूपा। सूत्रसंख्या भिन्नैव।

एवं विशिष्टाद्वैतिमते द्वैतिमते च प्रथमचतुर्थपादे तृतीय चतुर्थपादे चतुर्थप्रथमपादे च सूत्रसंख्या समाना। अधिकरणसंख्यातु भिन्नैव। सर्वस्मिन्नपि पादे विभिन्नैवाधिकरणसंख्या। अद्वैतिद्वैतिमतयोः प्रथम-

द्वितीयपादे चतुर्थतृतीयपादे च सूत्रसंख्या अधिकरणसंख्याचैकरूपा। प्रथमप्रथमे प्रथमतृतीये द्वितीयद्वितीये द्वितीयतृतीये चतुर्थप्रथमे च सूत्रसंख्या समाना। नत्वधिकरणसंख्या।

एवं प्रतिपादं सूत्राधिकरणसंख्यायाः उक्तक्रमेणाभ्युपगमेपि अध्यायपादसंख्याभेदं नैवोशन्ति मतत्रयाचार्याः। मतत्रयेपि अध्याय-पादौ न भिद्येते। अध्यायपादविभागमन्यथाऽकल्पयन्तोऽप्याचार्याः अधिकरण सूत्रविभागमन्यथा कल्पयन्ति। कारणं तु जानीमः। आभासहेतुं मनसि निधाय क्वचित्क्वचित्सूत्राणि अधिकरणानि च अन्यथा कल्पयन्ति, कानिचित्सूत्राणि न दृश्यन्ते च। क्वचित् एकमेव सूत्रं सूत्रद्वयरूपतां भजति। क्वचिच्च एक सूत्रघटकं पदं अन्यसूत्र-शेषं भवति। सूत्रपाठोपि विपर्यस्तो भवति।

पूर्वकाले मुद्रणादेः प्रसक्तिः नैवोदभूत्। यन्त्रादेरभावात्। तालपत्रे केवलं विलिख्य रक्षणमकुर्वन्। तत्र वेदानिव सूत्राण्यपि गुरवः शिष्यानध्यापयामासुः। अतस्तालपत्रापेक्षापि नासीत् नितरां तेषाम्। वेदानां इव गीताया इव च दैनन्दिन पारायणं कुर्वन्त एवावर्तन्त पूर्वं महान्तः। अतस्सर्वेषां सूत्रणां मुखास्थीकरणमेवासीत्। यथा च वेदे गीतायां च बहुलं पाठभेदः दृश्यते तथा निर्निबन्धन एवात्रापि पाठ भेदः इति वक्तव्यम्।

येचार्वाचीनाः तालपत्रमवेक्षितवन्तः, तेषां तु कालक्रमेण तालपत्र शैथिल्यात् अक्षरमालिन्यात् शोधकबुद्धिदौर्बल्याच्च अक्षरभेदपाठान्यथा करणादि जातं इति वक्तुं शक्यम्। अतः उपदेशपरंपरायामेवानादि-पाठभेदसत्वात् तथा तथा शिष्यानध्यापयामासुः प्राचीनाः। स्वस्वमत कल्पनायां स्वपक्षस्थापनायां च व्यग्रताप्रयुक्तः पाठभेदः कल्पित इति न वक्तुं शक्यते। तत्र तत्र परिदृश्यमानपाठभेदस्य स्वस्वमतमात्रानु-कूलत्वाभावात्। एकमतादृतस्य पाठभेदस्यान्यमतानुकूलार्थवर्णनपर-त्वस्यापि संभवात्। अल्पाक्षराणां सूत्राणां अनेकार्थवर्णनक्षमत्वात् स्वस्वमतकल्पितस्यार्थस्य पाठभेदकल्पनामन्तरेणापि सूपपादत्वात्। अतः उपलभ्यमानाः पाठभेदाः नाग्रहेण कल्पिताः इति तु निश्चप्रचम्।

उपदेशकाले यादृशानुपूर्वीविशिष्टतया तैस्तैराचार्यैः सूत्राणि शिक्षितानि तादृशानुपूर्वीविशिष्टतयैव शिष्यैः रक्षितानि पूर्वकाले। पश्चात्तथा तथा तालपत्रेषु लेखनात्; कालक्रमेण तालपत्रशैथिल्यादिभिश्च पाठान्यथाकरणादि संवृत्तमिति निश्चेतव्यम्।

अधिकरणभेदकल्पने तु स्वस्वाभिमतमतव्यग्रतैव प्रयोजिका। सर्वस्मिन्नपि मते सूत्रसंख्यावत् अधिकरणसंख्यापि नैकरूपा। एकैकस्मिन्नप्यधिकरणेपि सूत्रसंख्या विभिन्नैव लक्ष्यते। यथा एकस्मिन्नेव मते एकैकमप्यधिकरणं एतावत्संख्याविशिष्टसूत्रैरेव भाव्यं इति नियमो नापेक्षितः तथा सर्वमतेपि तत्तदधिकरणं तादृशतादृशसंख्याविशिष्ट सूत्रैरेव स्थाप्यं इति निर्बन्धो नाङ्गीकृतः। एकमेवाधिकरणं क्वचिन्मते पञ्चसूत्रात्मकं तदेवान्यमतेषु षड्सूत्रात्मकं सप्तसूत्रात्मकं च भवति। अत एवाधिकरणसंख्याभेदोऽप्यापतितः। अधिकरणनामधेयभेदोऽप्यवर्जनीयोऽभवत्॥

यावद्भिः सूत्रैः अधिकरणक्लृप्तौ विषयसंशयपूर्वपक्षसमाध्यादिकं सूपपादं भवेत् तावद्भिः सूत्रैः अधिकरण व्यवस्था कार्या। एकेनाधिकरणेन विषयचारितार्थ्ये तदर्थमन्याधिकरणकल्पनमपि प्रामाणिका न बहुमन्वते।

तत्र भगवद्रामानुजमुनिभिः आदृता अधिकरणकल्पना तु अतिसमीचीना इति श्रीमद्वेंकटनाथः स्तौति सारावल्याम्—

अल्पसारैः अधिकरणान्तररचनां इतश्मतसिद्धां निरस्यन्
तादर्थ्येऽनन्तरत्वेऽप्यधिकरणभिदा नाल्पसारैः प्रकल्प्या॥ इति।

### 31. अधिकरणनामधेयकल्पनम्।

अधिकरणनामधेयकल्पनं तु सौत्रपदं विषयवाक्यस्थपदं वाऽनुसृत्य प्रायशः प्रवृत्तं भवति। 'ईक्षतेर्नाशब्दं' इति सूत्रं 'ईक्षत्यधिकरणं इति तस्य नाम'। 'आनन्दमयोऽभ्यासात्' इति सूत्रं–आनन्दमयाधिकरणमिति नामधेयम्। 'प्राणस्तथाऽनुगमात्' इति सूत्रं इन्द्रप्राणाधिकरणं इति नाम। सूत्रे प्राणशब्दो विद्यते, 'मामुपास्व' इति विषयवाक्यं-अस्यचेन्द्रेणोक्तत्वात्' इन्द्रप्राणाधिकरणं इति नामकृतमस्य।

अधिकरणस्य। अत्र प्राणाधिकरणमिति नाम्निकृते 'तथा प्राणः इत्यत्र विरोधः स्यात्। एवं तत्र तत्र भाव्यम्। सौत्रप्रथमपदमुपजीव्यैव नामधेयकरणं इत्यपि निर्बन्धो नास्ति। समन्वयाधिकरणादौ तथा-अदर्शनात्। देवताधिकरणे पञ्चसूत्राणि विराजन्ते—

तदुपर्यपि बादरायणः संभवात् इति सूत्रप्रारंभः तत्र पञ्चसु सूत्रेष्वपि देवताशब्दो न विद्यते। अथापि देवताधिकरणं इति तस्य नाम। 'हृद्यपेक्षया तु मनुष्याधिकारत्वात् इति पूर्वाधिकरणसूत्रे मनुष्य प्रस्तावात्' तदुपरि इति देवतायाः निर्देशः कृतः इति देवताधिकरणं इति नाम कृतम्॥

एवमपशुद्राधिकरणेपि अर्थौचित्यपरामर्शेन नामधेयं रचितम्। एवमन्तरधिकरण अन्तराधिकरण अन्तरत्वाधिकरणवैषम्यं च बोध्यम्।

### 32. मतत्रयेपि प्रतिपादं सूत्र अधिकरण संख्याभेदः

अथ विशिष्टाद्वैतिमते अद्वैतिमते च पादनाम प्रतिपादं सूत्रसंख्याऽधि-करणसंख्याभेदं प्रदर्शयामः—तत्र विशिष्टाद्वैतिमते

| अथ द्वैतिमते | पादनाम | सूत्रसंख्या | अधिकरणसंख्या |
|---|---|---|---|
| 1-1 | अयोगव्यवच्छेदपादः | 32 | 11 |
| 1-2 | अस्पष्टजीवादिलिङ्गकपादः | 33 | 6 |
| 1-3 | स्पष्टजीवादिलिङ्गकपादः | 44 | 10 |
| 1-4 | स्पष्टतरजीवादिलिङ्गकपादः | 29 | 8 |
| 2-1 | स्मृतिपादः | 36 | 10 |
| 2-2 | तर्कपादः | 42 | 8 |
| 2-3 | वियत्पादः | 52 | 7 |
| 2-4 | प्राणपादः | 19 | 8 |
| 3-1 | वैराग्यपादः | 27 | 6 |
| 3-2 | उभयलिङ्गपादः | 40 | 8 |
| 3-8 | गुणोपसंहारपादः विद्यानियमनकृत्पादः | 64 | 26 |

| | | | |
|---|---|---|---|
| 3-4 | अङ्गपादः | 51 | 15 |
| 4-1 | आवृत्तिपादः | 19 | 11 |
| 4-2 | उत्क्रान्तिपादः | 20 | 11 |
| 4-3 | गतिपादः | 15 | 5 |
| 4-4 | फलपादः मुक्तिपादः | 22 | 6 |
| | | 545 | 156 |

| अथाद्वैतिमते | पादनाम | सूत्रसंख्या | अधिसंख्या |
|---|---|---|---|
| 1-1 | स्पष्टब्रह्मलिंगकोपनिषद्वाक्यविचारः | 31 | 11 |
| 1-2 | अस्पष्टब्रह्मलिङ्गकोपनिषद्वाक्यविचारः | 32 | 7 |
| 1-3 | निर्विशेषपरवाक्यविचारः | 43 | 13 |
| 1-4 | छायापरवाक्यविचारः | 28 | 7 |
| 2-1 | स्मृतिविरोधपरिहारः | 37 | 13 |
| 2-2 | न्यायविरोधपरिहारः | 45 | 8 |
| 2-3 | आकाशाद्युत्पत्तिविरोधपरिहारः | 53 | 17 |
| 2-4 | प्राणाद्युत्पत्तिपादः | 22 | 9 |
| 3-1 | वैराग्यपादः | 28 | 6 |
| 3-2 | स्वप्नाद्यवस्थाविचारपरपादः | 41 | 8 |
| 3-3 | विज्ञानभेदाभेदबिचारपरपादः | 66 | 36 |
| 3-4 | पुरुषार्थसाधनविचारः | 52 | 17 |
| 4-1 | ज्ञानावृत्तिपादः | 19 | 14 |
| 4-2 | उत्क्रान्तिपादः | 21 | 11 |
| 4-3 | देवयानक्रमपादः | 15 | 6 |
| 4-4 | फलपादः | 22 | 7 |
| | | 555 | 190 |

| अथ द्वैतिमते | पादनाम | सूत्रसंख्या | अधिकरणसंख्या |
|---|---|---|---|
| 1-1 | प्रायेणान्यत्रप्रसिद्धशब्दानां परे समन्वयपादः | 31 | 12 |
| 1-2 | लिङ्गात्मकानां शब्दानां विष्णौ प्रवृत्तिदर्शनपादः | 32 | 7 |
| 1-3 | अन्यत्र प्रसिद्धशब्दानां विष्णौ समन्वयपादः | 43 | 14 |
| 1-4 | श्रुतिलिङ्गादिभिः विष्णावेव समन्वयपादः | 29 | 7 |
| 2-1 | युक्त्यविरोधः | 38 | 11 |
| 2-2 | मतान्तरनिराकरणपादः | 45 | 12 |
| 2-3 | आकाशादीनां विष्णोरुत्पत्तिः | 53 | 19 |
| 2-4 | प्राणाद्युत्पत्तिः | 23 | 13 |
| 3-1 | वैराग्यार्थं गत्यादिनिरूपणं | 29 | 20 |
| 3-2 | भक्तिपादे भगवन्महिमोक्तिः | 42 | 20 |
| 3-3 | उपासनापादः | 68 | 42 |
| 3-4 | ज्ञानसामर्थ्यपादः | 51 | 11 |
| 4-1 | कर्मनाशाख्यफलपादः | 19 | 22 |
| 4-2 | देवमोक्षदेवोत्क्रान्तिपादः | 22 | 10 |
| 4-3 | मार्गगम्यनिरूपणपादः | 16 | 6 |
| 4-4 | भोगपादः | 23 | 11 |
| | एवं मतत्रयेपि—अनन्तरं—एवं प्रतिपादमित्यादि | 564 | 223 |

### 33. मतत्रयेपि पाठभेदप्रदर्शनम्

शाङ्करभाष्ये सूत्रपाठभेदः श्रीभाष्यविलक्षणः तत्तत् स्थलेषु प्रदर्श्यते ।

1-1-8 प्रतिज्ञाविरोधात् इति सूत्रं न विद्यते, हेयत्वावचनाच्च इति चकारार्थत्वेन एतत्सूत्रार्थः शांकरभाष्ये प्रादर्शि मध्वभाष्येपि नेदं पृथक्सूत्रम् ॥

1-1-25 तथा चेतोर्पणनिगमादित्यत्र निगदादिति शांकरपाठः ।

1-2-15 सुखविशिष्टाभिधानादेव च इति सूत्रानन्तरं अत एव च स ब्रह्म इति सूत्रमुपेक्षितं शांकरे माध्वे ।

1-2-19 अन्तर्याम्यधिदैवधिलोकादिषु इत्यत्र अधिलोक पदं नास्ति शाङ्करे। उत्तरसूत्रस्थं शारीरश्चेति पदं उभयेपिहीत्युत्तरसूत्रारंभे योजितम् । मध्वभाष्येपि इत्थमेव शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति इति सूत्रे प्रथमचकारो नास्ति ।

1-3 नानुमानमतच्छब्दात् इति पृथक्सूत्रं प्राणभृच्च इति च । एवं माध्वेऽपि । 'अनुकृतेस्तस्य च' इत्यनन्तरसूत्रे 'अपि स्मर्यते' इत्यत्र अपि च' इति चकारोऽधिको दृश्यते । अपशूद्राधिकरणे 'क्षत्रियत्वगते-श्चोत्तरत्र चैत्ररथेन लिङ्गात् इति एकं सूत्रं कृतम् ।' श्रवणाध्ययनार्थ प्रतिषेधात् स्मृतेश्च इत्यपि सूत्रद्वयमेकीकृतम्' मध्वभाष्येऽप्येवम् ॥

1-4-26 'आत्मकृतेः परिणामात्' इत्येकं सूत्रं, माध्वेपि ।

2-1-11 तर्काप्रतिष्ठानादपि अन्यथाऽनुमेयमिति चेदेवमप्यनि-र्मोक्ष प्रसङ्गः इति सूत्रद्वयं एकीकृतम् । माध्वेऽप्येत्रमेव, परं तु तर्का-प्रतिष्ठानादपि इत्यपि शब्दो नास्ति ।

2-1-18 असद्व्यपदेशान्नेतिचेन्न धर्मान्तरेण वाक्यशेषात् इति पर्यन्तमेकं सूत्रं । 'युक्तेः शब्दान्तराच्च' इति पृथक् माध्वेपि। न कर्मा-विभागातिचेन्नानादित्वात्' इति पृथक् उपपद्यते चाप्युपलभ्यते च' इति पृथक्सूत्रम् ।

2-2-1 रचनानुपपत्तेश्च नानुमानं इति पृथक्, प्रवृत्तेश्च इत्यपरं सूत्रं माध्वेपि । 'इतरेतरप्रत्ययत्वादितिचेन्नोत्पत्तिनियतत्वादिति सूत्र-पाठोपि विलक्षणः। न भावोऽनुपलब्धेः इति सूत्रानन्तरं क्षणिकत्वाच्च इत्येकमधिकं सूत्रं माध्वेपि ।

2-3-3 गौण्यसंभवात् इति पृथक् शब्दाच्च इति पृथक्। प्रतिज्ञाहानिरव्यतिरेकात् शब्देभ्यः इत्येकीकृतम्। पृथिव्यधिकाररूप-शब्दान्तरेभ्यः इति चैकीकृतम्। एवं माध्वेपि। व्यतिरेको गन्धवत् इति पृथक्। तथा च दर्शयतीति पृथक् उपादानात् विहारोपदेशाच्च इति सूत्रस्थाने 'विहारोपदेशात्' 'उपादानात्' इति सुत्रद्वयं लक्ष्यते। माध्वेपि। 'मन्त्रवर्णाच्च' इति चकारः। 'अपि च स्मर्यते' इत्यत्रापि चकारः।। 'प्रकाशादिवन्नैवं परः' इति तुकारं विना शांकरे, माध्वे च ।।

2-4-2 गौण्यसंभवात् इति पृथक्, तत्प्राक् श्रुतेश्च इत्यपि पृथक् माध्वेऽप्येवमेव। परं तु सूत्रद्वयमध्ये 'प्रतिज्ञानुपरोधाच्च' इति सूत्रमधिकं पठन्ति। ज्योतिराद्यधिष्ठानं तु तदामननात् इति पृथक् प्राणवता शब्दात् इति पृथक् सूत्रद्वयं कृतम्। माध्वेपि।

3-1-4 अपि च सप्त इति चकारोऽधिकः।

3-1-5 तत्रापि च तद्व्यापारादविरोधः इति अधिकः चकारः। माध्वेप्येवमत्राधिकश्चकारः। अन्याधिष्ठितेषु पूर्ववदभिलापात् इति बहुवचनपाठः।

3-2-3 मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् इति सूत्रानन्तरमेव सूचकश्च हि श्रुतेराचक्षते च तद्विदः इति सूत्रं माध्वेपि।

3-2-12 न भेदादिति चेन्न प्रत्येकमतद्वचनात् इति नञ् आरंभे अधिकः। माध्वेपि।

3-2-20 वृद्धिह्रास......एवं, इति पृथक्। दर्शनाच्चेति पदं माध्वेपि।

3-2-24 अपि च संराधने इति चकारोऽधिकः।

3-3-2 भेदान्नेतिचेत् नैकस्यामपि। अत्र द्वितीयो नञ् अधिकः।

3-3-3 स्वाध्यायस्य तथात्वे हि इति सूत्रे 'तथात्वेन' इति तृतीयान्तपाठः। माध्वेपि।

3 3-24 पुरुषविद्यायामपि इत्यत्र अपिशब्दस्थाने इवशब्दः ।

3-3-31 अनियमः सर्वेषां इत्यत्र सर्वासां इति स्त्रीलिङ्गपाठः ।

3-3-25 अन्तरा भूतग्रामवत् स्वात्मनः इति पृथक्सूत्रं, अन्यथा भेदानुपपत्तिरितिचेन्नोपदेशान्तरवत् इति पृथक् । 'उपदेशवत्' इति पाठश्च ।

3-3-47 विद्यैव तु निर्धारणात् इति पृथक्, दर्शनाच्च इति पृथक् माध्वेऽपि ।

3-3-54 व्यतिरेकस्तद्भावभावित्वादित्यत्र तद्भावाभावित्वादिति पाठः ।

3-4-24 तथाचैकवाक्योपबन्धात् इत्यत्र वाक्यतेति तल्प्रत्ययः अधिकः ।

3-4-27 शमदमेति सूत्रे तेषामपीति अपिर्नास्ति, माध्वेपि ।

3-4-45 आर्त्विज्यमित्यौडुलोमिः श्रुतेश्चेत्येकमधिकं सूत्रम् ।

4-2-2 अत एव सर्वाण्यनु इत्यत्र अत एव च इति चकारः अधिकः ।

4-2-12 प्रतिषेधात् इति चेन्न शारीरात् इत्येकं । स्पष्टो ह्येकेषां इत्यपरं सूत्रम् । माध्वेऽपि ।

4-2-20 अतश्चायनेपि हि दक्षिणे इत्यत्र हि शब्दोऽधिकः ।

4-3-4 आतिवाहिकास्तल्लिङ्गात् इति सूत्रानन्तरं उभयव्यामोहात्तत्सिद्धेः इति सूत्रमधिकम् ।

एवं श्रीभाष्यात् शाङ्करे सूत्रपाठभेदः आदृतः । अत्र पदच्छेद, अधिकरणभेदादि विषयभेदविचारभेदः तत्र तत्र द्रष्टव्यः ।

अथ माध्वभाष्यसंमतः पाठभेदः प्रदर्श्यतेऽधुना—

1-1 प्रतिज्ञाविरोधात् इति सूत्रमेव नास्ति ।

1-2 अत एव च स ब्रह्म इति सूत्रं न दृश्यते । अन्तर्यामीति सूत्रे अधिलोक इति पदं नास्ति । शारीरश्चोभयेपि हि भेदेनैनमधीयते इति सूत्राकारः शब्दादिभ्योऽन्तः प्रतिष्ठानाच्चेति सूत्रे पुरुषमिति-स्थाने पुरुषविधमिति पठ्यते ।

1-3 नानुमानमतच्छब्दात् प्राणभृच्च इति सूत्रद्वयम् । क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् इत्येकं सूत्रम् । श्रवणाध्ययनार्थ प्रतिषेधात् स्मृतेश्च इत्यन्तं एकं सूत्रम् ।

1-4 वदतीति चेन्न प्राज्ञो हि इति पृथक्, प्रकरणात् इत्यपरम् ज्योतिरुपक्रमात्तु तथाह्यधीयत एके इत्यत्र पञ्चम्यन्तं । जीवमुख्यप्राणलिङ्गादितिचेत् इति नञ् विहीनः पाठः । न तु नेतिचेदिति । आत्मकृतेः परिणामात् इति सूत्रद्वयमेकीकृतम् ।

2-1 न विलक्षणत्वात्...शब्दात् इति सूत्रानन्तरमेव दृश्यते तु इति सूत्रम् । एतदनन्तरं अभिमानि...गतिभ्यां इति सूत्रम् । ततः दृश्यते च' इति सूत्रान्तरम् । तर्काप्रतिष्ठानादप्यन्यथानुमेय...प्रसङ्गः इत्येकं सूत्रं । अपिशब्दोपि नास्ति । सत्वाच्चापरस्य इत्यत्रावरस्येति विद्यते अपरस्य इति स्थाने । 'असद्व्यपदेशान्नेतिचेन्न धर्मान्तरेणवाक्यशेषात् इति पृथक् । युक्तेः शब्दान्तराच्च इति सूत्रान्तरम् । यथा च प्राणादिः इत्यत्र चकारो नोपलभ्यते । न कर्माविभागा...... अनादित्वात् इत्येके उपपद्यते चाप्युपलभ्यते इति च सूत्रान्तरम् ।

2-2 रचनानुपपत्तेश्चनानुमानं इत्येकं सूत्रम्। प्रवृत्तेश्च इत्यपरम्। अभ्युपगमेऽप्यर्थाभावात् इति सूत्रानन्तरं, पुरुषाश्मवदितिचेत्तथापि, अङ्गित्वानुपपत्तेश्च, अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् इति सूत्राणां पाठः । श्रीभाष्ये एतत्त्रितयानन्तरं अभ्युपगमेऽप्यर्थाभावात् इति सूत्रम् । अङ्गित्वानुपपत्तेश्च इत्यत्र चकारोपि नास्ति तत्पाठे । इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनियतत्वात् इत्यन्यादृशः सूत्रपाठः । न भावोऽनुपलब्धेः इति सूत्रानन्तरं क्षणिकत्वाच्च इति सूत्रान्तरम् । अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् इत्यत्र अविशेषादिति पञ्चम्यन्तम् । पत्युरसामञ्जस्यात् इति सूत्रानन्तरं, सम्बन्धानुपपत्तेश्च इति सूत्रान्तरं परिदृश्यते ।

2-3 गौण्यसंभवात्, शब्दाच्च इति सूत्रद्वयम् । 'प्रतिज्ञाहानिरव्यतिरेकात् शब्देभ्यः इत्येकं सूत्रं, पृथिवी इति न पृथक्सूत्रं, पृथिव्यधिकाररूपशब्दान्तरेभ्यः इत्येकं सूत्रं, ज्ञोऽत एव इति सूत्रानन्तरं

युक्तेश्च इत्यधिकं सूत्रम् । तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् इत्यत्र तु शब्दो नास्ति । उपादानात् विहारोपदेशाच्च इति सूत्रस्थाने— विहारोपदेशात्, उपादानात् इति सूत्रद्वितयम् । प्रकाशादिवत्तु नैवं परः इति सूत्रे तु शब्दो नास्ति । प्रदेशभेदादिति चेन्नान्तर्भावात् इत्यत्र भेदशब्दो नास्ति ।

2-4 तथा प्राणाः, गौण्यसंभवात्, प्रतिज्ञानुपरोधाच्च, तत्प्राक् श्रुतेश्च इति सूत्राणां क्रमनिर्देशः । ज्योतिराद्यधिष्टानं तु तदामननात् प्राणवता शब्दात् इति सूत्रद्वयम् । भेदश्रुतेः वैलक्षण्याच्च इति सूत्र-द्वयम् ।

3-1 कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां, यथेतमनेवं च इति सूत्रद्वयम् । तत्रापि च तद्व्यापारादविरोधः इत्यत्र चकारोऽधिकः । तृतीये शब्दावरोधः संशोकजस्य इत्यत्र तृतीये इति सप्तम्यन्तम् । एतदुपरि स्मरणाच्च इत्यधिकं सूत्रम् ।

3-2 मायामात्रं तु इति सूत्रसमनन्तरमेव सूचकश्च इति सूत्रम् । एतत्सूत्रानन्तरं, पराभिध्यानात्तु......। देहयोगाद्वा सोपि इति सूत्रद्वय-पाठः । तदभावो......आत्मनि च इत्यत्र चकारस्थाने हकारः । स एव तु...विधिभ्यः इत्यत्र तु स्थाने चकारः । भेदादितिचेन्न प्रत्येकमत-द्वचनात् इत्यत्र न भेदात् इति नञः प्रथमनिर्देशोऽधिकः । प्रकाश-वच्चावैयर्थ्यात् इत्यत्र अवैयर्थ्यं इति न पञ्चम्यन्तम् । वृद्धिह्रास एवम् दर्शनाच्च इति सूत्रद्वयम् । प्रकाशवच्चावैशेष्यम् प्रकाशश्च कर्मण्यभ्यासात् इति सूत्रद्वयम् । सामान्यात्तु इति सूत्रस्थाने दर्शनाच्च इति सूत्रम् । तथाऽन्यप्रतिषेधात् इति सूत्रे अन्यत् इति पृथक्पदत्वेन श्रूयते । अनेन सर्वगतत्व मायामयशब्दादिभ्यः सूत्रनिर्देशः ।

3-3 स्वाध्यायस्य हि तथात्वे न हि इति हि शब्दद्वयं तथात्वेन इति तृतीयान्तं च । सववच्च तन्नियमः इति स्थाने सलिलवच्च तन्नियमः इति पाठः । सूत्रान्तरं चेदम् । अन्यथात्वं च शब्दादिति चकारोऽधिकः । व्याप्तेश्च समञ्जसं इति स्थाने प्राप्तेश्च समञ्जसं इति पठ्यते । अनियमस्सर्वेषामविरोधः शब्दानुमानाभ्यां इति सूत्रे

अविरोधादिति पञ्चम्यन्तम् । एतदुपरि यावदधिकारमवस्थितिराधि-कारिकाणां इति सूत्रम् । अक्षरधियां त्ववरोधः इति सूत्रे अविरोधः इति पाठः । अन्तरा भूतग्रामवत् इति चेत् तदुक्तं इति पाठः । अन्यथा भेदानुपपत्तिरितिचेन्नोपदेशवत् इति पृथक् । कामात् इतरत्र तत्रचायतनादिभ्यः इति सूत्राकारः । उपस्थितेऽतस्तद्वचनात् इत्यत्र उपस्थितेस्तद्वचनात् इति सूत्रम् । प्रदानवदेव हि तदुक्तं इति हि शब्दो अधिकः । विद्यैवतु निर्धारणात्, दर्शनाच्च इति सूत्रद्वयम् । अनु-बन्धादिभ्यः इति पृथक्सूत्रं, प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तं इति पृथक् । दृष्टश्च इत्यत्र दृष्टैश्च इति पाठः । भूम्नः क्रतुवत्...तथा च दर्शयति इति सूत्रपाठः हि स्थाने च शब्दप्रयोगः । न वा सहभावश्रुतेः इति पाठः, व्याखयानं तु अश्रुतेः इति पाठमवलंब्य । मुद्रणादशुद्धिर्वा ।

3-4 नियमाच्च इति चकारोऽधिकः । शमदमादीति सूत्रे तेषामव-श्यानुष्ठेयत्वात् इति अपिर्विना पाठः । विशेषानुग्रहं च इति द्वितीया विभक्तिः । अतस्त्वितरत् ज्यायो लिङ्गाच्च इति सूत्रे इतरत् इति पृथक्पदत्वेन न दृश्यते । इतरज्यायः इत्यस्ति । मुद्रणाशुद्धिरित्येव-निश्चीयते । तद्भूतस्य इति सूत्रे नातद्भावः इति स्थाने तद्भावः इति पठ्यते । उपपूर्वमपीति सूत्रे भावमशनवत्तदुक्तं इति पाठः । आर्त्विज्य सूत्रे परिक्रियते इति पाठः । व्याख्यानेपि ।

4-1 अतोऽन्यापि ह्येकेषामुभयोः इत्यत्र अतोऽन्यदपीत्येकेषा-मुभयोः इति श्रूयते । भोगेनत्विति सूत्रे संपद्यते इति स्थाने संपत्स्यते इति ।

4-2 तदपीतेः संसार...इति पाठः । प्रतिषेधादितिचेन्न शारीरात् स्पष्टोह्येकेषां इति सूत्रद्वयम्। निशि नेति चेन्न संबन्धात्, यावद्देहभावि त्वात् दर्शयति च इति सूत्रद्वयम् । संबन्धश्च इति स्याने संबन्धात् इति पञ्चम्यन्तम् ।

4-3 आतिवाहिकस्तल्लिङ्गात् इत्यत्र अतिवाहिकः इत्येकवच-नान्तम् । एतदुपरि उभयव्यामोहात्तत्सिद्धेः इति सूत्रान्तरम् ।

4-4 संपद्याविर्भावः स्वेन शब्दात् इति पाठः। चितिमात्रेण तदात्मक...इति पाठः। सङ्कल्पादेव च तच्छ्रुतेः इति चकारोऽधिकः। भावं जैमिनिर्विकल्पाम्नानात् इति पाठो दृश्यते। जगद्व्यापारवर्जं प्रकरणादसन्नि......इति सूत्रद्वयम्। प्रत्यक्षोपदेशान्नेति...इत्यत्र नञ् नास्ति। विकारवर्ति च तथा हि दर्शयति स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने इति सूत्राकारो दृश्यते।

## 34. विषयसंशयाद्यूहनम्

बादरायणकृतमिदं शारीरकसूत्रमुपनिषदर्थविचाररूपम्। उपनिषद्विषयवाक्यानि समादाय तत्र संशयोद्भावनपूर्वकं पूर्वपक्षसिद्धान्तादि वर्णयित्वा तेनकस्यचित् न्यायस्य शिक्षणपूर्वकं वेदान्तार्थस्थापनमत्र क्रियते। तत्रैकैकस्मिन्नधिकरणे को विषयः कः संशयः इति तु कण्ठेन सूत्रकारः प्रायशो ब्रवीति। परं तु सूत्रस्थपदपर्यालोचनेन विषयसंशयादिकमाक्षिप्यते। एकैकाधिकरणेपि अयं विषयः अयं संशयः इत्यादि तु श्रीभाष्यतद्व्याख्यानभूतश्रुतप्रकाशिकादिषु सुविस्तरं सुस्पष्टं च प्रदर्शितम्।

न्यायसूत्रे क्वचित् क्वचित् विषयः संशयश्च कण्ठोक्तौ—

## 35. सद्विद्याप्राधान्यय्।

अत्र सूत्रविषयभूताः दशोपनिषदः—

ईश केन कठ प्रश्न, मुण्डक, माण्डूक्य तैत्तिरीय ऐतरेय छान्दोग्य, बृहदारण्यकाख्याः।

उपनिषदां क्रमस्त्वेवम्। तद्विचाररूपमीमांसाशास्त्रं तु अन्यादृशक्रमं आदृत्य प्रवृत्तम्। प्रथमं तावत् सूत्रकारः सद्विद्यां विचारयति। ईक्षतेर्नाशब्दं इति हि शास्त्रारंभः। अत्र सदेव सोम्येदमग्र आसीत्—तदैक्षत बहुस्यां प्रजायेय इत्यादिविषयवाक्यमुपादीयते-एतदधिकरणस्थ सूत्राणां पर्यालोचने सद्विद्याविषयकविचारमेव सूत्रकारोऽभिप्रेतीति स्पष्टं विज्ञायते। सद्विद्या च छान्दोग्यान्तर्गता। अतः ईश केन...इत्युपनिषत्क्रमं परित्यज्यैव सूत्रकारो बादरायणः विचारं तनोति। प्रायशः

सूत्रकारः सद्विद्यायामेव दत्तदृष्टिःस्सन् तदनुगुणविषयवाक्यादिकं मनसिकृत्य सूत्राणि प्रणिनाय । सर्वब्रह्मविद्यानामपि सद्विद्यैव प्रधानभूता । अतः एतदनुगुणतयैव सर्वविद्यापि नेयेति सूत्रकाराशयः ।

कस्याश्चिदुपनिषदः व्याख्यायां क्रियमाणायां तदुपनिषदः तात्पर्यं पर्यालोचनीयम् । उपक्रमोपसंहारौ अभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये इति तात्पर्यनिर्णायकानि षट्। तानि सर्वाणि अत्रैव सद्विद्यायां संभूय वर्तन्ते इति सद्विद्या प्रधान भूता । अन्यविद्यादिषु निर्णायकेषु केषांचिदेव सत्वमित्यादरः सूत्रकारस्य सद्विद्यायाम् । अपि च कारणं तु ध्येयः इति कारणस्य वस्तुनः तापत्रयातुरैः मुमुक्षुभिः ध्येयत्वमुक्तम् । अत एव अथाऽतो ब्रह्मजिज्ञासा जन्माद्यस्य यतः इति सूत्रं चकार । अतः कारणं वस्तु किमिति विचारे कारणवस्तुनिर्णयार्थं कारणवस्तुबोधकवाक्यविचारः कर्तव्यो भवति । तत्र छान्दोग्यघटकसद्विद्याऽन्तर्गतकारणवाक्यमेव प्राथम्यं भजति । तद्वाक्यस्यैव पुरोवादित्वात् । अत एव सूत्रकारः बहुषु स्थलेषु छान्दोग्यश्रुतीः प्रमाणयति । इति ।

## 36. उपनिषत्प्रत्यभिज्ञानम्

सूत्रकारः स्वकृतेषु सूत्रेषु प्रायशः उपनिषद्गतान् शब्दानेव प्रयुङ्क्ते । क्वचिदेव उपनिषत्सूचकशब्दान् । यथा–ईक्षतेर्नाशब्दं स्वाप्ययात् अन्तस्तद्धर्मोपदेशात् अकाशस्तल्लिङ्गात्, ज्योतिश्चरणाभिधानात् सर्वत्र प्रसिद्धोपदेशात् इत्यादीनि सूत्राणि । तदैक्षत स्वमपीतो भवति, य एषोऽन्तरादित्ये । आकाशोहवै...दिवो ज्योतिर्दीप्यते, सर्वं खल्विदं ब्रह्म इत्यादीनि च तत्तत्सूत्र विषयवाक्यानि । अत्ता चराचरग्रहणात् इति सूत्रं । एतत्सूत्र विषयवाक्ये अत्तृपदं नास्ति । यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः इति विषयवाक्यम् । अत्रौदनोपसेचनसूचितोऽत्ता सूत्रे निर्दिष्टः । तत्रवाधिकरणे गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् इति सूत्रम् । अत्र गुहाहितं गह्वरेष्ठं इति विषयवाक्यस्थ शब्दघटितमेव सूत्रं रचयामास । साचप्रशासनात् इति सूत्रम् । सूर्याचन्द्रमसौ विधृतौ तिष्ठतः इति तत्रविषय-

वाक्यम् । सूत्रे साक्षाच्छब्दो नोपात्तः । परं तु विधृतौ तिष्ठतः इत्यनेन सूचितः प्रशासनशब्दः । रंहति इति पर्यायशब्दः । निचाय्य त्वादेवं इत्यत्र विषयवाक्येनेदं पदं प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे इति सूत्रे तस्य प्रियमेव शिरः इत्यादिविषयवाक्यस्थ शब्दाना मेवो पादानं दृश्यते । न प्रतीके न हि सः इत्यादिषु तु मनो ब्रह्मेत्युपासीत...स यो नाम ब्रह्मेत्युपास्ते इत्यादि विषयवाक्यसूचितस्य प्रतीकपदस्योपादानम् । एवं तत्रतत्रावधेयम् । द्वितीयाध्यद्वितीयपादे तर्कपादे इतरमतखण्डनपरे तत्तन्मतसूचकशब्दान् साक्षादेव प्रयुज्य सूत्रप्रणयनम् ।

## 37. न्यायनिबन्धनरूपत्वम् ।

सूत्रजातं सर्वमपि न्यायनिबन्धनात्मकं, अतस्सर्वत्र पक्षसाध्यहेतुनिर्देशः आवश्यकः । क्वचित् पक्षसाध्यनिर्देशः । क्वचित् हेतुमात्र निर्देशः क्वचित् त्रितयनिर्देशश्च । सप्तगतेर्विशेषितत्त्वाच्च साध्यहेतुनिर्देशः । नात्मा श्रुतेः नित्यत्वाच्च ताभ्यः इत्यादौ साध्य पक्ष हेतुनां निर्देशः । उपपत्तेः श्रुतत्वाच्च प्रतिज्ञाविरोधात् इत्यादीनि हेतुमात्रनिर्देशरूपाणि । प्रायशः गुणसूत्राणि हेतुमात्रबोधकान्येव । प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् इत्यत्र साध्यहेतुनिर्देशः । अभिध्योपदेशात् इत्यादीनि हेतुमात्रपराणि । योनिश्च हि गीयते इति साध्यहेतुनिर्देशः । एवमेव सर्वेषु सूत्रेष्वनुसन्धेयम् । न्यायशास्त्रे पञ्चावयववाक्यप्रयोगस्थले प्रतिज्ञाहेतूदाहरणोपनयननिगमनरूपपञ्चावयवाक्यानां सर्वेषां प्रयोगः क्वचित् क्रियते, क्वचिच्च हेतुमात्रस्य, क्वचिच्च पक्षसाध्ययोः । तत्र सर्वेषामेव प्रयोगः कार्यः यद्वा केषांचि देवेवबेति नियमोनास्ति । अनियम एव नियमः अस्माकं मते । एवं सूत्रेष्वपि पक्षसाध्यहेतुनिर्देशे नियमो नास्ति । अपि च पक्षादिनिर्देशेपि क्रमो नादृतः । क्वचित्प्रथमं पक्षनिर्देशः, क्वचित्, आदौ साध्यनिर्देशः क्वचिच्च हेतुनिर्देशः आरंभे, इति यथायथं भवति ।। ईक्षत्यधिकरणादौ प्रथमं हेतुनिर्देशः । आनन्दमयाधिकरणादौ प्रथमं पक्षनिर्देशः । भावं तु बादरायणोऽस्ति हि इत्यादौ साध्यनिर्देशः ।

अनावृत्तिः शब्दादित्यादवपि प्रारंभे साध्यनिर्देशः। ईक्षतिकर्मव्यपदेशात् सः इत्यत्र पक्षहेतुसाध्यनिर्देशः। क्वचित् दृष्टान्तमात्रोपादानं, यथा—प्रदानवदेव तदुक्तम् इत्यादौ। अपरत्र साध्यदृष्टान्तनिर्देशः—यथाविभागः इत्यादौ। क्वचित् दृष्टान्तहेतुमात्रोपादानं—यथा—चमसवदविशेषात् इत्यादि।

## 38. सूत्रशैली।

एवमत्र सूत्रशैली विराजते।

अतिदेशसूत्राणि कानिचित्। पूर्वाधिकरणे कञ्चनार्थविशेषं प्रसाध्यं तेन कञ्चन न्यायमपि शिक्षयित्वा, तेनैव न्यायेनेदमप्यार्थन्तरं सिद्धं इति येन सूत्रेण प्रोच्यते, तदतिदेशसूत्रम्। अत एव प्राणः एतेन योगः प्रत्युक्तः, एतेन मातरिश्वा व्याख्यातः इत्यादि। क्वचित् अत एव, एतेन इत्यादि विहाय अतिदेशाच्च इति सूत्रमेव श्रूयते। अतस्सूत्र कारस्य बादरायणस्य सूत्रप्रणयनशैली अनितरसाधारणा अतीव हृदयंगमा वरीवर्ति।

## सूत्रकरणे लाघवम्

तेजोतस्तथाह्याह इति एकं सूत्रम्। अत्र भगवतो बादरायणस्य सूत्रकृतः.........इत्यादि। 5-ळ-1-2...अधिकाररूपशब्दान्तरेभ्यः—इत्यादौ विचारः।

एवं लघुभूतसूत्रप्रणयने चतुरोपि बादरायणः तदोकोऽग्निज्वलनं इत्यादि अतिबृहत्सूत्रं चकारेति तु विस्मयावहमेव।

प्रायशः सूत्रकारः पूर्वपक्षसूत्रं सिद्धान्तसूत्रं च पृथक् पृथगेव करोति। अन्येषामपि सूत्रकाराणामप्यत्र विषये एकैव शैली। एतादृशीं शैलीमनुरुन्धानोपि पूर्वपक्षसिद्धान्तोभयपरत्वसंभावनाभूमिभूतमेकं सूत्रं प्रतनोति। तथा प्राणाः इत्येकं सूत्रम्। अत्रेन्द्रियाणां उत्पत्तिरस्ति न वेति विचार्य निर्धारणं क्रियते। पूर्वं जीवस्यानुत्पत्तिः आकाशादीनामुत्पत्तिश्चवर्णिता। एवं वर्णयित्वा तथा प्राणाः इति वदति। अस्य सूत्रस्य पूर्वपक्षसिद्धान्तोभयपरतयापि व्याख्यानं सङ्गतं भवति। आकाशादिवत् प्राणाः इन्द्रियाणि उत्पद्यन्ते, इति, जीवात्मवत्

इन्द्रियाणि नोत्पद्यन्ते इति प्रकारद्वयपरतया व्याख्यानेपि सूत्राक्षर सांगत्यं भवति क्वचिदेवेयं रीतिः ।

अनेकसूत्रघटितेषु अधिकरणेषु प्रथमं सूत्रे पूर्वपक्षारंभः पश्चात् सिद्धांतारम्भः इति क्रमः। क्वचिरेव तु प्रथमसूत्रे सिद्धांतमेव वा पश्चात् पूर्वपक्षः सिद्धान्तश्चानन्तरैस्सूत्रैः क्रियते । यथा फलाधिकरणे पुरुषार्थाधिकरणे च । क्वचित् एकस्मिन्नेव सूत्रे पूर्वपक्षः सिद्धान्तश्चोच्येते । गौणश्चेन्नात्मशब्दात् वदतीति चेन्न प्राज्ञो हि प्रकरणात्। अन्तराभूतग्रामवत्स्वा......इत्यादौ ।

क्वचित् पूर्वपक्षद्वयं सूत्राभ्यां प्रदर्श्य पश्चात्सिद्धान्तः सूत्रैः प्रदर्श्यते—यथा—उभयव्यपदेशात्त्वहिकुण्डलवत् । प्रकाशाश्रयवद्वा तेजस्त्वात् इति सूत्राभ्यां यादवप्रकाशमतं भास्करमतञ्चोपक्षिप्य, पूर्ववद्वा इति सिद्धान्तं निजं प्राह ।। ब्राह्मेण जैमिनिरुपन्यासादिभ्यः इति मुक्तौ जैमिनिमतं, चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः इत्यौडुलोमिमतं च प्रतिपाद्य, एवमप्युपन्यासात्पूर्वभावाद् इति स्वमतं प्राह । एवं अभावं बादरिराह ह्येवम् । भावे जैमिनिर्विकल्पामननात् इति पक्षद्वयमुपपाद्य द्वादशाहवदुभयविधं स्वमतं पश्चान्निर्दिशति। सन्ध्ये सृष्टिराहहि, निर्मातारंचैके, इति पूर्वपक्षः मायामात्रं तु इति सिद्धान्तः । कार्यं बादरिः इति बादरिमतं, परं जैमिनिः इति जैमिनिमतं च प्रदर्श्य अप्रतीकालम्बनान्नयतीति स्वमतमुपपादयति । अतो यथायथं तत्र तत्र सूत्रशैली द्रष्टव्या । कचित् स्वमतमप्यन्यमुखेनोपपादयति । अवस्थितेरिति काशकृत्स्नः सुकृतदुष्कृत एवेति तु बादरिः इत्यादौ ।।

## 39. शास्त्रान्तरपरिचयः ।

उपनिषद्व्याख्यानार्थं प्रवृत्तस्य सूत्रकारस्य सर्वेष्वपि मतेषु अभिज्ञता आवश्यकी । कथमन्यथा तत्तन्मतखण्डनपूर्वकं यथावस्थितोपनिषदर्थ प्रतिपादनं शक्यं भवेत् । अत एव सूत्रकारः तत्र तत्र तत्तन्मतं प्रदर्श्य दोषांश्चोद्भाव्य स्वमतं स्थापयति । सर्वेष्वपि शास्त्रेषु परिचयसत्वेहि तत्र तत्र युक्तत्वायुक्तत्वोपपादनं कर्तुं शक्यम्। अतो न केवलं विशिष्टाद्वैतिमते प्रवीणः । नापि द्वैतिमतमात्रे न वा अद्वैतिमतमात्रे ।

यादव, भास्कर द्वैति, अद्वैति विशिष्टाद्वैतमतानि तत्र तत्र प्रदर्शयन् सूत्रकारः स्वकीयं विशिष्टाद्वैतिमतमपि स्वरससिद्धं प्रकटीकरोति ।

भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् उभयव्यपदेशात्वहिकुण्डल वत् इत्यादिना यादवप्रकाशमतं स्वयमेव खण्डयति । प्रकाशाश्रयवद्वा तेजस्त्वादिति इत्यादिना भास्करमतम् । अंशो नानाव्यपदेशादिति सूत्रे द्वैत्यद्वैतिमतप्रदर्शनपूर्वकं विशिष्टाद्वैतिमतं अतिनिपुणं प्रकटीकरोति । तदनन्यत्वमारम्भणशब्दादिभ्यः यथा च प्रणादिः पटवच्च इत्यादीनि सूत्राण्येव पर्याप्तानि सूत्रकारस्य विशिष्टाद्वैतमतस्थापने ।

जैमिनिमतस्य तन्नामपूर्वकमेवानेकत्र प्रदर्शनात् — तदुक्तं इत्यादिना मीमांसाशास्त्रोक्तन्यायस्यात्र सूचनाच्च, जैमिनिकृतपूर्व-मीमांसाशास्त्रं वेदान्तमीमांसापूर्वभागरूपं इति, तत्र स्वस्याधिकावग-मसत्ताच समस्तीति च स्वष्टमेव ज्ञापयति ।

षड् दर्शनानि सन्ति । 1 सांख्यदर्शनं, 2 वैशेषिकदर्शनं, 3 बौद्धदर्शनं, 4 जैनदर्शनं, 5 पाशुपतदर्शनं, 6 पञ्चरात्रदर्शनमिति तेषां नाम । तत्र सांख्यदर्शनं बहुधा खण्डयति दोषोद्भावनेन । शास्त्रा-रम्भ एव तन्मतं निराकरोति ईक्षतेर्नाशब्दमित्यादिना । रचनानुप-पत्तेश्च......अङ्गित्वानुपपत्तेः पुरुषाश्मवदितिचेत्तथापि पयोम्बुवच्चेत् तत्रापि इत्यादि सूत्राणि रचयतो बादरायणस्य तद्दर्शने अतीव नैपुण्यं ज्ञाप्यते । एतेन योगः प्रत्युक्तः इति योगमतं निराकरोति । एतेन शिष्टापरिग्रहा अपि व्याख्याताः इति कणभक्ष, अक्षपाद, क्षपणक-भिक्षुपक्षाः क्षपिताः । महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यां इति वैशे-षिकमतं निरस्यति। तत्र काणादाः वैशेषिकाः। गौतमप्रवर्तितं न्यायमतं तु सूत्रकारो न खण्डयति । उभयोः परमाणुकारणवादसाम्येन वैशे-षिकमतखण्डने न्यायमतमपि खण्डितप्रायमेव । अथापि अपरिग्रहा-च्चात्यन्तमनपेक्षा इति वैशेषिकमतस्याति जघन्यत्वं अब्रवीत् सूत्रकारः। अतो न्यायमतखण्डनं न सूत्रारूढम् । वैशेषिकमतखण्डनमेव सूत्रे । समवायाभ्युपगमाच्च साम्यादनवस्थितेः इत्यादौ । अत एव न्याय-परिशुद्धौ एकतः स्वीकारः अन्यत्र बहिष्कारः इति हेतोः । न न्याय

मतं खण्डितं इति श्रीदेशिकचरणाः प्राहुः । यद्यपि गौतमेनाक्षपादेन कृतं न्यायदर्शनमधीयानस्य गर्दभजन्मप्राप्तिरुच्यते । अधीत्य गौतमीं विद्यां गार्दभीं योनिमाप्नुयादिति-अथापि अन्यगौतमकृतं दर्शनमन्यत् तत्र विषयभूतः । एतेनाक्षपादेन गौतमेन कृतं न्यायदर्शनं न जघन्यम्। तदुक्तबह्वर्थस्य वेदान्तिभिः स्वीकारात् । इति महतां प्रवादोपि सत्य एवैति वेद्यम् ।

अथ बौद्धमतमपि शतशो निराकरोति । तत्र बौद्धाश्चत्वारः- वैभाषिकाः सौत्रान्तिकाः योगाचाराः माध्यमिकाः इति । तत्र समुदा याधिकरणे वैभाषिकसौत्रान्तिकयोः दूषणम् , उपलब्ध्यधिकरणे योगा चारमतखण्डनम् , सर्वथाऽनुपपत्त्यधिकरणे माध्यमिकमतदूषणम् इत्यधिकरणत्रये चतुर्विधबौद्धमतं खण्डचते सूत्रकारेण । अथ एकस्मिन्न संभवाधिकरणे जैनदर्शनदूषणम् । पशुपत्यधिकरणे पाशुपतमतं निरस्यते । एवं पञ्चदर्शनानि निरस्य स्वमतं स्वदर्शनं स्थापयत्युत्त- राधिकरणे । एवं सूत्रकारः तत्तन्मतेष्ववगाह्य तत्तत्सर्वशास्त्राणि- चालोढय वेदान्तिमतमेव युक्तिमत् तत्रापि च विशिष्टाद्वैतिमतमेव सर्ववेदान्तसिद्धं लोकव्यवहारानुगुणं निखिलनिःश्रेयससाधनं चेत्यगदत् सयुक्तिकम् ।

प्रसङ्गादत्र किञ्चिद्विचार्यते—उत्पत्त्यसंभवाधिकरणे विज्ञानादि- भावे वा तदप्रतिषेधः इत्येकं सूत्रम् । तत्र श्रीभाष्यं विज्ञानं चादि- चेति परब्रह्म विज्ञानादि इति । सर्वत्र श्रीभाष्य कोशे आदि इति क्लीबतयैव शब्दो निर्दिष्टः । यद्यप्यादि शब्दः पुंल्लिङ्गः । आदीयते अस्मात्कार्यमिति आदिः कारणं इति कारणवाची आदिशब्दः पुंल्लिङ्गः प्रसिद्धः । अद भक्षणे इत्यतो णिनिप्रत्यये संहर्त्रर्थकं आदि इति रूपं नपुंसकलिङ्गम् । श्रुतप्रकाशिकायां तु आदि इति क्लीब- तयैव प्रतीकधारणं कृत्वा चैतन्यस्वरूपिणः इति मन्त्रलिङ्गात् भग- वान् वासुदेवः परा प्रकृतिः इति वचनाच्च वासुदेवस्य ज्ञानस्वरूपत्व परमकारणत्वे प्रतिपादिते इति विवृतम् । भावप्रकाशिकायां, मूले विज्ञानं चादि च इति स्थितावपि विज्ञानं च तदादि च इति पाठ-

सद्भावाभिप्रायेण प्रतीकं धृत्वा व्याख्यातम् । केचित् तु भावप्रकाशिका स्थं तदादि इति एकं पदं इति निरूप्य वर्णयन्ति । तदादीति बहुव्रीहि समासः। तच्छब्दो विज्ञानपरः । विज्ञानं च इति पृथगुक्तिः तद्गुण-संविज्ञानत्वद्योतनाय । ततश्च सूत्रे विज्ञानशब्दः विशिष्टज्ञान गुणक-परः, तत् आदिः यस्य इति बहुव्रीहिसमासो विवक्षितः विज्ञानं चे त्यादिभाष्यं विवरणमात्रम् । सर्वादीनि सर्वनामानि इत्यादौ समुदायि भूतस्यानेकस्य ग्रहणम् । जन्मादीत्यत्रानेक समुदायिघटितसमुदायस्य विवक्षा । एकस्मिन् अनेकधर्मान्वयविवक्षायामपि आदिशब्दः प्रयुज्यते । देवदत्तः श्यामो युवा समपरिमाणः इति वक्तव्ये देवदत्तः श्यामादिः इत्यपि प्रयुज्यते । अत्रानेकवस्तु विवक्षा नास्ति । परं तु एकस्मिन् देवदत्ते श्यामत्व आदिशब्दविवक्षितान्याकाराणां विवक्षा । अतः विशेष्यविवक्षावत् विशेष्ये विशेषणविवक्षापि आदि शब्देन गृह्यते इत्य-विवादम् । एवं च एकस्मिन् ब्रह्मणि विशिष्टज्ञानगुणकत्व, आदि-शब्दग्राह्य शक्त्यादिगुणान्तर वैशिष्ट्यस्य परमकारणत्वस्याचान्वयः । तथा च परं ब्रह्म विशिष्टज्ञानगुणकं शक्त्यादिविशिष्टं परमकारणं च इत्युक्तं भवति । एतदर्थसूचनायैव कर्मधारयरीतिप्रदर्शनं, विज्ञानं च तदादिचेति परं ब्रह्म विज्ञानादीति । वस्तुतः एवं क्लिष्टगति-मनाश्रित्य सहर्तर्थकादि शब्द एवात्र प्रयुक्तः । पंचरात्रतन्त्रे पर-ब्रह्मणः संहर्तृत्वबोधकवचनसद्भावात् । तज्ज्ञापनायैव नपुंसकलिङ्गः आदिशब्दः प्रयुक्तः इति केचिदाचार्या वर्णयन्ति ।

एतदुत्पत्त्यसंभवाधिकरणं शक्तिपक्षदूषणपरं व्याख्यातं द्वैतभाष्ये। उत्पत्त्यसंभवात्—न च पुरुषाननुगृहीतस्त्रीभ्यः उत्पत्तिर्दृश्यते । न च कर्तुः करणं - यदि पुरुषोऽङ्गीक्रियते तस्यापि कारणाभावादनुपपत्तिः । विज्ञानादिभावे वा तदप्रतिषेधः—यदि विज्ञानादिकारणं तस्याङ्गी क्रियते तदा तत एव सृष्ट्याद्युपपत्तेः ईशवादान्तर्भावः । इति मध्व-भाष्यम्। अत्राधिकरणरत्नमालाविषयः सर्वमपि सूत्रं पांचरात्रप्रामाण्य-निषेधपरमिति पूर्वपक्षखण्डनम् ।

## 40. अत्र कीर्तितानाँ ऋषीणा नाम ग्रहणम्

ब्रह्मसूत्रप्रणेता बादरायणः स्वसूत्रेषु तत्र तत्र कांश्चित् ऋषीन् नामतो निर्दिशति । पूर्वपक्षसिद्धान्तप्रतिपादनवेलायां ते ते ऋषयः स्वाभिप्रायं प्रकटितवन्तः । तत्तदभिप्रायं मनसि निधाय तत्तदृषि-नामनिर्देशपूर्वकं सूत्राणि प्रणिनाय । तेषु ऋषिषु गौरवबुध्या । क्रमेण तत्तदृषिनामानि सुखग्रहणाय निर्दिशामः—

प्रथमेऽध्याये प्रथमपादे—शास्त्रदृष्टचातूपदेशो वामदेववत् । अत्र स्वाभिप्रायवक्तृऋषिकीर्तनं न क्रियते वामदेववत् इति । परं तु उपासनप्रकारबोधनार्थं दृष्टान्ततया ऋषिकीर्तनम् ।

1. साक्षादप्यविरोधं जैमिनिः । संपत्तेरिति जैमिनिस्तथा हि दर्शयति । मध्वादिष्वसंभवादनधिकारं जैमिनिः । अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैकमेके । धर्मं जैमिनिरत एव । शेषत्वात् पुरुषार्थवादः यथान्येष्विति जैमिनिः । परामर्शं जैमिनिश्चोदनाच्चाप-वदति हि । तद्भूतस्य तु नातद्भावः जैमिनेरपि नियमात् तद्रूपाभा-वेभ्यः । परं जैमिनिः मुख्यत्वात् । ब्राह्मेण जैमिनिरुपन्यासादिभ्यः । भावं जैमिनिः विकल्पामननात् ।

2. अभिव्यक्तेरित्याश्मरथ्यः प्रतिज्ञासिद्धेः लिङ्गमाश्मरथ्यः ।

3. अनुस्मृतेर्बादरिः—सुकृतदुष्कृते एवेति तु बादरिः । कार्यं-बादरिरस्य गत्युपपत्तेः । अभावं बादरिराह ह्येवम् ।

4. उत्क्रमिष्यत एवं भावादित्यौडुलोमिः आर्त्विज्यमित्यौडु-लोमिः तस्मै हि परिक्रीयते चितितन्मात्रेण इत्यौडुलोमिः ।

5. अवस्थितेरिति काशकृत्स्नः ।

6. चरणादितिचेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ।

7. स्वामिनः फलश्रुतेरित्यात्रेयः ।

एवं सूत्रेषु 1 जैमिनि, 2 आश्मरथ्य, 3 बादरि, 4 औडुलोमि 5 काशकृत्स्न, 6 कार्ष्णाजिनि, 7 आत्रेय रूपसप्तर्षीणां स्वव्यति-रिक्तानां कीर्तनं दृश्यते ।

1 सूत्रेषु एकादशकृत्वः जैमिनिनामग्रहणम् । 2 आश्मरथ्यस्य द्विः । 3 बादरेः स्थलचतुष्टये । 4 औडुलोमेः स्थलत्रये । 5 काशकृत्स्नस्य एकत्र । 6 कार्ष्णाजिनेः एकत्र । 7 आत्रेयस्यापि एकत्र । वैश्वानराधिकरणे, पुरुषार्थाधिकरणे च जैमिनिनाम्नः द्विः कीर्तनम् । पुरुषार्थाधिकरणे स्वनाम्नः त्रिः कीर्तनम् । 9 नवस्थलेषु सूत्रे स्वनाम कीर्तनं बादरायणस्य । यथा—स्वनामकीर्तनस्थलम् —तदुपर्यपि बादरायणः संभवात् । भावं तु बादरायणोऽस्ति हि । पूर्वं तु बादरायणो हेतुव्यपदेशात् । पुरुषार्थोऽतः शब्दादिति बादरायणः । अधिकोपदेशात् तु बादरायणस्यैवं तद्दर्शनात् । अनुष्ठेयं बादरायणः साम्यश्रुतेः । अप्रतीकालम्बनान्नयतीति बादरायणः उभयथा च दोषात् तत्क्रतुश्च । एवमप्युपन्यासात् अविरोधं बादरायणः । द्वादशाहवदुभयविधं बादरायणोऽतः । सूत्रे बादरायण इति परोक्षनिर्देशात् बादरायणादन्य कर्तृकं सूत्रमिति न भ्रमितव्यम् । वृष्णीनां वासुदेवोऽस्मीति गीतायां श्रीकृष्णः स्वनाम परोक्षं निर्दिशति । न हि तेन गीतोपनिषत् अन्येन प्रोक्ता ! तथाऽत्रापीति भाव्यम् ।

बादरिः मुनिः पूर्वमीमांसायामपि निर्दिष्टः । क्वचित्क्वचिद्विषये उक्तानां ऋषीणां संमतिं बादरायणः अङ्गीचकार क्वचिच्च क्वचिच्च-निराचकार ।

1 स्वतः अपरिच्छिन्नस्य परस्य ब्रह्मणः मात्रया परिच्छिन्नत्वं कथं इति शङ्कापरिहाराय प्रवृत्तं उपासकबुद्धिसौकर्याय तथात्वेन कथनमित्येतद्रूपं आश्मरथ्यमतं न निराचकार ।

प्रतिज्ञासिद्धेः लिङ्गमाश्मरथ्यः इत्यत्रत्वेतन्मतं निराचकार । तत्र जीवात्मवाचिशब्दैः कथं परमात्माभिधानं इति शङ्कायां यादवप्रकाशपक्षमवलम्ब्य आश्मरथ्यः समाधिमाह । एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातं, इदं च कार्यकारणभावमन्तरा न घटते । जीवानामपि ब्रह्मणः उत्पत्तिलय श्रवणात् ब्रह्मकार्यत्वं भवति । एवं च कार्यभूतजीवशब्देन कारणभूतब्रह्माभिधानं योज्यते एव । अतः एकविज्ञानेन सर्वविज्ञान प्रतिपादककार्यकारण भावकृतैक्यस्य लिङ्गमिदं जीवात्म-

वाचिशब्देन परमात्मनोऽभिधानं इति आश्मरथ्याभिप्रायः । अयमेव यादवप्रकाशपक्षः ।

2. अनुस्मृतेः बादरिः सुकृतदुष्कृत एवेति तु बादरिः इति स्थलद्वये बादरिमतं अङ्गीचकार । अन्यस्थलद्वये तन्मतं नानुमेने ।

3. उत्क्रमिष्यत......इत्यत्र चितितन्मात्रेण इत्यत्र चौडुलोमिमतं त्यक्तवान् । आर्त्विज्यमित्यत्र स्वीचकार ।

4. काशकृत्स्नमतमेकत्रोपात्तं तदङ्गीचकार । जीवात्मनः परमात्मतयाऽवस्थितेः इत्यर्थाङ्गीकारेपि सूत्रानुगुण्यम् । अथ गुहां प्रविष्टावात्मानौ इति स्वेनैव सूत्रकृता भेदनिर्देशात् शरीरात्मभावेऽवस्थितिर्विवक्षितेत्यवगम्यते ।

5. कार्ष्णाजिनिमतं नाभ्युपेतं सूत्रकारेण ।

6. आत्रेयमतमपि तथैव ।

7. जैमिनिस्तु बादरायण शिष्यभूतः । संपत्तेरिति जैमिनिः इत्युक्तं जैमिनिमतं स्वीचकार बादरायणः । अन्यार्थं तु जैमिनिः...... अपि चैवमेके इत्यपि सूत्रकारसंमतं, तद्भूतस्य इति जैमिनिनोक्तं बादरायणः उररीचकार अन्यत्र जैमिन्युक्तेषु स्वाभिप्रायं सुविशदं प्रतिपादयामास सूत्रकारो व्यासः ।

### 41. जैमिनिसमीरिता वेदान्तसिद्धान्ताः

कर्मविचारार्थं प्रवृत्तोपि जैमिनिर्मुनिः वेदान्तसिद्धार्थं बहु अभिमनुते । देवतास्वरूपं जैमिनिः निराचक्रे इति तु केषांचित्कथनं अतिवाद एव । परं ब्रह्म लोकान्तरं वैकुण्ठं सर्वमङ्गीकुर्वाणो जैमिनिः कथमिव देवतास्वरूपं निराकुर्यात् । वेदान्तवाक्यविचारं कुर्वाणं वेदान्तसिद्धप्रधानार्थ मङ्गीकुर्वाणं आस्तिकाग्रेसरं जैमिनिं देवतादिस्वरूपं नेच्छति जैमिनिरिति तं नास्तिकं कुर्वाणाः स्वयं नास्तिका भवन्ति। षोडशलक्षणात्मकं सूत्रजालं वेदविचाररूपं शास्त्रं प्रकुर्वाणः जैमिनिः न हि कुत्रचिदपि देवतास्वरूप निषेधकं सूत्रं रचयामास । कथं अन्यथा व्यासेन बादरायणेन शरीरशास्त्रप्रणेत्रा संवादकाले, परब्रह्मस्वरूप तद्गुण, तदुपासन, तज्जन्यमुक्तिफलादिविषये विवादमयं मुनिः कुर्यात् ।

साक्षादप्यविरोधं जैमिनिरिति सूत्रम्। वैश्वानरशब्द इव अग्नि शब्द एवावयवार्थपौष्कल्येन साक्षादेव परमात्मानं वदतीति हि जैमिनि मतम्। जैमिनेः परब्रह्मस्वरूपानंगीकारे कथं एवं कथनं सङ्गच्छते।

मध्वादिष्वसंभवादनधिकारं जैमिनिः—वस्वादिदेवतानां ब्रह्म-विद्यायामेवाधिकारः न तु मधुविद्यायां वस्वादिफलकायां इति ब्रुवाणो जैमिनिः ब्रह्मस्वरूपतद्विद्यावस्वादिदेवताः कथं प्रतिक्षिपेत्।

अन्यार्थं तु जैमिनिः—जीवस्वरूपापेक्षया अन्यस्य ब्रह्मणः सद्भावं वदता जैमिनिना कथं ब्रह्मस्वरूपप्रतिक्षेपः। परं जैमिनिः मुख्यत्वात्-हिरण्यगर्भव्यतिरिक्तं परमात्मानं अर्चिरादिकमातिवाहिकगणं तद्-गणस्य परमात्मोपासकनेतृत्वं वैकुण्ठादिलोकसद्भावं च हि जैमिनिरत्र ब्रूते। एवं वादी मुनिः परमात्मानमेव नाङ्गीकरोति इति वदन्त एवा-पहास्या भवन्ति।

ब्राह्मेण जैमिनिः ब्रह्मसंबन्धितया श्रुतैः अपहतपाप्मत्वादि-गुणैस्सह परं ज्योतिरुपसन्नस्य जीवात्मनः मोक्षदशायामाविर्भावः इति ह्यत्रोच्यते। अनेन ब्रह्मजीवयोर्भेदः गुणसद्भावः स्वरूपाविर्भावो मोक्ष दशायां इत्येतत्सर्वं ज्ञापितं भवतीति कथमेतस्य निषेधः जैमिन्यभि-मतः। भावं जैमिनिर्विकल्पामननात् इति – मुक्तस्य कर्मकृतशरीरा-भावेपि अकर्मकृतशरीरसद्भावं च वदति। एवं बहुविधवेदान्तसिद्धान्तार्थ जातमभ्युपगच्छन् जैमिनिः देवतास्वरूपादि प्रतिषेधतीति कथनं साहसमेव। जैमिन्यनभिमतमेवार्थं स्वबुध्या कल्पयित्वा जैमिन्युक्तमिदं सर्वमिति भगवान् बादरायणोऽब्रवीत् इति कथनं तु अतीव साहसम्। सर्वपुराणानामप्यपलापप्रसङ्गात्।

ननु—जीवातिरिक्तस्य ब्रह्मणः ब्रह्मोपासनस्य, तज्जन्यविलक्षण फलस्य च जैमिन्यभिमतत्वे, कर्मसु कर्तृभूतस्यात्मनः याथात्म्यवेदन-प्रतिपादनपरमेव वेदान्तशास्त्रं कृत्स्नम्। कर्तृर्जीवस्य संस्कारद्वारेण विद्यायाः क्रतुशेषत्वात् तत्र फलश्रुतिरर्थवादमात्रं इति कथं जैमिनिः आक्षिपेत्? न चैवं विधाक्षेपः जैमिन्यनभिमतः इति शक्यं वक्तुम्। शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः इति व्यासेनैव जैमिन्यभि

मसत्वेनोक्तेः इति चेत्............ब्रूमः — अस्य वादस्यान्वारुह्य वादत्वात् । तदुक्तं सारावल्यां—

पादैरत्रैवमेकादशभिरपि परं ब्रह्म वेद्यं निरूढं
भूयः किं क्षुद्रलिङ्गैः गगनलिपिनिभैः क्षोभ्यते ब्रह्मविद्या।
सत्यं तत्तादृगल्पश्रुतमतिकलहत्रासितच्छात्रडिम्भ-
स्तोमक्षेमाय जैमिन्यहृदयकथितं पक्षमुत्क्षिप्य हन्ति ।।

अयमर्थः धूर्तोक्तीनां तावत् निश्शेषनिराकरणं कर्तव्यमेव। किं च बादरायणशिष्यतल्लजस्य जैमिनेः ब्रह्मनिराकरण मत्यन्तानिष्टं इत्युक्तं भवतीति चिन्नामणिरत्र – जैमिन्यहृदयकथितं इति । सूत्रे जैमिनिरित्यत्र न वक्तीत्यध्याहारः । किं तु कदाचिदवोचदिति भूते-लकारस्य । कर्माणि परित्यज्य सन्यासमेव श्लाघित्वा वाक्यजन्यज्ञाना-देव मुक्ताः स्मः इति मन्वानान् अद्वैतिनो मृषावादिनः क्षेप्तुं प्रवृत्तो जैमिनिः तदुक्तवाक्यार्थज्ञानं कर्मानुष्टायिकर्तृस्वरूपशोधकं सत् कर्माङ्ग मेवेत्याघोषयामास । तदजानद्भिः जैमिनिहृदयमेवेदमिति भ्रान्तमिति भावः । इत्यभिनवदेशिकव्याख्या ।

## 42. व्यासजैमिन्योः अभिप्रायभेदस्थलप्रदर्शनम्

1. आत्मानमेव वैश्वानरमुपास्ते इत्यत्र वैश्वानरशब्दः परमात्म-वाचीति सिद्धान्तितम् । तत्र कश्चिदेवं शङ्कामकरोत्—जाठराग्निरेव वैश्वानरशब्दवाच्यः । अत्र प्राणा इति बोधनात्—अग्नौ हि प्राणा-हुतिः क्रियते । अत एव उर एव वेदिः लोमानि बर्हिः हृदयं गार्हपत्यः इत्यादिना उपासकस्य उरः प्रभृतीनां वेदित्वाद्युपदेशः क्रियते इति । अत्र जैमिनि समाधानं संपत्तेरिति जैमिनिस्तथा हि दर्शयति इति बाद-रायणो ब्रवीति । अत्र वैश्वानरशब्दवाच्ये उपासकैः अहरहः क्रियमा-णायाः प्राणाहुतेः अतस्मिन् तत्कल्पनरूपाग्निहोत्रसंपादनं क्रियते । तदर्थं उरः प्रभृतीनां वेदित्वाद्युपदेशः क्रियते । अत एव परमात्मोपासनो-चितफलं तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वस्वात्मसु हुतं भवति, तद्यथेषीकतूलं इत्यादिनोच्यते । अतः न जाठराग्निः वैश्वानरः इति । इमं जैमिनेराशयं बादरायणः अङ्गीचकार ।

2· यो वै वालाके एतेषां पुरुषाणां कर्ता, यस्यवैतत्कर्म स वै वेदितव्यः इत्यत्र वेदितव्यत्वेनोपदिष्टं पूर्वमुपक्षिप्तं ब्रह्म जीवात्मेति पूर्वपक्षं कृत्वा परमात्मेति स्थापितम् । तत्र प्रतिपादित जीवलिङ्गानां कथं निर्वाह इत्यत्र जैमिन्यभिमतं सिद्धान्तं अन्यार्थं तु जैमिनिः प्रश्न-व्याख्यानाभ्यामपि चैवमेके इति सूत्रकारः प्राह । प्राणादिव्यतिरिक्तं जीवं कैश्चिल्लिङ्गैः प्रतिबोध्य पुनः जीवातिरिक्तब्रह्मप्रतिबोधनपरस्य प्रश्नस्य तद्व्याख्यानस्य च श्रवणेन जीवातिरिक्तपरमात्मबोधनार्थं तदुक्तिरिति जैमिन्यभिप्रायः । इदं च व्यासेनाङ्गीकृतम् ।

3· नैष्ठिकाद्याश्रमभ्रष्टानां विधुरादिवत् ब्रह्मविद्यायामधि-कारोऽस्ति नवेति आशङ्क्य अधिकारसद्भावं जैमिन्यभिमतं व्यासः सूत्रे ब्रवीति । तद्भूतस्य तु.........इति । नैष्ठिकादीनामाश्रमिणां ये ये वेषाः तेषामभावोऽनुपपन्नः इति ब्रह्मचार्याचार्यकुल......अरण्यमि-यात् ततो न पुनरेयात् सन्यस्याग्निं न पुनरावर्तयेत् इति शास्त्रेभ्यः नियमनात् अनाश्रिमित्वेनावस्थानमनुपपन्नं इति जैमिनिः । इदं च व्यासस्याप्यभिमतम् । अत्र श्रीमद्भाष्यं—जैमिनेरपीत्यविगानं दर्शयन् उक्तं स्वाभिमतं द्रढयतीति ।

उक्तेषु स्थलत्रयेषु व्यासजैमिन्योरभिप्रायभेदो नास्ति । अन्यत्र सर्वत्राभिप्रायभेदः ।

साक्षादप्यविरोधं जैमिनिः । वैश्वानरविद्यायां श्रूयमाणस्य अग्निशब्दस्य परमात्मपरत्वं जैमिनिव्यासोभयसंमतम् । तत्र जैमनिः अग्रनयनव्युत्पत्त्या परमात्मपरत्वं ब्रूते । व्यासस्तु अग्निशरीरकत्वेन परमात्मपरत्वमिति भेदः ।

2· मध्वादिष्वसंभवादनधिकारं जैमिनिः । वस्वादिपदप्राप्तिरूप फलपूर्वकमोक्षजनकमधुविद्याया वस्वादिदेवानामधिकाराभावं जैमिनिः मनुते । व्यासस्तु तेषां तत्र सद्भावम् । मधुविद्यायाः वस्वादिपद-प्राप्त्यर्थत्वमेव न तु तत्पूर्वकमोक्षजनकत्वमपि, अतः वस्वादिदेवताभिः वस्वादिपदस्य पूर्वं प्राप्तत्वेन, स्वस्य स्वोत्कृष्टत्वाभावादुपास्यत्वा

संभवेन च नाधिकारस्तेषाम् इति जैमिन्यभिप्रायः। मधुविद्यायाः ब्रह्मविद्यात्वं वस्वादिपदप्राप्तिपूर्वकमोक्षजनकत्वं च ब्रह्मणः उपास्यत्वं चेति अधिकारः तेषाम्। अतो न विरोधः इति व्यासाभिप्रायः।

3. यागदानहोमादिः भगवदुपासनं च स्वर्गादिफलं मोक्ष रूपं च फलं दिशतीति जैमिनेरभिप्रायः। कर्माराधितो देवः श्रीमान् नारायण एव सर्वमपि फलं ददातीति व्यासाभिप्रायः।

4. तत्वमस्यादि वाक्यसामानाधिकरण्य बलात् वेदान्तेषु उपास्य तयोक्तस्य जीवभावावगमात् परविद्यासु कर्मीभूतो जीव एव। न तु तद्विलक्षणः परमात्मा। एवं च ब्रह्मविदाप्नोति परं इत्यादि वेदान्तेषु फलश्रवणं अर्थवादमात्रम्। न तु फलविधिरिति विद्यापि क्रतुकर्मभूता आत्मसंस्कारद्वारेण क्रत्वर्थभूतैव च। न तु पुरुषार्थभूता। अतः विद्याङ्गकात् कर्मणः एव पुरुषार्थावाप्तिः इति जैमिनिमतम्।

सामानाधिकरण्यस्य घटकश्रुत्या शरीरात्मभावनिबन्धनत्वेन अन्यथासिद्धेः जीवानतिरेकानवगमकत्वात् परविद्यानां न जीवकर्मकत्वम् अत एव जीवसंस्कारत्वाभावात् वेदान्तविद्याफलश्रुति नर्थवादमात्रं किं तु पृथगेव फलसाधनं, अतः कर्मांगकात् विद्यात एव मोक्षरूपफल प्राप्तिरिति व्यासस्याभिप्रायः।

5. ऊर्ध्वरेतसः आश्रमाः न सन्तीति जैमिन्यभिप्रायः। वीर हा वा एष देवानां योऽग्निमुद्वासयते इति निषेधादिति। ब्रह्मचर्यं समाप्य गृही भवेत्, गृहात् वनीभूत्वा प्रव्रजेत् यदिवेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहात् वनाद्वा यदहरेव विरजेत् तदहरेव प्रव्रजेत् इत्यादि श्रुतेः। गृहस्थाश्रमतौल्याच्च सन्यासाश्रमोऽप्यस्तीति व्यासाभिप्रायः।

6. परं ब्रह्मोपासीनानेवार्चिरादिरातिवाहिको गणो नयतीति जैमिनिः। ये परं ब्रह्मोपासते ये चात्मानं प्रकृतिवियुक्तं ब्रह्मात्मकमुपासते तानुभयविधान् आतिवाहिको गणो नयतीति बादरायणो मनुते। इममेवार्थं व्यासः......अप्रतीकालंबनान्नयतीति...क्रतुश्च इत्यसूत्रयत्। तस्मादचिन्मिश्रं केवलं वा चिद्वस्तु ब्रह्मदृष्टया तद्वियोगेन च यदुपासते न तान् नयतीति श्रीमद्भाष्यम्—

ध्यायेयुर्ये च जीवान् प्रकृति शबलितान् केवलान्वा यथेष्टं

द्वेधापि ब्रह्मदृष्टया जडानिवहमपि स्वेन यद्वाऽन्यदृष्टया ।

ते सर्वे हि प्रतीकप्रणिहितमनसो नार्चिराद्यध्वयोग्याः

ब्रह्मोपास्तेश्च लिङ्गं गतिरियमनघा सूचिता पूर्वमेव ।।

इति साराबलिः । अयमर्थः प्रतीकशब्दः शरीरवाची । अङ्गं प्रतीकोऽवयवः इति कोशः । प्रतीकमात्रं आलम्बनं उपास्यं येषां ते प्रतीकालम्बनाः । परमात्मानं प्रति चित् अचिच्च शरीरं (प्रतीकः) भवति तत्र चित् देहविशिष्टः तद्रहितश्च । एतदुभयोपासनं यथा न ब्रह्मविद्या परमात्मविषयककेवलोपासनत्वात् । तथैव परमात्मदृष्टया एतदुभयोपासनमपि न ब्रह्मविद्या । शरीरात्मभावाविषयकत्वेन अयथावस्थितत्वात् । इत्थं च देहविशिष्टजीवान् इन्द्रचन्द्रादीन् देहरहितान् स्वात्मादीन् ये ध्यायन्ति तेषां देहविशिष्टात्मध्यानं शुद्धात्मध्यानं च प्रतीकोपासनम् । एवं द्विविधोपासनमुक्तम् । द्विविधानपि जीवान् ब्रह्मदृष्टयापि ये ध्यायन्ति तेषामप्युपासनं प्रतीकोपासनं, एवमुपासन चतुष्कम् । एवमचेतनमपि स्वेन रूपेण ब्रह्मदृष्टयाचोपासनं इति द्विविधमुपासनम् । आहत्योपासनषट्कमुक्तं भवति । एवं षड्विधाः उपासकाः प्रतीकोपासकाः । एते नार्चिराद्यध्वयोग्याः इति ।

7. परं ज्योतिरुपसन्नस्य जीवात्मनो मोक्षदशायां अपहतपाप्मत्वादि गुणैस्सहाविर्भाव इति जैमिनिः । जीवात्मनः विज्ञानस्वरूपत्व गुणाष्टकवत्वोभयविधार्थस्य श्रुतिसिद्धत्वादुभयरूपेणाविर्भवतीति बादरायणः ।

8. मोक्षदशायां जीवः शरीरविशिष्टतयैव वर्तते इति जैमिनिः सशरीरत्वस्याशरीरत्वस्य च श्रुतिसंमतत्वात् कदाचित् सशरीरः कदाचिदशरीरः इति बादरायणः । एवं शिष्याचार्ययोः अभिप्रायभेदः । लोकेपि आचार्येणोपदेशकाले बुद्धिमान् शिष्यः कांश्चित्संशयान् पृच्छति मेधावी आचार्यश्च समुचितं प्रत्युत्तरं ददातीति दृष्टम् । तत्र मेधाविना शिष्येण जैमिनिना पृष्टमर्थविशेषं मनसि निधाय तत्प्रतिभाविशेषेण परितुष्टः तदुक्तं सूत्ररूपेण न्यबध्नात् ।

### 43. मधुविद्याविचारः ।

अत्र प्रसङ्गात् मधुविद्यायां किंचित् दृष्टिं प्रसारयेम। त्रिभिः सूत्रैः मधुविद्यां बादरायणो विचारयति। द्वाभ्यां सूत्राभ्यां पूर्वपक्षं कृत्वा एकेन सूत्रेण समाधिं ब्रूते। असौ वा आदित्यो देवमधु इत्यारभ्य –य एतां ब्रह्मोपनिषदं वेद इति श्रवणेनास्याः ब्रह्मोपनिषत्वं निर्विवादम्। उपासनप्रकारः कथं किमेकमेवोपासनमत्र बिवक्षितं उत बहूनीत्यादि बहुविवादास्सन्ति। श्रीभाष्य श्रुतप्रकाशिका भावप्रकाशिकादीनां परस्परविरोधांशदर्शनात् स्वेषु पूर्वापरविरोधदर्शनाच्चार्थः दुरवगाह इति प्रतिभाति। अत्रादित्यो मधुत्वेन रूपितः। लोके मधु वंशादिषु लग्नं भवति। अपूपे च विद्यते तत्र भ्रमरबीजभूताः कीटाश्च छिद्रेषु वर्तन्ते। तथाऽत्र आदित्यरूपमधुनः वंशः द्युलोकः, अन्तरिक्षलोकः मध्वपूपम्। सूर्यकिरणाकृष्टभूमिस्थजलं भ्रमरबीजभूतकीटरूपम्।

अत्रादित्यो मधुत्वेन रूपितः। आदित्यरश्मयो मधुनाडीत्वेन वेदाः पुष्पत्वेन वेदमन्त्राः भ्रमरत्वेन वेदविध्यन्वितद्रव्याणि पुष्परसत्वेन च। हूयमानद्रव्याणां रश्मिद्वारा सूर्यप्राप्तिरपि। अग्नौ प्रास्ता आहुतिः संयगादित्यमुपतिष्ठते इति प्रमाणसिद्धा। यथा मधुकराः पुष्पेभ्यः रसं मधुनाडीद्वारा मधुनि निक्षिपन्ति। तथा वैदिकमन्त्राः वेदाख्यपुष्पगतं तत्तत्कर्मान्विताहुति द्रव्यात्मकरसं रश्मिद्वारा नीत्वा आदित्ये निक्षिपन्ति।

ऋग्वेदमन्त्ररूपभ्रमरः ऋग्वेदविध्यन्वितद्रव्यात्मकपुष्परसं रश्मि रूपमधुनाडीद्वारा आदित्यरूपमधुनः प्राग्भागे निक्षिपति सच रसः रोहितरूपांशात्मना अवतिष्ठते। तमंशं वसुः यथावसरं पश्यति। दर्शनरूपभोगमनुभवति। एवं यजुर्वेदमन्त्ररूपभ्रमरः यजुर्वेदविध्यन्वित द्रव्यात्मक पुष्परसं दक्षिणभागे निक्षिपति स रसः शुक्लरूपांशात्मना। तमंशं रुद्रः। सामवेदमन्त्ररूपभ्रमरः सामविध्यन्वितद्रव्यात्मकपुष्परसं प्रत्यक्भागे। सच कृष्णरूपांशात्मना। आदित्यः तमंशम्। अथर्ववेदमन्त्ररूपभ्रमरः अथर्वविध्यन्वितद्रव्यात्मकपुष्परसं उत्तरभागे।

सच अतिशयितकृष्णात्मना। तमंशं मरुतः अनुभवन्ति। आदेशात्मक वेदमन्त्ररूपभ्रमरः ब्रह्म भागात्मकपुष्परसं उर्ध्वभागे निक्षिपति। सच प्रस्फुरद्भागरूपांशात्मना। तमंशं साध्याः अत्र ऋग्यजुस्सामाथर्वब्रह्म भागात्मकपुष्परसाः यश इन्द्रियादिफलरूपेण परिणताः। एवमत्र वस्त्रादिभोग्यता आदित्यमधूपासकानां वस्वादित्वप्राप्तिपूर्वक तादृ-शानुभवः फलमिति चोक्तम्। मधुविद्यादिषु वस्वादीनां वस्वाद्युपास-कत्व, आराधकत्व अनुग्राह्यत्वासंभवात् अनधिकारं जैमिनिर्मन्यते।

एवमत्र तत्त्वस्थितिः। अत्रेदं विचार्यते। वसुरुद्र आदित्य मरुत् साध्यगणेषु पंचसु असौ वाऽऽदित्यो देवमधु इत्यादिवाक्यबलात् आदित्यस्योपास्यत्वं निर्विवादम्। वसुरुद्र मरुत् साध्यगणानां चतुर्णा-मुपास्यत्वं नैव कण्ठोक्तम्। अतः आदित्यकर्मकोपासने कथमादित्य-स्याधिकारः स्वस्य स्वोपास्यत्वासंभवादित्याक्षिप्य तावन्मात्रसमाधान कथनं योयुज्यते। न तु वस्वादीनामप्यधिकारासंभवतत्समाधान-कथनम्।

अथादित्यविषयेऽपि कथं पूर्वपक्षोदयः। परमात्मोपासने जीव-कर्तृके स्वात्मविषयकानुसन्धानस्यापि शास्त्रसंमतत्वादिति चेत् उच्यते। उपासनं हि न केवलं स्मृतिसन्ततिरूपं, घटादिस्मृतिसन्ततेरपि उपा-सनत्वप्रसङ्गात्। अतः प्रकृष्टवस्तुविषयकस्मृतिसन्ततिरेवोपासनम्। आदित्यस्य स्वस्मादुत्कृष्टत्वाभावात् स्वापेक्षया प्रकृष्टविषयकमुपासनं स्वस्मिन् कर्तुं न शक्यम् इति कर्मकर्तृविरोधः। परमात्मोपासने जीवविषयकत्वमिष्टमेव। निरतिशयभोग्यस्य मुक्तावस्थस्य बद्धावस्थेन स्वेनोपास्यत्वात्। अत्र तु आदित्यानामेवोपास्यत्वं उपासकत्वंचेति अवस्थाभेदनिबन्धनपरिहारस्य दुर्वचत्वं इति। अपिचोपासनप्रीता देवता फलं दिशति फलार्थिने इति लोकदृष्टम्। यदि स्वयमेव फल-प्रदानशक्तः तर्हि कथं फलप्रदस्सन् स्वयं फलार्थी भवति। अतः फल-प्रदत्व फलार्थित्वरूप प्रकर्षापकर्षरूपविरोधस्य मिथस्सत्वेन कर्मकर्तृ-विरोधो दुष्परिहरः। अतः आदित्यविषये पूर्वपक्षोत्थानं युक्तं, न तु वस्वादिविषयेऽपीति।

ननु वसूनामेवैकोभूत्वा इति वसुपदप्राप्तेः फलस्य श्रवणात् तत्क्रतुन्यायेन वस्वादीनामप्युपास्यत्वं सिद्धमेव । न च तत्क्रतुन्याये-नाकारान्तरनिषेधाभावात् वस्वादि पदप्राप्तिरपि भवत्येवेति वस्वा-दीनां उपास्यकोटौ निक्षेपः अनावश्यक एवेति वाच्यम् । प्रधानफलव्य-तिरिक्तस्य फलस्योपासकविषयत्वेपि प्रधानफलस्यानुपास्यत्वे तत्संभ-वायोगात् । अतः प्रधानफलसिध्यर्थं वस्वादीनामुपास्यत्वमवर्जनीय-मेवेति चेत् सत्यम् । एवमपि सिद्धान्ते वस्वादीनामुपास्यत्वकथनानौ-चित्यमेव । तत्र हि ब्रह्मप्राप्तेरेव प्रधानफलत्वं वस्वादिप्राप्तेश्चानुषंगिक फलत्वं, ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्ते इत्यादिवत् वस्वादिपद-प्राप्तेरपि अविषयत्वेपि संभवात् । अतो वस्वादीनामुपास्यत्वाश्रयणं निर्मूलमेव । नचेष्टापत्तिः श्रीभाष्य तद्व्याख्यानादौ तदुक्तेः । इत्येका शङ्का ।

अपरा च-कथंचित् वस्वादीनामुपास्यकोटावन्तर्भावमिव वस्वादि शरीरकपरमात्मनः उपास्यत्वकथनं न युक्तं मानाभावात् । न ह्युप-निषद्यत्र वसुशरीरकपरमात्मोपासनबोधकश्रुतिवाक्यमस्ति । असौ वा आदित्यो देवमधु य एतां ब्रह्मोपनिषदं वेद इति आदित्यस्य तच्छ-रीरकपरोपासनमेव हि विधीयते । तच्चकार्यकारणवस्थादित्य शरीरक परमात्मोपासनरूपं इति तु स्फुटं ज्ञाप्यते । तत्रादित्यस्य कारणदशा आदित्यरूपेण, सृष्टेः पूर्वं स्थिता सूक्ष्मजीवदशा, तदवस्थादित्यशरीर-ब्रह्मोपासनं आदित्यान्तरात्मतया कारणावस्थब्रह्मोपासनम् । आदित्यः स्वदशायां उदयास्तमयकार्यं जगतो निर्वर्तयति । तद्दशापन्नादित्य-शरीरकब्रह्मोपासनं कार्यावस्थ ब्रह्मोपसनम् इति । केचित्तु अथ ततः ऊर्ध्वं इत्यादिपदस्वारस्यात् कार्यावस्था पश्चाद्भाविमुक्तावस्थैव कार-णावस्था, कार्यभिन्नावस्था सैव, इत्यर्थमङ्गीकुर्वन्ति। तदा आदित्यभाव-पश्चाद्भावितदीयमुक्त्यवस्था सा भवति । तदवस्थब्रह्मोपासनं अत्र विधीयते इति वदन्ति । इत्थं च उभयविधोपासनस्य प्रतिपन्नत्वेऽपि वस्वादीनां तच्छरीरकब्रह्मणोवोपासनमत्र न प्रतिपन्नमिति ।

ननु विद्यायाः ब्रह्मोपनिषत्त्वस्य ब्रह्मप्राप्तिरूपफलस्य च श्रवणात् अस्याः ब्रह्मविद्यात्वं अङ्गीकरणीयम्। तत्र वस्वादिभुज्यमानमधुरूप आदित्यः इति। आदित्यस्य मधुभोक्तारः वस्वादयः इति चोपासनं संभवति। तत्राविशेषात्। उभयेपि ब्रह्मात्मकत्वेनोपास्यन्ते इति वक्तव्यम्। यदा वस्वादीनां विशेष्यत्वं तदा तच्छरीरकब्रह्मोपासनं इति सिध्यतीति चेन्न। उक्तरीत्या उपासनस्याकारद्वयरूपत्वेपि वस्वादीनां विशेष्यत्वपक्षेपि ब्रह्मात्मकत्वपर्यन्तानुधावनस्यानपेक्षितत्वात्। जीवविशेष्यकपरमात्मप्रकारकोपासनस्याप्यङ्गीकारवत् उपपत्तेः आदित्यस्य विशेषणत्वविवक्षायामेव आदित्यशरीरकपरमात्मरूप मधुभोक्तारः वस्वादयः मधुरूपादित्यशरीरकब्रह्मभोक्तारः वस्वादयः इत्युपासनसंभवेन वस्वादीनामपि ब्रह्मपर्यन्तत्वगमने मानाभावात् इति।

अत्रायं समाधिः—छान्दोग्ये तृतीयाध्याये इयं मधुविद्या श्रूयते। अत्र वसुरुद्रादीनामधिकारोऽस्ति नेति विचारः पूर्वं विस्मर्तव्यः। सद्विद्या उपकोसलविद्याऽक्षिविद्यादिवत् इयमपि काचित् ब्रह्मविद्या। तास्विव अस्यामपि मनुष्यादीनामधिकारोऽस्तीति तु निर्विवादम्। ब्रह्मविद्यात्वात् आदित्यशरीरकब्रह्मणः उपास्यत्वमत्रोच्यते। तथा तत्रादित्यस्य प्राक् दक्षिणा प्रत्यङ् ऊर्ध्वभागा अपि क्रमेण वसुरुद्र आदित्य मरुत् साध्यगणैः भुज्यमानाः उच्यन्ते—तद्यत्प्रथममृतं तद्वसव उपजीवन्ति। अथ यत् द्वितीयममृतं तत् रुद्रा उपजीवन्ति इत्यादिभिः। अतः वसूपभुज्यमान प्राक्भावरूपामृतविशिष्टः रुद्रोपभुज्यमानदक्षिणभागविशिष्ट इत्येवं रूपेणादित्यः उपास्यः उक्तो भवति। वसुरुद्राद्युपभुज्यमानत्वस्यानुपास्यत्वे तदुक्तिवैयर्थ्यमेव स्यात्। एवं च वस्वाद्युपभुज्यमानतत्तदंशविशिष्टादित्यशरीरकं ब्रह्म कार्यावस्थं कारणावस्थं चोपास्यमित्युक्तं भवति। एव मस्मदादिभिः मनुष्यैः मधुविद्या उपास्या। एतादृशीं मधुविद्यां वसुः कश्चित् यदि अनुतिष्ठेत् तदा, रुद्रादिभुज्यमानतत्तदंशविशिष्टमधुरूपः आदित्यः इत्युपासनकरणवत् स्वोपभुज्यमान प्राक्भागविशिष्टो मधुरूप आदित्यः इति तेनोपासनं कार्यं, तत्र कर्तृकर्मविरोधः। वसुभूतस्याशुद्धस्य स्वस्यापि उपासनकोटि-

निक्षिप्तत्वात् इति कथं तत्र वसोरधिकारः इति । एवं रुद्रादिष्वपि । यद्यपि वसुभूतस्वमात्रोपासनं केवलं न विहितं, परं तु स्वोपभुज्यमान प्रागंशविशिष्टादित्यस्यैवेति अवस्थाभेदान्न विरोधः । स्वोपभुज्यमानांश विशिष्टमधुरुप आदित्यः इति स्वेनानुसंन्धातुं शक्यत्वात् । अथापि, एवमनुसन्धानस्य वसूनामेवैको भूत्वा इति वसुपदप्राप्तेः फलत्वोक्तेः तस्याः स्वेन पूर्वमेव प्राप्तत्वात् फलार्थित्वं न भवतीत्यधिकारोऽनुपपन्न एवेति । अत एव श्रीमति भाष्ये—नच वस्वादीनां सतां वस्वादित्वं प्राप्यं भवति प्राप्तत्वात् इति भाषितम् । अतः कर्मकर्तृविरोधाभावेपि फलार्थिता न भवतीति अधिकारासंभवस्तदवस्थः । वसुरुद्र आदित्य मरुत् साध्यगणेषु पञ्चसु तृतीयस्यादित्यस्य विषये फलार्थित्वाभाववत् कर्मकर्तृविरोधोपि । तत्र स्वेनोपभुज्यमान प्रत्यङ्भागरूपामृतविशिष्टा-दित्यः आदित्येनैव उपास्य इति । सिद्धान्ते अस्याः ब्रह्मविद्यात्वात् मोक्षपर्यन्तं फलं इति हेतोः पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुम न्यायात् पुनर्वसुपद प्राप्तिपूर्वकमोक्षेच्छायाः संभवः इति । अस्यां वस्वादीनामधिकारः इत्युक्तम् । अतोऽत्र वस्वादीनां उपासकत्वं उपा-स्यत्वं सर्वमुपपन्नमिति ।

अत्र वस्वादिशरीरकपरमात्मपर्यन्तानुधावने परं प्रमाणमन्वेष्ट-व्यम् । अत्र किंचित् ब्रूमः—कारणावस्थादित्यशरीरब्रह्मणः उपासन-मत्र कथमवगम्यते इति चेत्? अथ इत ऊर्ध्वं उदेत्य इत्यादिभिः इति वक्तव्यम् । पूर्वमादित्यः उदयास्तमयनिर्वर्तकोभूत्वा ऊर्ध्वः पश्चात् कालावच्छिन्नः उदेत्य कार्यदशातो निष्क्रम्य उदयास्तमयौ न करोति एकाकार एव सर्वबन्धविनिर्मुक्तो भवतीत्यत्रोच्यते, प्रलये उदयास्तमयकार्यरहितो वर्तते इति चोच्यते । एवंचात्र कारणावस्थ ब्रह्मोपासनं उक्तं भवति । एवमेतदेव वाक्यं वसुरुद्रादिविषयकमपि-भवति । स च एतदेव रूपमभिसंविशति एतस्मादुदेति वस्वादिषु प्रतिपर्यायं उदयास्तमया वुक्त्वा अथ तत ऊर्ध्वं उदेत्य इत्युक्तेरिद मवगम्यते । एवं च अस्य वाक्यस्य वस्वादिविषयकत्वस्य संभवात् । एतां ब्रह्मोपनिषदं वेद इत्युपर्युक्तेश्च कारणावस्थब्र

वसूनामेवैको भूत्वा इत्युक्त्या वसुबहुत्वप्रतीतेः अयमपि कश्चिद्वसुस्सन्, पश्चात् रुद्रादिश्च सन् मोक्षं प्राप्नोति । नच वस्वादीनामेकैककल्पाव-सानायुष्कत्वात् कथमेककल्पे एव सर्वंपदप्राप्तिपूर्वकमोक्षसंभवः इति वाच्यम् । देवेषु आजानदेवत्व कर्मदेवत्वविभागवदत्रापि उभयविध-वस्वादिसंभवात् । पुण्यविशेषेण वस्वादिजन्मानः केचित्, एवं मधु-विद्योपासनेन प्राप्तवसुत्वभावाः केचित् । उत्तरेपि वसुत्वसाजात्यात् वसव एव । उभयेषामपि भोगे कालकृतवैषम्येपि देशादिवैषम्यं नास्ति इति कस्यचिदपि दोषस्य नावकाशः । वस्वादिस्थानेषु उत्कर्षापकर्ष-विभोगोऽप्यप्रामाणिकः न तत्प्रयुक्तदोषोपीति ।

अतो वसुरुद्रादित्य मरुत्साध्यगणावस्थब्रह्मोपजीव्यरोहितादि-पञ्चरूपात्मकपंचामृताश्रयादित्यावस्थ ब्रह्मोपासनं मधुविद्या । अत्र ब्रह्मणः उपजीवकत्वं विशेषणीभूतवस्वादिद्वारकम् । कार्यावस्थस्य कारणवस्थस्य चोपास्यत्वं पूर्वमेवोक्तम् । कारणावस्थत्वमपि द्वि-प्रकारमिति पूर्वमवोचाम ।

## 44. अत्र स्पृष्टाः पूर्वमीमांसाविषयाः ।

1. अथातो ब्रह्मजिज्ञासा – कर्मविचारस्य वृत्तत्वरूपहेतुवाची अतश्शब्द इति सूत्रकारः कर्ममीमांसामनिर्दिशत् व्यासः । अत्र प्राभा-करः पूर्वपक्षवादी—यद्यपि प्राभाकरः सूत्रकारानन्तरभावी, अथापि सूत्रकारस्य भविष्यद्दर्शनवेदित्वात् तदाशङ्कां पूर्वमेव प्रदर्शयति ।

ब्रह्मविचारः कर्मविचारानन्तरकालीनकर्तव्यताकः कर्मंगो-ऽल्पास्थिरफलत्वनिर्णयविशिष्टानन्तस्थिरफलापातप्रतीतिविषयत्वात् इत्यनुमानं विवक्षितम् । कार्यवस्तुन्येव शब्दस्य बोधकत्वं प्रामाण्यं च, सिद्धवस्तुनि शब्दस्य बोधकत्वमेव नास्ति । अतः सिद्धरूपब्रह्मबोधक-त्वाभावात् शब्दस्य, अनन्तस्थिरफलापातप्रतीतिरेव नास्तीति हेतोर-सिद्धेः कथं ब्रह्मविचारस्यारम्भणीयत्वमिति प्राभाकाराशयः । यद्वा [illegible]नेरप्ययमाशयो भवितुमर्हति—चोदनालक्षणोऽर्थो धर्मः इति वदतः [illegible]यां प्रवर्तकस्य वचनस्यैव चोदनारूपत्वेन कार्यार्थे एव शब्दस्यबोध-कत्[illegible]त्याशयसिद्धेः । अत्र सिद्धवस्त्वपि वेदप्रातिपाद्यमिति सिद्धान्तः।

2. एवं देवताधिकरणे—देवतास्वरूपं शब्दानुपूर्वी एवेति मीमांसकमतं खण्डयति ।

3. चमसवदविशेषात् ।

4. अशुद्धमितिचेन्न शब्दात् ।

5. सूचकश्च हि—

6. धर्मं जैमिनिरत एव ।

7. सर्वं वेदान्त......एकं वा संयोगस्य चोदना—

8. संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ।

9. वेधाद्यर्थभेदात् ।

10. हानौतूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम् ।

11. अक्षरधियां त्ववरोधः......औपसदवत् तदुक्तम् ।

12. तन्निर्धारणानियमः तद्दृष्टेः पृथक् हि अप्रतिबन्धः फलम् ।

13. प्रदानवदेव तदुक्तम् ।

14. लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ।

15. पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ।

16. श्रुत्यादिबलीयस्त्वाच्च न बाधः ।

17. अनुबन्धादिभ्यः—तदुक्तम् । वचनानित्वपूर्वत्वात् ।

18. अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ।

19. मन्त्रादिवद्वाऽविरोधः ।

20. नाना शब्दादिभेदात् ।

21. अङ्गेषु यथाश्रयभावः ।

22. शेषत्वात्पुरुषार्थवादः...जैमिनिः ।

23. विधिर्वा धारणवत् ।

24. अत एव चाग्नीन्धनाद्यनपेक्षा ।

25. सर्वथापि त एवोभयलिङ्गात् ।

26. स्वामिनः फलश्रुतेरित्यात्रेयः ।

27. आर्त्विज्यं इत्यौडुलोमिः ।

28. द्वादशाहवत् उभयविधम् ।

## 45. प्रायशः एकाकाराणि सूत्राणि ।

| | | |
|---|---|---|
| 1-1-6 | भेदव्यपदेशाच्च | 18 |
| 1-1-7 | भेदव्यपदेशाच्चान्यः | 22 |
| 1-3-1 | भेदव्यपदेशात् | 69 |
| 1-2-1 | स्मृतेश्च | 38 |
| 1-3-9 | स्मृतेश्च | 104 |
| 4-3-5 | स्मृतेश्च | 518 |
| 1-3-5 | अपि स्मर्यते | 87 |
| 2-3-7 | अपि स्मर्यते | 260 |
| 3-4-7 | अपि स्मर्यंते | 448 |
| 3-4-9 | अपि स्मर्यंते | 445 |
| 3-2-5 | दर्शयति चाथो अपि स्मर्यते | 331 |
| 4-2-5 | स्मर्यते च | 501 |
| 3-1-3 | स्मर्यतेऽपि लोके | 306 |
| 4-1-5 | स्मरन्ति च | 479 |
| 3-1-3 | स्मरन्ति च | 301 |
| 2-3-6 | स्मरन्ति च | 262 |
| 1 2-2 | प्रकरणाच्च | 42 |
| 1-3-1 | प्रकरणात् | 72 |
| 1-4-1 | वदतीतिचेन्न प्राज्ञो हि प्रकरणात् | 114 |
| 4-4-1 | आत्मा प्रकरणात् | 526 |
| 1-2-3 | अन्तर उपपत्तेः | 45 |
| 1-3-2 | धर्मोपपत्तेश्च | 73 |
| 2-1-10 | सर्वधर्मोपपत्तेश्च उपपत्तेश्च | 174 |
| -2-8 | फलमत उपपत्तेः | 351 |
| -1-4 | आदित्यादिमतयश्चोपपत्तेः | 475 |

अन्तरधिकरणं — अन्तस्तद्धर्मोपदेशात् । अन्तराधिकरणं— अन्तर उपपत्तेः । अन्तरत्वाधिकरणं—अन्तरा भूतग्रामवत्स्वात्मनोष। प्राणाधिकरणं—अत एव प्राणः, प्राणोत्पत्त्यधिकरणं–तथा प्राणाः प्राणाणुत्वाधिकरणं–अणवश्च—

किंचिद्वैषम्यभांजि स्मृतिरूपप्रमाणप्रदर्शनपराणि सूत्राणि एकाकाराणि—38 स्मृतेश्च, 87 अपि स्मर्यते, 104 स्मृतेश्च, 250 अपि स्मर्यते, 262 स्मरन्ति च, 301 स्मरन्ति च, 306 स्मर्यतेऽपि च लोके, 331 दर्शयति चाथोऽपि स्मर्यते, 448 अपि स्मर्यते, 455 अपि स्मर्यते, 479 स्मरन्ति च, 501 स्मर्यते च, 518 स्मृतेश्च ।

एवं श्रुतिप्रमाणसूचकानि-विरोधः कर्मणि-इति चेन्नानेकप्रतिपत्ते-र्दर्शनात् । समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्-शब्द-विशेषात् । गुहां प्रविष्टौ तद्दर्शनात् । ज्योतिर्दर्शनात् संपत्तेरिति... दर्शयति-आनुमानिकमप्येकेषां–दर्शयति, च दृश्यते तु सर्वोपेता च तद्दर्शनात् । वैषम्य नैर्घृण्ये न...तथा हि दर्शयति । रूपादिमत्वाच्च दर्शनात्–गौण्यसंभवात् शब्दाच्च, शब्देभ्यः, व्यतिरेको गन्धवत्तथा हि दर्शयति यावदात्मभावित्व...तद्दर्शनात् । अकरणत्वाच्च न दोषस्तथा हि दर्शयति । ज्योतिराद्यधिष्ठानं—शब्दात् । दर्शयति च – आत्म-ाब्दाच्च–विद्यैव तु निर्धारणात् दर्शनाच्च भूम्नः क्रतुबज्ज्यायस्त्वं— दर्शयति । सर्वान्नानुमतिश्च तद्दर्शनात् । ऐहिकमप्रस्तुतप्रतिबन्धे ाद्दर्शनात् । अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् । वाङ्मनसि ्शनात् शब्दाच्च । नैकस्मिन् दर्शयतो हि निशि नेतिचेन्न-संबन्ध... ्यति च, दर्शनाच्च विशेषं च दर्शयति-प्रदीपवदावेशस्तथाहि दर्श- अनावृत्तिः शब्दात् ॥

द्वैतिमते सर्वसूत्रमपि सिद्धान्तसूत्रमेव । सर्वमपि प्रणवघटितमेव वाच्य ।

## 46. ब्रह्मसूत्रव्याख्यानबाहुल्यम् ।

भगवान् बादरायणः सर्वज्ञः वेदान्तविचारणरूपं शारीरशास्त्रं सूत्ररूपेण संसारिजनानुजिघृक्षया प्रणिनाय। तेन कृतानि सूत्राणि वेदान्तार्थं स्फुटं प्रकाशयन्त्यपि बहुभिराचार्यैः बहुधाऽर्थवर्णनात् पुनरपि संशयमेव जनयन्ति । सूत्रवैपरीत्यं पूर्वसूत्रशेषं, अपूर्वसूत्रप्रणयनं सूत्र-पदच्छंदवैषम्यं सूत्रव्युत्क्रमं एवमादिचान्यत्कल्पयन्तः स्वस्वबुध्यनुसारेण व्याख्यानानाः आचार्याः मतभेदं कल्पयन्ति । अत्र व्याख्यातॄनाम व्याख्यानप्रकराश्च प्रदर्श्यन्ते—यथा—

ब्रह्मसूत्राणि बहुभिः व्याख्यातानि ।

1. अद्वैताचार्येण श्रीशङ्करपादेन...अद्वैतपरतया
2. श्रीरामानुजाचार्येण...विशिष्टाद्वैतपरतया
3. श्रीकण्ठाचार्येण...शिवविशिष्टाद्वैतपरतया
4. श्रीवल्लभाचार्येण–शुद्धाद्वैतपरतया
5. श्रीबिम्बार्काचार्येण...द्वैताद्वैतपरतया
6. श्रीमध्वाचार्येण...विष्णुद्वैतपरतया
7. श्रीभास्कराचार्येण...भेदाभेदपरतया
8. विज्ञानभिक्षुणा...विशिष्टाद्वैतविशेषपरतया
9. श्रीबलदेवेन...अचिन्त्याभेदपरतया
10. श्रीकराचार्येण...शिवद्वैतपरतया
11. अभिनवशुकाचार्येण...श्रीमद्भागवतानुसारेण च ।

एवं तत्तन्मताचार्याः कश्चन कश्चनार्थविशेषं मनसि परिकल्प्य तत्तदनुसारेण सूत्राक्षराणि योजयित्वा व्याख्यानानि कुर्वन्तः जनानां बुद्धिमोहमुत्पादयन्ति च। बादरायणस्त्वेकमेवाभिप्रायं मनसि निधाय सूत्राणि प्रणिनायेति तु निश्चप्रचम् । अहो किं कुर्मः ? स्वस्य स्वस्य-प्रतिभातिशयं प्रकटयन्तः मतभेदं हि कल्पयन्ति । ते ते बुद्धिमन्तः स्वस्वशेमुष्यतिशयेन भगवद्गीताया अपि हि अर्थभेदमुपपाद्य अन्यथा अन्यथा निरूपयन्ति । वस्तु तत्वं त्वेकमेव । मतभेदस्तु बहुधा भिद्यते। वस्तुतः एकादश्यादिव्रतस्य एकैकदिनमात्रस्थत्वेपि धर्मशास्त्रनिपुणाः

स्वस्वबुद्धिसामर्थ्यात् विपर्ययेण व्रतादि कल्पयन्ति । अनुष्ठानमपि तथा दृश्यते ।

## 47. अद्वैतिमते प्रत्यधिकरणविषयाः ।

1. प्रथमवर्णके—जीवब्रह्मैक्यात्मविषयस्य मोक्षरूपप्रयोजनस्य च संभवात् शास्त्रमिदमारम्भणीयम् । द्वितीयवर्णके—ब्रह्ममीमांसा-शास्त्रस्य पूर्वतन्त्रेण अगतार्थत्वं निरधारि । तृतीये—साधन चतुष्टय-संपत्तेः संभवात् अधिकारिसंभवो निर्णीतः । चतुर्थे—ब्रह्मणः आपाततः प्रसिद्धत्वात् संबन्धसिद्धेः शास्त्रमारम्भणीयमिति ।

2. जगज्जन्मादिकारणत्वं ब्रह्मलक्षणमुक्तम् ।

3. प्रथमवर्णके – वेदकर्तृत्वेन जगज्जन्मादिहेतुत्वस्य संभवेन ब्रह्मणः सर्वज्ञत्वं संभवतीत्युपपादितम् । द्वितीयवर्णके—शास्त्रादेव प्रमाणात् ब्रह्माधिगम्यते इत्युक्तम् ।

4. प्रथमवर्णके—ब्रह्मणो वेदान्तेषु तात्पर्येण प्रतिपाद्यमानत्वात् तेषां नानर्थक्यं कर्तृदेवतादिप्रशंसापरत्वं वा । द्वितीये—उपासना विधिशेषत्वं निराकृतम् ।

5 जगत्कारणबोधकवेदान्तवाक्यानि ब्रह्मपराणि न तु प्रधान-पराणीति ।

6. ब्रह्मपुच्छं प्रतिष्ठेति तैत्तरीयकवाक्यं स्वप्रधान्येन ब्रह्म समर्प-यति न तु आनन्दमयावयवत्वेनेति स्थापितम् ।

7. छान्दोग्ये य एषोऽन्तरादित्ये इति सूर्यमण्डले चक्षुषि-चोपास्यत्वेन श्रुतः परमेश्वरः इति निर्णीतम् ।

8. अस्य लोकस्य का गतिः इत्यत्र संपाद्योपास्यत्वेन श्रुतः आकाशशब्दवाच्यः परमात्मेति ।

9. **कतमा सा देवता** प्राण इति हो वाच, इत्यत्र प्रस्तवाख्यसाम-भक्तो उपास्यः परमात्मा न तु मुख्यप्राणः इति पूर्ववन्न्यायातिदेशः ।

10. अथ यदतः परो दिवो इत्यत्र जाठराग्नौ उपास्यत्वेन श्रूय-माणं ज्योतिः परं ब्रह्म ।

11. प्राणोऽस्मि प्रज्ञात्मा इत्यत्र श्रूयमाणः प्राणः ब्रह्मेति ।

## द्वितीयपादः

1. मनोमयः प्राणशरीरः इत्यत्र मनोमयत्वादिभिरुपास्यः परः न तु जीव इति ।

2. यस्य ब्रह्म च...इत्यत्र श्रूयमाणोऽत्ता परः

3. गुहाप्रविष्टाधिकरणे-ऋतं पिबन्तौ, इत्यत्र गुहाप्रविष्टौ जीव परावििति ।

4. य एषोऽक्षिणि...पुरुषः परमात्मा न प्रतिबिम्ब इति ।

5. योऽन्तरो यमयतीत्यत्र अन्तर्यामी परमात्मा

6. यत्तदद्रेश्यं...इत्युक्तः परमात्मा

7. यस्त्वेतमेव...वैश्वानरः परमात्मा

## तृतीयः पादः

1. यस्मिन् द्यौः...द्युभ्वाद्यायतनं निर्गुणं ब्रह्म न प्रधानम् ।

2. यत्र नान्यत्त्पश्यति...श्रुतः निर्गुणः परमात्मा न प्राणः ।

3. एतद्वैतदक्षरं अक्षरं निर्गुणं ब्रह्म ।

4. यस्त्वेतमेवं त्रिमात्रेण...परः पुरुषः निर्गुणः परमात्मा ।

5. यदिदमस्मिन् ब्रह्मपुरे...दहराकाशः सगुणः परमात्मा ।

6. य एषोऽक्षिणि पुरुषो आविर्भूतस्वरूपः निर्गुणः परमात्मा ।

7. न तत्र सूर्यो भाति श्रूयमाणं ज्योतिः निर्गुणं ब्रह्म ।

8. अङ्गुष्ठमात्रः पुरुषः ईशानः निर्गुणं ब्रह्म ।

9. देवानां ऋषीणां च ब्रह्मविद्यायामधिकारः अस्तीति ।

10. शूद्राणां ब्रह्मविद्यासु वेदपूर्वकः अधिकारो नास्तीति ।

11. यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतं श्रुतः प्राणः निर्गुणं ब्रह्म ।

12. एष संप्रसादोऽस्मात्, श्रुतं ज्योतिः निर्गुणं ब्रह्म ।

13. आकाशो ह वै नाम...आकाशः निर्गुणः परः

14. कतम आत्मेति योऽयं विज्ञानमयः पुरुषः इत्यत्र श्रुतः आत्मा निर्गुणः परः ।

## चतुर्थपादः

1. महतः परमव्यक्तं अत्राव्यक्तपदं न प्रधानपरं शरीरपरमेव

2. अजामेकां अजापदं तेजोबन्नलक्षणप्रकृतिपरम् ।

3. यस्मिन् पञ्च...इत्यत्र न सांख्याभिमततत्वपरं अपि प्राणादयः प्रतिपाद्यन्ते ।

4. वेदान्तेषु सृज्यविषये क्वचित्तेज आदिका क्वचिदाकशादिका इति विभागदर्शनेपि स्रष्टरि अविगानम् ।

5. यो वै बालाके श्रुतौ वेदितव्यः परमात्मा

6. आत्मा वा अरे निर्गुणः परः

7. ब्रह्म उपादनमपीति

8. सांख्यमतस्य अवैदिकत्वप्रतिपादकयुक्त्या वेशेषिकमतानां अपि तत् ज्ञेयं

## द्वितीयाध्यायः

**2-1-1 स्मृत्यधिकरणं**—स्वपक्षं पूर्वाध्यायोक्तस्यार्थस्य स्मृतिन्यायविरोधपरिहारः प्रधानाद्विवादानां न्यायाभासत्वं च निरूप्यमिति प्रथमाधिकरणे स्मृतिविरोधपरिहारः । कपिलोक्तसांख्यस्मृतेः वेदान्तेषु आश्रयणीयत्वमित्याक्षिप्य मनुस्मृत्योक्तमेवोपजीव्यमित्युच्यते। कपिलस्य सगरपुत्रनाशकत्वेन प्रसिद्धिसत्वात् तादृशवासुदेवनामा कपिलः अन्यः । ऋषिं प्रसूतं कपिलं इति श्रुत्युक्तकपिलः अन्यः इति वक्तुं शक्यत्वात् ।

**2-1-2 योगप्रत्युक्त्यधिकरणं**—'अथ तत्वदर्शनोपायो योगः' इति श्रुतस्यापि योगस्मृतिरूपशास्त्रस्य न प्रामाण्यम् । योगनिष्ठानां द्वैतित्वेन आत्मैकदर्शित्वाभावात् । असङ्गो ह्ययं पुरुषः इति निर्गुणविशुद्धपुरुषैकत्वप्रतिपादकवेदान्तशास्त्रविरुद्धं हि योगशास्त्रम् । तं त्वौपनिषदं पृच्छामि, नावेदविन्मनुते तं बृहन्तं इत्यादिश्रुतयः पुरुषैकत्वे प्रमाणम् ।

**2-1-3 विलक्षणत्वाधिकरणं**—लोके मृदादेरुपादानत्वं कुलालादेः निमित्तत्वं च दृष्टं। अतः ब्रह्मणः चेतनाचेतनरूप प्रपञ्चं प्रति निमित्तत्वमुपादानत्वं च कथम् ? वेदोक्तत्वादेव लोकविलक्षणस्योभयरूपत्व

संभवः इति समाधिः । विज्ञानं चा विज्ञानं च, मृत् अब्रवीत् आपोऽब्रुवन्, तत्तेजो ऐक्षत जे हेमे प्राणाः अहं श्रेयसे...तेह वाचमूचुः इत्यादि श्रुतिभ्यः चेतनाचेतनयोः ब्रह्मानुप्रवेशमुक्त्वा अचेतनानामपि चेतनवत् प्रश्नोत्तरवत्वादिश्रवणाच्च । अतो वेदोक्तमङ्गीकार्यं । शब्दैकप्रमाणकत्वादस्मदादेः । अचिन्त्याः खलु ये भावाः, न तांस्तर्केण योजयेत् । नैषा तर्केण मति रापनेया इत्यादिभिः ब्रह्मणः अचिन्त्यशक्तिमत्वोक्तेः।

**2-1-4 शिष्टापरिग्रहाधिकरणं** – प्रधानकारणवादि निरसनेन मनुव्यासरूपशिष्टैः अपरिगृहीताः अण्वादिकारणवादिनश्च निरस्ताः ।

**2-1-5** प्रपञ्चस्य ब्रह्मोपादानत्वे भोग्यस्य भोक्तृत्वापत्तिः भोक्तुः भोग्यत्वापत्तिः एकोपादानत्वात् । देवदत्तादेरेव भोक्तृत्वं ओदनादेव च भोग्यत्वमिति लोकव्यवस्था । अतो लोकदृष्टव्यवहारविरोधः इति सांख्याक्षेपे-समाधिः–फेन वीची तरङ्गबुद्बुदादीनां उदकात्मकसमुद्राभिन्नत्वेपि इतरेतर व्यवहार विभागादि व्यवहारवत् । एकमृदुत्पन्न घटशरावादीनां विभागदर्शनाच्च ।

**2-1-6 आरम्भणाधिकरणं**—यथा सौम्य एकेन मृत्पिण्डेन इत्यादि श्रुति बलेन रूपनामादि विकारव्यवहारस्य केवल वाङ्मात्रत्वं मृद एव सत्यत्वं प्रतीयते। एवं चेत् भोक्तृभोग्यादीनामेवाभावात् तद्व्यवहारः कथं सङ्गच्छते इति प्रश्ने तेषामपि मिथ्यात्वमेव । तुष्यतु दुर्जनः इति न्यायेन लोकदृष्टप्रक्रियया पृष्टस्य तद्रीत्योत्तरं दत्तम् । ब्रह्मव्यतिरेकेण सत्यरूपस्यान्यस्याभावः अत्र समर्थ्यते। अनन्यत्वं-अन्यस्याभावः—अनन्यः तस्य भावः–परब्रह्मणो व्यतिरेकेण व्यतिरेकेणाभावःतत्सादृश्यं अभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट्प्रकीर्तिताः इति प्रमाणबलेनात्र नञः अभावार्थकत्वम् । यथा मृगतृष्णिकोदकादीनां ऊषरादिभ्यः अनन्यत्वं (अन्यस्याभावत्वं) यथा फेनादीनां समुद्रादनन्यत्वं यथा च घटाकाशानां महाकाशादनन्यत्वम् । अस्मान्मायी सृजते विश्वमेतत् इति मायाविशिष्टं ईश्वरशब्देन व्यवहारार्हं सगुणं ब्रह्म जगत्कारणम् । अविद्याविशिष्टं जीवशब्देन व्यवहारार्हं भोक्तृभोग्यभावादिना वर्तते । जीवो ब्रह्म विशुद्धा

चित् भेदस्तस्याः तयोः द्वयोः। अविद्या तच्चितोर्योगः षडस्माकमनादयः इति षण्णामनादित्वाङ्गीकारात् भोक्तृभोग्यादि व्यवस्था सुखदुःखादिव्यवस्था च। ज्ञानरुपे ब्रह्मणि अविद्यामायासङ्गः कथमिति चेत् ? जले औष्ण्यमिव अग्नौ शैत्यमिव।

**2-1-7 इतरव्यपदेशाधिकरणं**–जन्मजरामरणाद्यनेकानर्थं आत्मनः कथं परमेश्वरः कुर्यात् ? कथं च ब्रह्मणः स्रष्टृत्वं इति शङ्कापरिहारकम्। मायाविशिष्टब्रह्मण एव जगत्कारणत्वम्। न तु शुद्धस्य। आत्मावा अरे इति तस्यैवान्वेष्टव्यत्वं च। रज्जौ सर्पभूदलाद्यध्यासवत् ब्रह्मणि भोक्तृभोग्यादिभ्रमः। वस्तुतः तत्त्वमसीत्यादिना जीव ब्रह्माभेद एव। एक एवात्मेति सिद्धान्तः। यथा पृथिवीत्वाश्रयाणा मश्मनां केचित् वज्रवैडूर्यादयः केचित् सूर्यकान्तादयः केचित् लोष्ट पाषाणादयः। यथा च पृथिव्याश्रयाणां बीजानां बहुविधं पत्रपुष्पादिवैचित्र्यं, एवमेव ब्रह्मणः अविद्यावशात्सर्वोपपत्तिः।

2-1-8 साधनमनपेक्ष्यैव ब्रह्म जगत्सृष्टिं करोति। क्षीरादिः दृष्टान्तः। क्षीरं दध्यादिभावमाप्नोति। बलका रेतस्सेकमन्तरेण गर्भं धत्ते। पद्मिनी प्रस्थानसाधनमनपेक्ष्यैव तटाकात् तटाकान्तरं प्रतिष्ठते। इन्द्रादयः सौभरिप्रभृतयः सिद्धयोगिनश्च सचेतनाः स्व शक्त्यैव शरीरान्तरं हर्म्यादिकं देशान्तरगमनादिकं च कुर्वन्ति।

**2-1-9 कृत्स्नप्रसक्त्यधिकरणं**–निरवयवस्य ब्रह्मणः कथं परिणामः जगद्रूपेण। कृत्स्नपरिणामे ब्रह्मणो नाशः। सावयवत्वाभ्युगमे निष्कलमित्यादि शब्दव्याकोपः अनित्यत्वप्रसङ्गश्चेत्याक्षेपपरिहारकम्। तावानस्य महिमा, ततो ज्यायांश्च पुरुषः, 'अचिन्त्याः खलु ये भावाः न तान् तर्केण योजयेत्। प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम्। इति, अतीन्द्रियार्थं याथात्म्यानवगमात् एवं प्रश्नः। सावयवत्वनिरवय त्वयोः वस्तुनि विकल्पो न संभवति। अविद्याकल्पितस्वरूपभेदे ब्रह्मणि सावयवत्वम्। अतो जगत्सृष्टिः। तावतापि ब्रह्म ज्ञानरूपं शुद्धमेव। तिमिरदोषेण अनेकचन्द्रदर्शनेपि चन्द्रैकत्वनिश्चयः अबाधितः खलु।

2-1-10 **सर्वोपेताधिकरणं**–सर्वकर्मा सर्वकामः सत्यकामः सत्यसङ्कल्पः एतस्य वाऽक्षरस्य इत्यादि श्रुतिभ्यः ब्रह्मणः सर्वशक्त्यवगतेः विचित्रविकार प्रपञ्चभावोऽप्युपपद्यते। यद्यपि, नेति नेति इत्यादिना ब्रह्मणः सर्वविशेषाः प्रतिषिद्धाः, अपाणिपादमिति च साधनसामग्र्यपि प्रतिषिद्धा, तथापि पूर्वोक्तश्रुतिसामर्थ्यात् सृज्यसर्गशक्तिरप्यस्तीत्यङ्गीक्रियते।

2-1-11 **प्रयोजनवत्त्वाधिकरणं**–प्रयोजनाभिसन्धिरहितस्य राज्ञः राजामात्यस्य च कन्तुकादिविहारेषु लीलारूपप्रवृत्तिवत् बाह्यप्रयोजनानपेक्षयैव स्वभावादेव उच्छ्वास निश्वासादिप्रवृत्तिवच्च परमेश्वरस्य सृष्टिरुपपद्यते।

2-1-12 **अवैषम्यनैर्घृण्याधिकरणं**–समोऽहं न मे द्वेष्यः इत्याद्युक्तब्रह्मणः जगद्विषमसृष्टौ पक्षपातादि दोषनिवारणपरम्। अनादि जीव गतधर्मापेक्षयैव तस्य स्रष्टृत्वात्। व्रीहियवादिसृष्टौ साधारणकारणभूतस्य मेघस्य न सृज्यवैषम्यापादकत्वम्। तत्तद्बीजगतासाधारणसामर्थ्यमेव तत्र कारणम्।

2-1-13 **सर्वधर्मोपपत्त्यधिकरणं**—प्रधानकारणवादे सर्वज्ञत्वादिसर्वधर्मोपपत्तिः न घटते। औपनिषदचेतनब्रह्मजगत्कारणवादे सर्वस्योपपत्तिः।

2-2-1 **रचनानुपपत्त्यधिकरणं**—चेतनानधिष्ठितप्रधानस्य जगत् कारणत्वं वदतां सांख्यानां निरासपरम्। 'योऽप्सु तिष्ठन्' एतस्य वाक्षरस्य इति सर्ववस्तुषु परमेश्वरस्य सत्त्वादेव तेषां शक्तिमत्त्वम्।

दृष्टवदानुश्रविकः सह्यविशुद्धिक्षयातिशययुक्तः।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्॥ इति

सांख्यानां सिद्धान्तः। आनुश्रविकः वेदोक्तोपायः दृष्टवत् औषधादिवत् प्रत्यक्षोपाय एव। परं तु उपायः शास्त्रनिषिद्धहिंसारूपविशुद्धियुक्त वृक्षपत्रादिच्छेदनक्षुद्रजन्तुनाशादिरूपविशुद्धियुक्तश्च। कर्मफलस्य क्षयित्वेन तदनन्तरं दुःखोत्पत्तिरूपक्षयः युक्तः। जात्यन्धस्य नेत्रोत्पत्तौ तन्नाशे च यथाऽतिशयितदुःखं तथा स्वर्गप्राप्तौ तत्क्षये च दुःखाति-

शयोत्पत्तिः। एतादृशक्षयातिशययुक्तश्च वेदोक्तमार्गः। अतो वैदिकमार्गविपरीतः एव श्रेयान् भुत प्रधानपुरुषविज्ञानरूपोपाय एव आत्यन्तिकदुःखोच्छेदसाधनम् । अत एव भारते उक्तं—

तातैतत् बहुशोऽभ्यस्तं जन्मजन्मान्तरेष्वपि ।
त्रयीधर्ममधर्माढ्यं न संयक् प्रतिभाति मे ।। इति ।

गीतायामप्येवमेवोक्तं—

त्रैगुण्यविषयावेदाः निस्त्रैगुण्यो भवार्जन ।
निर्द्वन्द्वी नित्यसत्वस्थः निर्योगक्षेम आत्मवान् ।। इति ।

कर्मचितो लोकः क्षीयते इति च श्रुतिः । अतो वैदिकमार्गः दूष्य एवेति सांख्यमतानुसारिणः। एतन्नयुक्तं-तं षड्विंशकमित्याहुः सप्तविंशमथाऽपरे इति प्रकृतेः पुरुषाच्च व्यतिरिक्तः परमेश्वरः प्रतिपाद्यते । स एव परमपुरुषः जगत्कारणम् । वेदमार्गदूषणं तु साहसमेव। सामान्यन्यायेन उत्सर्गापवादन्यायेन च निषेधशास्त्राणां विधिशत्रास्त्राणां च प्रवृत्तेः । अपिचात्र नहि भिक्षुकास्सन्तीति स्थाल्यो नाधिश्रीयन्ते । न हि मृगास्सन्तीति यवाः नोप्यन्ते । इति न्यायोऽत्र ग्राह्यः । यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं यत् तत्सुखं स्वः पदास्पदं इति प्रसिद्धानन्दसागररूपस्वर्गार्थं कर्म विहितम् । अत्र किञ्चित् अशुध्यादिकं भावीति । एतत् दुःखाय न हि भवति । न साहसमनारुह्य नरो भद्राणि पश्यति इति हि न्यायः । कूपखाननवत् एतद्भविष्यति । तद्यथा—कूपखनकः कूपं खनन् यद्यपि मृदा पांसुभिश्च अवकीर्णो भवति, सः अप्सु संजातासु तत एव तं गुणमासादयति येन स च दोषो निर्हण्यते । भूयसाचाभ्युदयेन योगो भवति । इति महाभाष्यन्यायात् नायमत्र दोषः। गीताश्लोकादिकं मोक्षार्थिविषयं कर्मफलेषु विरक्ताधिकारिकं च ।

**2-2-2 महद्दीर्घाधिकरणं**—शुक्लतन्तूत्पन्नपटे शुक्लरूपं दृश्यते । एवं परमेश्वर सृष्टजगति तन्निष्ठचैतन्यानुवृत्तिः स्यादिति शङ्का । एवमनुवृत्ति नियमो न संभवति । गोमयादेः वृश्चिकोत्पत्तिदर्शनात् ।

**2-2-3 परमाणुजगत्कारणत्वाधिकरणं**–अत्र परमाणुकारणवादो निरस्यते ।

**2-2-4 समुदायाधिकरणं**—सर्ववैनाशिकसिद्धान्तनिराकरणमत्र ।

**2-2-5 अभावाधिकरणं**—विज्ञानवादि बौद्धमतनिरासः ।

**2-2-6 एकस्मिन्नसंभवाधिकरणं**–दिगम्बरमतनिरासः ।

**2-2-7 पशुपतिमतनिरासः**–पत्युः ईश्वरस्य निमित्तकारणत्वं वदति । पशुपाशविमोक्षणाय कार्यं कारणं योग विधिः दुःखान्ताः पञ्च-पदार्थाः पशुपतिना उपदिष्टाः । वैशेषिकादयोपि ईश्वरं निमित्त-कारणं वदन्ति । ईश्वरस्य पत्युः जगत्कारणत्वं न संभवति । तथासति रागद्वेषादि दोषप्रसक्तेः तस्यानीश्वरत्वमेव प्रसज्येत । नहि ईश्वरः करुणावान् वीतरागश्च सन् कुत्सिते कर्मणि प्राणिनः प्रवर्तयेत् । जीव-कर्मापेक्षया विषमसृष्टिः अतो न दोषप्रसङ्ग इत्यपि न साधीयः । अन्योन्याश्रयदोषप्रसङ्गात् । कर्मणा ईश्वरः प्रवर्तनीयः ईश्वरेण च कर्मेति । स्वतन्त्रोपीश्वरः कर्मभिः प्रवर्त्यते इति विरोधश्च, तथा चायमपरः गण्डस्योपरि स्फोटः इति । ईश्वरस्य स्वातन्त्र्यभङ्गोपि ।

**2-2-8 उत्पत्त्यसंभवाधिकरणं**–वेदविरुद्धार्थप्रतिपादकत्वात् पञ्च-रात्रं न प्रमाणम् । आग्नेयं पाञ्चरात्रं तु दीक्षायुक्तं च तान्त्रिकम् । अवैदिकत्वात् तत्तन्त्रं ततो वैखानसेन तु । सौम्येन वैदिकेनैव देवदेवं समर्चयेत् इति पाञ्चरात्रस्य वैदिकापरिग्राह्यत्वोक्तेः । नचेदं पाञ्च-रात्रदूषणं वैखानसप्रशंसार्थमिति वाच्यम् । अवैदिकत्वादिति हेतूक्तेः तावतापि निराकरणाभावात् । ननु शैवादिमतेषु विरुद्धाचारादयो दृश्यन्ते न तथा पांचरात्रे। वेदविरुद्धवत् भासमानस्य वाक्यस्याविरुद्धार्थ वर्णनसंभवाच्च । एवमेव हि उपनिषत्स्वपि परस्परविरुद्धार्थप्रति-पादकतया भासमानानां वाक्यानामविरुद्धार्थ समन्वयः क्रियते । अतः प्रामाण्यं सुशकमिति चेन्न । शैवादिग्रन्थेष्वपि विरुद्धांशस्य त्याज्यत्वं अविरुद्धार्थभागस्य प्रामाण्यं च स्यात् । विरुद्धांशे अन्यथा तात्पर्य-वर्णनं वा स्यादिति महाननर्थः ।

अपि च—पस्पशाह्निके महाभाष्यकृता—सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः, सङ्गास्सरहस्याः बहुधा भिन्नाः एकशतमध्वर्यु शाखाः, सहस्रवर्त्मा सामवेदः, एकविंशधा बाह्वृच्यं नवधा अथर्वणो वेदः, वाकोवाक्यं, इतिहासः पुराणं वैद्यकम् इत्येतावत् उक्तम्। पाञ्चरात्रस्य तु प्रस्ताव एव नास्ति। एवमेव छान्दोग्ये अधीहि भगव इति होपससाद इत्यादौ पाञ्चरात्रप्रस्तावगन्धोपि नास्ति। पांचरात्रस्य प्रामाण्ये कथं उभयत्रानुवादाभावः। अनुक्तमन्यतो ग्राह्यमिति न्यायस्य नात्र प्रसरः, तथापि शैवाद्यागमवदेवास्यापि प्रामाण्यं वाच्यम्। न सांख्यं न शैवं न तत् पांचरात्रं न जैनं न मीमासकादेः मतं वा। विशिष्टानुभूत्या विशुद्धात्मकत्वात् तदेकोऽवशिष्टः शिवः केवलोऽहं ।। इति दशश्लोक्यां शङ्करपादैः उक्तं अप्रामाण्यम्।

## तृतीयपादः

**2-3-1 वियदधिकरणं**—अत्राकाशस्योत्पत्तिरुच्यते।

**2-3-2 मातरिश्वाधिकरणं**—वायुर्वाव संवर्गः इति वायोरुपासन श्रवणात्। सैषा अनस्तमिता देवता यद्वायुः इति बृहदारण्यक श्रुतेः वायुश्चान्तरिक्षं चामृत इत्यादि श्रुतेश्च वायोरुत्पत्तिर्नास्तीति पूर्वपक्षं कृत्वा उत्पत्तिः स्थाप्यते।

**2-3-3 असंभवाधिकरणं**—सदात्मकब्रह्मणः अन्यतः सम्भवो निषिध्यते। स कारणं कारणाधिपाधिपो न चास्य कश्चित् जनिता न चाधिपः इति श्रुतेः। सर्वविकारजातस्य मूलप्रकृतिः यथा अधिष्ठानभूता, तथा ब्रह्म सर्वाधिष्ठानभूतम्। अन्यथा भ्रमाधिष्ठानस्य अनवस्थाप्रसङ्गः। यथा भ्रमस्थले अधिष्ठानस्य पारमार्थिकत्वमभ्युपेत्य रजतादि निषिध्यते, तथा नेह नानास्ति किञ्चन इति प्रत्यक्षदृष्टप्रपञ्चनिषेधः पारमार्थिकं किञ्चित्तत्वमङ्गीकृत्य।

**2-3-4 तेजोधिकरणं**—वायोरेव तेजसः उत्पत्तिः उच्यते।

**2-3-5 अबधिकरणं**—अग्नेः जलोत्पत्तिः।

**2-3-6 पृथिव्यधिकरणं**—ता अन्नमसृजन्त इत्यत्र अन्नशब्दवाच्या पृथिव्येव, न व्रीह्यादि, ओदनं वा

2-3-7 **तदभिध्यानाधिकरणं**—आकाशात् वायुः वायोरग्निः इत्यादिना स्वतन्त्राकाशादिकमेव तत्तदुपादाननं इति बोध्यते इति पूर्व पक्षं कृत्वा सोऽकामयत बहु स्यां प्रजायेय, सच्च त्यच्चाभवत् इत्यादि प्रमाणबलात् तत्तद्भूतादिकं अभिध्यायन्नेव सृजति इति सिद्धान्तः क्रियते ।

2-3-8 **विपर्ययाधिकरणं**—पूर्वं आकाशादीनां उत्पत्तिक्रमो निरूपितः । अद्य लयक्रमः । उत्पत्तिक्रमविपर्ययेण अप्ययः ।

2-3-9 **अन्तरा विज्ञानाधिकरणं** — भूतोत्पत्तिक्रमवत् भूतलयक्रमोपि इति विज्ञानमनसोः न क्रमान्तरमन्वेषणीयम् ।

2-3-10 **चराचरव्यपाश्रयाधिकरणं** — जीवस्याप्युत्पत्तिप्रलयौ स्यातामित्याशङ्क्य जन्ममरणादि जीवस्य स्थूलशरीरव्यपाश्रय एव स्थावरजङ्गमभूतान्येव जायन्ते म्रियन्ते च । स वा अयं पुरुषः जायमानः शरीरमभिसंपद्यमानः इति बृहदारण्यकोक्त्या शरीरसंबध एव जीवस्य जन्म शरीरादुत्क्रमणमेव मरणं प्रतिपाद्यते ।

2-3-11 **आत्माधिकरणं**—शरीरेन्द्रिय पञ्जराध्यक्षः कर्मफलानुभोक्ता कश्चिज्जीवोऽस्ति । सः आकाशादिवत् उत्पद्यते इति पूर्वपक्षं कृत्वा अजो नित्यः इत्यादि प्रमाणबलेनोत्पत्तिर्निषिध्यते । तत्त्वमसि अयमात्मा ब्रह्म, इति भोक्ता जीवोपि ब्रह्मैव । ब्रह्मण एवाविद्यया जीवभावापत्तिः न तु स्वतः । एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा इति ब्रह्मण एव सर्वभूतान्तर्वर्तित्वोक्तेः ।

2-3-12 **ज्ञाधिकरणं**—आत्मनः आगन्तुकं चैतन्यं निषिध्यते । कृत्स्नः प्रज्ञानधनः अत्रायं पुरुषः स्वयं ज्योतिः विज्ञानमानन्दं ब्रह्म इति प्रामाणात् आत्मनः नित्यमेव चैतन्यम् । सुषुप्त्यादिषु विषयाभावात् चैतन्याप्रकाशः । यद्वैतन्न पश्यति, पश्यन्वा एतन्न पश्यति(बृ.4-3-23) इति सुषुप्तिविषयक श्रुत्या आत्मनः चैतन्यस्य सद्भावः एव ज्ञायते इति ।

**2-3-13 उत्क्रान्त्यधिकरणं**—जीवस्याणुत्वमाशङ्क्य आकाशवत् सर्वगतश्च नित्यः, स वा एष महानज आत्मा इति प्रमाणात् विभुः। अणुत्वप्रतिपादकश्रुतयः उपाधिसंसर्गादुपपद्यन्ते। तत्त्वमसीति ज्ञानेन सर्वाविद्यानाशे विभुत्वं च।

**2-3-14 कर्त्रधिकरणं**—जीवस्य कर्तृत्वं स्थाप्यते।

**2-3-15 तक्षाधिकरणं**—जीवस्य कर्तृत्वं न स्वाभाविकं, बुध्याद्युपाधिकृतं यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति इत्यादिना जीवस्य स्वाभाविक कर्तृत्वाभ्युपगमे संसारित्व प्राप्तेरभिधानात्।

**2-3-16 परायत्ताधिकरणं**—परमेश्वरप्रेरित एव जीवः कर्ता भवति।

**2-3-17 अंशाधिकरणं**—अग्निविष्फुलिङ्गवत् जीवः ईश्वरांशः। अंश इव अंशः इति आभास एव अंशः। निरवयवब्रह्मणः मुख्यांशासंभवात्। अंश गतदुःखादिकं त्वंशिनि न प्रसज्यते। सर्वव्याप्तस्यापि सूर्यप्रकाशस्य अङ्गुल्याद्युपाधिसंबन्धात् ऋजुभाव वक्रभावप्राप्तावपि न तस्य परमार्थतस्तत्प्राप्तिः एवमेवांशगत दुःखादिप्राप्तिः न परस्य। अविद्याकृतदेहसंबन्धवत्वादंशे अंशे जीवे एव विधिनिषेधशास्त्राणां प्रवृत्तिः न त्वंशिनि ब्रह्मणि॥ यथा अग्नेः एकत्वेपि श्मशानाग्नेः परिहारः। वैदिकाग्नेः परिग्रहः। भौमत्वाविशेषेपि नरकलेवरादीनां परिहारः वज्रवैडूर्यादीनां परिग्रहः। गोमूत्रपुरीषादीनां पवित्रत्वेन परिग्रहः। महिषादिमूत्राणां त्यागः।

## चतुर्थः पादः

**2-4-1 प्राणोत्पत्त्यधिकरणं**—अत्र प्राणानामुत्पत्तिः प्रतिपाद्यते। उत्सूत्रः पूर्वपक्षः अतिदेशसूत्रमिदम्।

**2-4-2 सप्तगत्यधिकरणं**—इन्द्रियाणां संख्या एकादश।

**2-4-3 प्राणाणुत्वाधिकरणं**—प्राणानां सर्वशरीरव्यापित्वं न कल्प्यम्। प्राणसूक्ष्माः परिच्छिन्नाश्च।

**2-4-4 प्राणश्रैष्ठ्याधिकरणं**–न मृत्युरासीदमृतं न तर्हि रात्र्या अह्न आसीत् प्रकेतः । आनीदवातं स्वधया तदेकं तस्माद्धान्यं न परः किं च नास इति ऋग्वेदे यजुर्वेदे च श्रूयते । अन: प्राणने इति धातोः आनीत् इति निष्पन्नम् । मुख्यप्राणवायुना सह परमात्मनः सद्भाव-बोधनात् परस्येव तस्यापि नोत्पत्तिः । परिहारस्तु-अप्राणोह्यमनाः इत्युक्त्या परस्य प्राणाभावबोधकस्पष्टश्रुतेः अवातमित्युक्त्या वायुं विना आनीदित्यर्थसिद्धेश्च मुख्यप्राणस्याप्युत्पत्तिरस्तीति । अस्य श्रेष्ठ त्वं च प्राणो वाव ज्येष्ठः इति छान्दोग्य श्रुत्या । न वै शक्ष्यामः त्व-दृते जीवितुं इति (बृ) श्रुत्याचावगम्यते ।

**2-4-5 वायुक्रियाधिकरणं**–वायुः पञ्चविधः । प्राणापानव्यानो-दानसमानभेदात् । पृथगुत्पत्तिश्रवणात् वायुः अन्यः प्राणश्चान्यः । जीवस्योपकारं च कुरुतः । यथा अमात्यः राजपरतन्त्रस्सन् राज्यांगैः सह उपकारं करोति । तथा मुख्यप्राणोपि अन्येन्द्रियैस्सह जीवाधीनः सन् जीवस्योपकरोति जीवस्य । शरीरधारणादिकरणात् श्रेष्ठत्वम् ।

**2-4-6 श्रेष्ठाणुत्वाधिकरणं**–मुख्यप्राणस्याणुत्वम् । परमाणु-वत् नाणुत्वं पञ्चभिः वृत्तिभिः कृत्स्नशरीरव्यापित्वात् । परिच्छिन्न-त्वमात्रं उत्क्रान्त्यादिना प्राणस्य ज्ञायते ।

**2-4-7 ज्योतिराद्यधिकरण** – अभिमानिदेवताविष्टप्राणानामेव कार्यं करणे सामर्थ्यम् । यथा वृषभाद्यधिष्ठितशकटानां कार्यकरणे सामर्थ्यं भोक्तृत्वं तु जीवस्यैव ।

**2-4-8 इन्द्रियाधिकरणं**–एतस्माज्जायते प्राणः मनस्सर्वेन्द्रि-याणि च इति पृथगुत्पत्तिश्रवणात् एकादशेन्द्रियाणि मुख्यप्राणव्यति रिक्तानि तत्त्वान्तराण्येव । न तु तस्यैवेतरे प्राणाः वृत्तिभेदाः ।

**2-4-9 संज्ञामूर्तिक्लृप्त्यधिकरणं**–नामरूपव्याकर्तृत्वं परमेश्वरस्यै वेत्युच्यते ।

## तृतीयाध्यायः

**3-1-1 तदन्तरप्रतिपत्त्यधिकरणं**—भूतसूक्ष्मपरिष्वक्तस्यैव जीवस्य गत्यगती ।

**3-1-2 कृतात्ययाधिकरणं** – पुनर्जननहेतुभूताननुभुक्तेषत्कर्मविशिष्टाः सानुशया एव यथागत किञ्चिदन्यथा चावरोहन्ति ।

**3-1-3 अनिष्टादिकार्यधिकरणं**—यागादिकर्तृणां तदकर्तृणांचाविशेषेण चन्द्रप्राप्तिरिति पूर्वपक्षं कृत्वा पापकृतां देहारंभाय चन्द्रप्राप्तिर्नावश्यकी, धृष्टद्युम्नादीनां सीताप्रभृतीनां च पञ्चमाहुत्यपेक्षां विनैवोत्पत्तिदर्शनात् ।

**3-1-4 स्वाभाव्यापत्त्यधिकरणं**—अवरोहतो जीवस्य आकाशादिभावापत्तिः तत्सादृश्यापत्तिरेव ।

**3-1-5 नातिचिराधिकरणं** — कर्मिणो जीवस्याकाशादिप्राप्तौ स्वल्पकाल स्थितिरेव, अतो वै खलु दुर्निष्प्रपततरं इत्युक्तेः । ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल् इति व्याकरणसूत्रम् ।

**3-1-6 अन्याधिष्ठिताधिकरणं**—अनुशयवतां जीवानां व्रीह्यादिभावः उक्तः । तत्र जीवान्तराधिष्ठितव्रीह्यादौ अनुप्रविश्य तद्गतसुखदुःखभाक्त्वं स्यात् पशुहिंसापूर्वकयागादिकरणेन तत्फलानुभवस्यावश्यकत्वात् इति पूर्वपक्षं कृत्वा यज्ञे वधोऽवधः इति प्रमाणात् तस्याः हिंसात्वाभावेन कर्मणः अदुष्टत्वात्, तत्र संश्लेषमात्रमेवेति सिद्धान्तः ।

## द्वितीयः पादः

**3-2-1** स्वाप्नार्थस्य मायामात्रत्वं (अपारमार्थिकत्वं) स्वप्नेदृष्टस्य प्रबोधकाले कृत्स्नाभिव्यक्त्यभावात् । अतो मिथ्यात्वम् ।

**3-2-2 तदभावाधिकरणं**–नाडी, पुरीतत्, रश्मिः हृदयं प्राज्ञः इत्येते जीवस्य सुषुप्तिस्थानत्वेन श्रुतेः । व्रीहियवादिवन्नात्र विकल्पः। समुच्चय एव । सप्तमीविभक्त्या भिन्नस्थानत्वेन प्रतीयमानत्वेपि

प्रासादे खट्वायां तल्पे राजा शेते इतिवत् यमुना गङ्गया सह सागरं गच्छतीति वच्चोपपत्तिसंभवात् । प्राज्ञ एव साक्षात् सुषुप्तिस्थानम् ।

3-2-3 **कर्मानुस्मृत्यधिकरणं**—सुप्त एव प्रबुद्धः इति स्थाप्यते ।

3-2-4 **मुग्धाधिकरणं**—मरणार्धसदृशी मुग्धावस्था जाग्रत्स्वप्न-सुषुप्त्यपेक्षया विलक्षणा जीवस्यास्तीति ।

3-2-5 **उभयलिङ्गाधिकरणं**—अत्र ब्रह्मणः सगुणत्वनिर्गुणत्वरूपो भयलिङ्गत्वाभावः स्थाप्यते । सगुणश्रुतयः निर्गुणश्रुतयश्च सन्ति । उभयावैयर्थ्याय उभयरूपत्वं विरोधात् न स्वीकर्तुं शक्यम् । अन्यतर प्रामाण्ये अर्धजरतीयन्यायापत्तिः । अतः अविद्यारूपोपाधिविशिष्टं ब्रह्म सगुणं सकलविशेषसंयुक्तं प्रपञ्चरूपं भवति । भूयश्चान्ते विश्वमाया-निवृत्तिः इत्यादि प्रमाणबलेन अविद्यारहितं ब्रह्म निर्गुणम् । जले जल चाञ्चल्यप्रयुक्त बहुत्वस्य चन्द्रबिम्बेषु दर्शनेपि चन्द्रे न बहुत्वं, तथा उपाधिरूपशरीरेन्द्रियादिसंबन्धाधीन सुखदुःखादयः उपाधिगताः न ब्रह्मगताः । अतो नोभयलिङ्गं ब्रह्म ।

3-2-6 **प्रकृतैतावत्वाधिकरणं**—द्वे वाव ब्रह्मणो रूपे इत्यादिकं ब्रह्मणो रूपद्वयं ब्रह्म च निषेधति । परं ब्रह्मणो रूपद्वयमात्रम् । सत्यं ज्ञानमित्यादिना ब्रह्मप्रतिपादनात् । ब्रह्मणोपि निषेधे प्रक्षालनाद्धि पङ्कस्य इति न्यायेन महता प्रबन्धेन ब्रह्मसद्भाववर्णनस्य वैयर्थ्यापत्तेः। उत्तरत्र सत्यस्य सत्यमिति ब्रह्मसत्यत्वस्थापनवैयर्थ्यापत्तिश्च ।

3-2-7 **पराधिकरणं**—परस्मात् ब्रह्मणः अन्यत् वस्तु न किञ्चि-दस्तीति । यस्मात्परं नापरमस्ति, नेह नानास्ति किञ्चन इति श्रुतेः ।

3-2-8 **फलाधिकरणं**—यागादेः यागादिकर्मणः आराधितदेवस्य अर्थापत्तिप्रमाणसिद्धापूर्वस्य वा फलप्रदत्वं इति संशय्य कर्मण एव फल-प्रदत्वमिति जैमिनिर्मनुते । विग्रहो हविरादानं युगपत्कर्म सन्निधिः प्रीतिः फलप्रदानं च देवतानां च विद्यते इति हेतोः । अपूर्वाद्याश्रयणे क्लेशाच्च । एष ह्येव साधु कर्म - एष उ एवासाधुकर्म—लभते च ततः कामान् इति प्रमाणबलात् परमेश्वर एव फलप्रदः इति बाद-रायणमतम् ।

## तृतीयपादः

**3-3-1 सर्ववेदान्तप्रत्ययाधिकरणं**—सगुणब्रह्मविषयः प्राणादि-विषयकश्च विज्ञानभेदाभेदविचारः। सर्ववेदान्तविज्ञानमेकमेव। विधि फलदेवताऽऽख्याविशेषात्। नामरूप, धर्मविशेष पुनरुक्ति, निन्दा, अशक्ति, समाप्तिवचन प्रायश्चित्तान्यदर्शनात् शाखान्तरे कर्मभेदस्स्यात् इति मीमांसा(पूर्व), पूर्वपक्षसूत्रम्। एकं वा संयोगरूपचोदनाख्याविशे-षात् इति सिद्धान्त सूत्रम्। ज्ञानकाण्डेपि भिन्नशाखासु प्रतीयमानं ज्ञानमभिन्नम्। शिरोव्रताख्यव्रतस्य वेदाध्ययनाङ्गत्वमेव। न तु ब्रह्म विद्याङ्गत्वम्। ब्रह्मविद्यां वदेत इत्यत्र ब्रह्मविद्याशब्दः वेदविद्यापर एव। ब्रह्म तत्वं तपो वेदे न द्वयोः पुंसि वेधसि इति वेदे प्रयोगात्।

**3-3-2 उपसंहाराधिकरणं**—सर्ववेदान्तोक्तब्रह्मज्ञानस्य समानत्वे सिद्धे गुणानामुपसंहारः। अग्निहोत्रादिकर्मणः एकत्वसिद्धचै अन्य-त्रोक्ताङ्गानामप्यनुष्ठानवत्।

**3-3-3 अन्यथात्वाधिकरणं** – वाजसनेयकच्छान्दोग्योक्तोद्गीथ-विद्ययोः भेद एव।

**3-3-4 व्याप्त्यधिकरणं** – छान्दोग्ये उद्गीथावयवभूतोंकार-बाहुल्यदर्शनात् स ओङ्कार एवोपास्यः। ओमित्यक्षरमुद्गीथमुपा-सीत इत्यत्र समानविभक्तिकत्वश्रवणात् सामानाधिकरण्यं वक्तव्यम्। तच्च चतुर्धा। अध्यासः अपवादः एकत्वं विशेषणमिति। अत्र विशे-षणरूपसामानाधिकरण्यम्। ओं इत्यक्षरस्य सर्ववेदव्यापित्वेन अत्रापि तस्यैव ग्रहणं स्यात् इति तन्निषेधः अनेन सामानाधिकरण्येन सिध्यति। अत्र उद्गीथशब्दविशेषणेन विशेषितत्वात् औद्गात्र-विशेषितस्य ओंकारस्यैवोपास्यत्वेन ग्रहणम्। सिंहो माणवकः, नाम ब्रह्मेत्युपासीत, इत्यादिषु अध्याससामानाधिकरण्यम्। देहेन्द्रियसन्घाते आत्मबुद्धिः आत्मबुध्या निवर्तते इति देवोऽहमित्यपवादः। एवमेव तत्त्वमसीत्यादावपि। द्विजोत्तमो ब्राह्मणो भूदेवः इत्येकत्वम्। नीलं यत् उत्पलं तदानयेत्यत्र विशेषणत्वम्।

3-3-5 छान्दोग्यवाजसनेयकोक्तप्राणविद्ययोः कौषीतिकीप्राण-विद्यायाश्च अभेदस्थापनम् । कौषीतिक्यां वसिष्ठत्वाद्यनुक्तावपि उप-संहार्यत्वमेव । यथा वा शौर्यादिगुणविशिष्टदेवदत्तः देशान्तरं गतः तद्देश्यैः अज्ञातगुणकोपि सः नातद्गुणको भवितुमर्हति । तद्देशस्थैः पूर्वं तद्गुणानामज्ञातत्वेपि परिचयवशात् पश्चात् तज्ज्ञानसंभवात् ।

3-3-6 **आनन्दाद्यधिकरणं** — आनन्दत्वादिगुणानां ब्रह्मस्वरूप-प्रतिपादनायैव प्रवृत्तत्वात् सर्वत्रोपषसंहार्यत्वम् ।

3-3-7 **आध्यानाधिकरणं**—इन्द्रियेभ्यः पराह्यर्थाः—पुरुषान्न परं इत्यादौ सर्वेभ्यः आत्मा पर इति प्रतिपाद्यते । निचाय्य तं मृत्यु-मुखात् प्रमुच्यते इति बन्धनिवृत्ति पूर्वकप्रयोजनार्थं आध्यान पूर्वक-संयग्दर्शनोक्तेः ।

3-3-8 **आत्मगृहीत्यधिकरणं** — आत्मा वा इदमेक एवाग्र आसीत् इत्यत्रात्मशब्दः न विरिञ्चादिपरः किं तु परमात्मपरः । ईक्षापूर्वकस्रष्टृत्ववचनात् । एतादृशसृष्टेः सर्वत्र परमात्मकर्तृकत्वेन प्रसिद्धत्वात् । अथवा—वाजसनेयके कतम आत्मा - इति प्रस्तुत्य यो यं विज्ञानमयः इत्यारभ्य स वा एष महानजः आत्मा अजरोऽमरो-ऽमृतोऽभयो ब्रह्म इति श्रूयते । छान्दोग्ये सदेव सोम्य इत्यारभ्य स आत्मा तत्त्वमसि इति च । अत्र सदात्मशब्दयोः तुल्यार्थकत्वं स्थाप्यते।

3-3-9 **कार्याख्यानाधिकरणं** – तस्माद्वा अशिष्यन्तः इत्यादौ प्राणविद्यानिष्ठस्याचमनीयाप्सु वासस्त्वानुसन्धानं विधीयते ।

3-3-10 **समानाधिकरणं**–एकस्यां शाखायां स्थलद्वये पठितापि शाण्डिल्यविद्या एकैव । यथा भिन्नासु शाखासु पठिता विद्या उपा-स्याभेदेनैका । विप्रकृष्टपठितशाण्डिल्यविद्यामनूद्य प्राप्तांशं विहाय अप्राप्तांशेशानत्वादिगुणविधानार्थं अन्येति विद्यैक्यात् ।

3-3-11 **संबन्धाधिकरणं**—अक्षिविद्या आदित्यविद्ययोः भेद-स्थापनम् ।

3-3-12 **संभृत्यधिकरणं** — संभृत्यादिगुणानां सर्वविद्योपसंहार-निषेधः ।

3-3-13 **पुरुषविद्याधिकरणं**—बहुत्र श्रुतायाः पुरुषविद्यायाः समाख्याऽभेदेपि फलकल्पनादिभेदात् भेद एव ।

3-3-14 **वेधाद्यधिकरणं**—सर्वं प्रविध्य हृदयं प्रविध्य इत्यादि मन्त्राणां अर्थसामर्थ्यात् आभिचारिककर्मण्येव विनियोगः । विद्यासु नोपसंहर्तव्याः । सर्वत्र समदर्शिनः नाशान्तमानसोवापि इत्यादि प्रमाणात् मुमुक्षूणां कस्मिंश्चिदपि द्वेषाभावात् वेधादिमन्त्रोच्चारणानुपपत्तेः ।

3-3-15 **हान्यधिकरणं**—केवलहानिश्रुतावपि उपायनानुवृत्तिबोधनम् । रोमाणि विधूय इत्यत्र न रोमहानिः शक्यवचना । धूञ् कम्पने इति धातोः हानार्थकत्वाभावात् । दोधूयन्ते ध्वजाग्राणि इत्यादावपि चंचलार्थकत्वस्यैव प्रतीतेः । अतोऽत्र पापहानिरूपोऽर्थो न संभवतीति पूर्वपक्षः । धातूनामनेकार्थत्वादुपपद्यते इति सिद्धान्तः । प्रभवति संभवति उद्भवति, प्रहार आहार संहार विहार परिहारवत् । अनुलापो मुहुर्भाषा विलापः परिदेवनं इत्यादिप्रसिद्धेः । वि इत्युपसर्ग सहित धूञ् धातोः हान्यर्थकत्वस्वीकारो न दोषावहः ।

3-3-16 **सांपरायाधिकरणं**—शरीरपात एव कृत्स्नपापहानिः अध्वनि तज्जन्यफलाभावात् इत्यंशः अत्रोच्यते ।

3-3-17 **गतेरर्थवत्त्वाधिकरणं**—सगुणब्रह्मोपासकस्य पर्यङ्कारोहार्थं देवयानाध्वगमनम् । निर्गुणब्रह्मप्राप्तौ न देवयानगतिरर्थवती । अत्र ब्रह्म समश्नुते इत्यादि श्रुतेः । यथा लोके ग्रामप्राप्तौ पन्थाः आरोग्यप्राप्तौ तु नेति ।

3-3-18 **अनियमाधिकरणं** – सगुणब्रह्मोपासकानां सर्वेषामपि कासुचिद्विद्यासु पठनाभावेपि देवयानगतिस्तुल्या । गतिचिन्तनं सर्वैः उपसंहार्यम् ।

3-3-19 **यावदधिकरणं**—ज्ञानिनां देहपातानन्तरं शरीरान्तरप्राप्तिर्नभवति तस्य तावदेव-अथ संपत्स्ये इति विश्वमायानिवर्तनरूप ब्रह्मज्ञानोत्पादकशरीरपातानन्तरं ब्रह्मप्राप्तिश्रवणात् । तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् । तथर्षीणां तथा मनुष्याणां

इत्यादिना ज्ञानिनां ब्रह्माभेदश्रवणात्। सनत्कुमारादयस्तु आधिकारिका इति स्कन्दादिशरीरसंबन्धयोग्याः।

**3-3-20 अक्षराद्यधिकरणं**–विधिरूपाणामिव निषेधरूपाणामप्यस्थूलत्वादीनां सर्वत्रानुसन्धेयत्वम्।

**3-3-21 इयदधिकरणं** – द्वा सुपर्णा-तयोरन्यः पिप्पलं इत्यत्र एकस्यैव भोक्तृत्वं, ऋतं पिबन्तौ उभयोरपि भोक्तृत्वम्। अतोर्थैक्याभावात् विद्याभेदः इति पूर्वपक्षः। उभयोरपि मन्त्रयोः परमात्म प्रकरणपाठेन जीवद्वितीयस्येश्वरस्य प्रतिपादकत्वेन च वेद्यभेदाभाव इति विद्यैक्यमेव। ऋतं पिबन्तौ इति परमात्मनः भोक्तृत्वोक्तावपि वस्तुतो भोक्तृत्वाभावात्। छत्रिणो गच्छन्ति इति छत्रिसाहचर्यात् अच्छत्रिणोपि छत्रित्वोक्तिः। एवमेव पानकर्तृजीवसाहचर्यात् अपिबतोपि परस्य पानकर्तृत्वोक्तिः।

**3-3-22 अन्तरत्वाधिकरणं** –– उषस्तकहोलप्रश्नसमाधानद्वये विद्ययोरैक्यमेव। तत्त्वमसीति नवकृत्वः उपदेशः अथापि विद्यैक्यं तद्वत्।

**3-3-23 व्यतिहाराधिकरणं**—तद्योहं सोऽसौ योऽसौ सोहं, त्वं वा अहमस्मि इति श्रुतेः चिन्तनाय परस्परं व्यतिहारः। जीवात्मनि परमात्मदृष्टेः श्रेयस्करत्वं युक्तम्। परे जीवदृष्टेः कथं श्रेयस्करत्वम्। जीवस्य निकृष्टत्वादिति चेत् वचनप्रामाण्यात्। अतो व्यतिहारेणोभयमतिरेव कार्या। अत्रोभयविधध्यानेपि ऐकात्म्यस्यैव अत्रानुचिन्त्यमानत्वात्।

**3-3 24 सत्याद्यधिकरणं**—स यो हैतं महद्यक्षं प्रथमजं वेद, इति सत्याख्यविद्या उक्ता। अनन्तरं तद्यत् तत्सत्यमसौ स आदित्यः य एष इत्यादिना च सत्यविद्या उक्ता। अनयोः ऐक्यं स्थाप्यते।

**3-3-25 कामाद्यधिकरणं**–एष आत्मा इत्यारभ्य छान्दोग्ये दहरविद्या सगुणा बृहदारण्यके च - स वा एष महानजः आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्त र्हृदय आकाशः तस्मिन् शेते इति निर्गुणविद्या पठिता। उभयत्रापि हृदायतनत्वादिसामान्यात् विद्यैक्यम्। अत एव गुणोपसंहारः। यद्यपि निर्गुणविद्यायां गुणोपसंहारस्य

नैव फलम् । तथापि निर्गुण ब्रह्मण एव विभूतिप्रदर्शनार्थमुपसंहारः। गुणवद्ब्रह्मैव निर्गुणमिति प्रदर्शनाय च ।

**3-3-26 आदराधिकरणं**--तद्यत् भक्तं प्रथममागच्छेत् तद्धोमीयं स यां प्रथममाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहा (का) य एत देवं विद्वान् अग्निहोत्रं जुहोति (छा) इत्यादि प्राणाग्निहोत्रप्रकरणे मन्त्र पुरस्सरं होमो दृष्टः । तत्रान्नभोजनाभावे प्रतिनिधिन्यायमाश्रित्य जलेन वा अन्नेन वा द्रव्येण भोजनं स्वीकृत्य होमः कार्यः इति पूर्व-पक्षः । भोजने उपस्थित एव होमविधानात् अन्नभोजनाभावे न होमः कार्यः । लोप एव होमस्य ।

**3-3-27 तन्निर्धारणाधिकरणं**-कर्माङ्गाश्रयोद्गीथज्ञानस्य कर्मसु नियमेनाकर्तव्यत्वम् ।

**3-3-28 प्रदानाधिकरणं**—वागादीनां प्राणः श्रेष्ठः अग्न्यादीनां वायुः प्राणो वाव संवर्गः वायुर्वाव संवर्गः इति । अत्रोक्तयोः वायु-प्राणयोः विद्ययोः भेदः । आध्यात्माधिदैवभेदरूप प्रवृत्तिभेदसत्वात् ।

**3-3-29 लिङ्गभूयस्त्वाधिकरणं** — मनश्चिदादीनां केवलविद्या-त्मकत्वमेव । नतु क्रियानुप्रवेशेन क्रियाशेषत्वम् ।

**3-3-30 ऐकात्म्याधिकरणं**—अत्र देहातिरिक्तात्मसद्भावः स्था-प्यते । यद्यपि पूर्वमीमांसायामेवायमर्थः अर्थसिद्धः । अथापि भगवता उपवर्षेण प्रथमतन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरके एव वक्ष्यामः इत्युक्तत्वात् अस्मिन् शास्त्रे रत्नपेटिकायां रत्नमिव आत्मविचारः व्यासाचार्येण क्रियते । किण्वादिभ्यो मदशक्तिवत् भूतचतुष्टयसङ्घात एव चैतन्यात्मना परिणमते । अतश्च स्थुलोऽहमिति व्यवहारः संयक् भवति । भस्मान्तमेव शरीरम् ।

त्याज्यं सुखं विषयसङ्गमजन्म पुंसां
दुःखोपसृष्टमिति मूर्खविचारणैषा ।
व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान्
को नाम भोः तुषकणोपहितान् हितार्थी ।।

लौकिकसुखभूयस्त्वे अल्पश्रमसद्भावः नैव दोषाय ।

न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः
यावज्जीवेत् सुखं जीवेत् ऋणं कृत्वा घृतं पिब ॥

देह एवात्मा, देहनाशो मोक्षः । कण्वाश्रमे एतन्मतस्थाः बहवः । जाबालिप्रभृतयः रामायणे प्रसिद्धाः चार्वाकमतनिष्ठाः । अतो वेदान्तविचारो व्यर्थः । इति प्रथमसूत्रेण पूर्वपक्षः । व्यतिरेक इति सूत्रेण सिद्धान्तः । देहस्य नात्मत्वं देहधर्मविलक्षणत्वात् । चैतन्यं न भूतचतुष्टयसङ्घातजन्यम् । एकस्मिन्नेव शरीरे तत्सत्वात् प्रत्यणु अनेकचैतन्योपलब्धिप्रसङ्गः । स्वापाद्यनन्तरं मम शरीरं स्थूलमिति व्यतिरेकनिर्देशोपि शरीरस्यात्मत्वं निषेधति ।

औत्पत्तिकस्तु शब्दस्यार्थेन इति सूत्रे यज्ञायुधी यजमानः स्वर्गं लोकमंजसा याति इति श्रुत्यर्थविचारे आत्मास्तीति उपनिषद्वारा निर्णीय शास्त्रं प्रवृत्तमिति शाबरभाष्ये उक्तम् ।

इत्याह नास्तिक्यनिराकरिष्णुः आत्मास्तितां भाष्यकृदत्र सूक्त्या ।
दृढत्वमेतद्विषयस्तुबोधः प्रयाति वेदान्तनिषेवणेन ॥

इत्युक्तमभिज्ञैः ।

न भूमिः न तोयं न तेजो न वायुः न खं नेन्द्रियं वा न तेषां समूहः।
अनैकान्तिकत्वात् सुमत्यैकसिद्धः तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥

इनि श्रीशाङ्करश्लोकोऽनुसन्धेयः ।

3-3-31 **अङ्गावबद्धाधिकरणं**—कर्माङ्गावबद्धोद्गीथोपासनादीनां सर्वशाखास्वनुवृत्तिः । वेदान्तरोत्पन्नकर्मणां गुणानां मन्त्राणां च वेदान्तरेषु यथाऽभ्युपगमः ।

3-3-32 **भूमज्यायस्त्वाधिकरणं**—वैश्वानरविद्यायां समस्तस्यैव उपासनम् । व्यस्तोपासनफलश्रवणं सांगप्रधानोपास्तिफलान्तर्भूतम् ।

3 3-33 **शब्दादिभेदाधिकरणं**—विद्यात्वनानात्वस्थापनम् ।

3-3-34 **विकल्पाधिकरणं**—ब्रह्मविद्यानिष्ठस्य एकैव विद्या न समुच्चयः । फलस्यैकरूपत्वात् ।

3-3-35 **काम्याधिकरणं**–स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति। स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवति, इत्यादि काम्यविद्यासु एकरूपफलाभावात् यथाकामम्।

3-3-36 **यथाश्रयभावाधिकरणं**–उद्गीथाश्रयाः उपासनाः वेदत्रयविहिताः। तेषां एकस्मिन्कर्मणि समुच्चयः उत यथाकामं इति संशयः। उपासनानां पुरुषार्थत्वात् एकेन ऋत्विजा कृतमपि कर्म सफलं भवतीति शास्त्रोक्तत्वाच्च यथाकामं समुच्चयो विकल्पो वा।

**चतुर्थः पादः**

3-4-1 **पुरुषार्थाधिकरणं**–वेदान्तविहितमात्मज्ञानं स्वतन्त्रं सत् मोक्षकारणं, न तु कर्मद्वारा। कर्मकर्ता आत्मा संसारी। ज्ञानी-त्वन्यः। यागादेः पुत्रपश्वादिफलं सांसारिकम्। कर्मरहितानामपि सन्यासिनाम्। एतमेव प्रव्राजिनो लोकमिच्छन्तः इत्यादिभिः मोक्षोक्तेः न कर्म साधनम्।

3-4-2 **परामर्शाधिकरणं**–सन्यासाश्रमस्थापनपरम्। ब्रह्मसंस्थो अमृतत्वमेति सन्यासाश्रमोक्तेः। प्रजातन्तुं मा व्यवच्छेत्सीः इत्यादि गृहस्थाश्रमस्तुत्यर्थकम्।

3-4-3 **स्तुतिमात्राधिकरणं**—स वा एष रसानां, इत्यादयः उद्गीथोपक्षनाविध्यर्थाः न तु स्तुत्यर्थाः।

**पारिप्लवाधिकरणं**–अथ ह याज्ञवल्क्यस्य द्वे भार्ये। प्रतर्तनो ह वै दैवोदासिः। जानश्रुतिर्हि पौत्रायणः इत्याद्युपनिषत्सु उक्तान्याख्यानानि आत्मा वा अरे द्रष्टव्यः इत्यादि ब्रह्मविद्याविधानार्थाः न पारिप्लवार्थाः। सर्वाण्याख्यानानि पारिप्लवे शंसन्तीत्येतत् न उपनिषद्गतकथाविषयकम्। सर्वे ब्राह्मणा भोजयितव्या इत्युक्तिर्हि निमन्त्रित सर्वब्राह्मणविषया। नतु सामान्य सर्वब्राह्मणविषया। तथा पारिप्लवप्रकरणे एव मनुः वैवस्वतो राजा इत्यादि विशेष कथाशंसनात्। तेषामेव ग्रहणम्। राजा श्वमेधे राज्ञः कालक्षेपार्थं पारिप्लवमाचक्षीत, सर्वाण्याख्यानानि शंसन्ति इत्युक्त्वा तत्रैव प्रथमेऽहनि मनुर्वैवस्वतो

राजा, द्वितीयेऽहनि यमो वैवस्वतो राजा इत्याद्युक्तेः सर्वशब्दः प्रकृत-पारिप्लवरूप कथाविशेषविषयकः इति ज्ञायते ।

3-4-5 **अग्नीन्धानाधिकरणं** — विद्यया स्वफलब्रह्मप्राप्तौ अग्नीन्धानाद्याश्रमकर्मापेक्षा न विद्यते ।

3-4-6 **सर्वापेक्षाधिकरणं**—तमेतं वेदानुवचनेन, कषाये कर्मभिः पक्वे इत्याद्याश्रमकर्मणां न साक्षान्मोक्षसाधनत्वं अथापि विद्योत्पत्ति सिद्धये तेषामपेक्षा । अश्वस्य रथचर्यायामेव ह्युपयोगः न तु लाङ्ग-लाकर्षणे । योग्यतावशात् । शान्तो दान्त इति शमादीनामेव साधन-त्वात् ते एवानुष्ठेयाः ।

3-4-7 **सर्वान्नानुमत्यधिकरणं**—प्राणविद्यानिष्ठस्य सर्वान्नानु-मतिः आपत्काले एव, नतु तस्य सर्वान्नविधानम्। लिङ लोट तव्यप्रत्य-याभावात् । अतो भोज्याभोज्यविभागशास्त्रस्य सामान्यस्य न बाधः । वामदेव विद्यानिष्ठे तु गम्यागम्यविभागशास्त्रस्य तु बाधः । तत्र न कांचनपरिहरेत् सर्वयोषिदपरिहारवचनात् । ब्रह्मविद्यानिष्ठे उषस्तौ प्राणात्यये एव निषिद्धभोजनानुमतेः दर्शनात् प्राणविद्यानिष्ठे किंपुन-र्न्याय सिद्धमिदम् ।

3-4-8 **आश्रमकर्माधिकरणं** — आश्रमकर्माणि मुमुक्षुणा अमु-मुक्षुणाचानुष्ठेयानि । विद्योत्पत्तौ सहकारित्वेन विधानात् मुमुक्षुणा-प्यनुष्ठेयानि ।

3-4-9 **विधुराधिकरणं**—रैक्व वाचक्नवी-भीष्मादीनां ब्रह्म-विद्यायामधिकारः ।

4-4-10 **तद्भूताधिकरणं**—वानप्रस्थं सन्यासाश्रमं प्राप्तवतां पुनः प्रच्युत्यभाव एव. ततो न पुनरेयात् इति निषेधात् ।

3-4-11 **आधिकारिकाधिकरणं** — नैष्ठिकब्रह्मचारिणः प्रच्युतौ आरूढो नैष्ठिकं इत्युक्तेः पतित एव सः । केचित्तु प्रच्यवनमुपपातक-मिति वदन्ति । यथा ब्रह्मचारिणः मधुमांसाशने व्रतलोपः पुनः संस्कारश्च । ब्रह्मचार्यवकीर्णी नैरृतं गर्दभमालभेत इति प्रायश्चित्त-

विधानात् । वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रं चरित्वा महा-कक्षं वर्धयेत् । भिक्षुर्वानप्रस्थवत् सोमबलिवर्जं स्वशास्त्रसंस्कारश्च इति भिक्षुवैखानसयोरपि प्रायश्चित्तं स्मर्यते ।

3-5-12 **बहिरधिकरणं**—स्वाश्रमप्रच्युताः प्रायश्चित्तेन शुद्धा अपि बहिष्कार्या एव । विशुद्धानपि धर्मतो न संपिबेत् कामतः अव्यवहार्यस्तु इत्यादिवचनात् ।

3-4-13 **स्वाम्यधिकरणं**—अङ्गोपासनाः ऋत्विग्भिरेव कार्याः । यां वै कांचनं यज्ञे ऋत्विजः आशिषमाशासते इति यजमानायैव तामाशासत इति होवाच, तस्मादु हैवंविदुद्गाता ब्रूयात् कं ते काममगायानि इत्यादिना ऋत्विग्गत फलस्य यजमानफलत्वोक्तेः ।

3-4-14 **सहकार्यान्तराधिकरणं**—तस्मात् ब्राह्मणः पाण्डित्ये—अथ मुनिः इत्यत्र विद्यासहकारि मौनं विधेयं बाल्यपाण्डित्यवत् ।

3-4-15 **अनाविष्काराधिकरणं**—बाल्येन तिष्ठासेत् इत्यत्रोक्त बाल्ये ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन इतिप्र माणेन ब्रह्म-निष्ठस्य कामचारवादभक्षणादीनां अकार्यकरत्वात् कामचारादिरूपं इति पूर्वपक्षं कृत्वा डम्भादिराहित्यमेव तत् ज्ञानिना अनुष्ठेयमित्युच्यते।

यं न सन्तं नचासन्तं नाश्रुतं न बहुश्रुतम्
न सुवृत्तं न दुर्वृत्तं वेद कश्चित्, स ब्राह्मणः ।
गूढधर्माश्रितो विद्वान् अज्ञानचरितं चरेत्
अन्धवत् जडवच्चापि मूकवच्च महीं चरेत् ।। इति ।

अव्यक्तलिङ्गाऽव्यकाचारः इति च । नाविरत इत्यादिना काम-चारादि निषिद्धं च ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ।
चत्वार आश्रमाः प्रोक्ताः एकैकश्च चतुर्विधः ।।

ब्रह्मचारिणो वृत्तिभेदाः—गायत्रः ब्राह्मः प्राजापत्यः बृहन्निति । गृहस्थ वृत्तिभेदाः—वार्तावृत्तयः शालीनवृत्तयः यायावराः घोरसन्यासिकाश्च । वानप्रस्थवृत्तिभेदाः – वैखानसाः औदुम्बराः वालखिल्याः

फेनापाश्च। यतिवृत्तिभेदाः कुटीचकाः बहूदकाः हंसाः परमहंसाः इति। एतेषां स्वीयशास्त्राविरुद्धकर्मकारित्वे, एव ब्रह्मज्ञानित्वमित्युक्तम् ।

**3-4-16 ऐहिकाधिकरणं** — विद्यासिद्धिः प्रारब्धप्रतिबन्धाभावे इहैव प्रतिबन्धे अमुत्रापीति । अतो विद्याफलं ऐहिकामुष्मिकं वेति ।

**3-4-17** विद्याफलभूतमुक्तिविषये तु ऐहिकामुष्मिक विशेषप्रतिपत्तिनियमो नास्ति । सगुणविद्यासु तथा नियमः। निर्गुण विद्यायां ब्रह्मण एव मुक्त्यवस्थात्वात् संयक् ज्ञानं यदा तदैव मुक्तिः इति निश्चयात् ।

## चतुर्थाध्यायः

**4-1-1 आवृत्त्यधिकरणं**—ज्ञानावृत्तिः कार्या निदिध्यासितव्यः इति ज्ञानावृत्तेः प्रतीतेः। तण्डुलादिनिष्पत्तिपर्यन्तं अवघातादेरिव । तत्त्वमसि इत्यादिवाक्यजन्यं ज्ञानमेव केषांचित् साक्षात्कारजनकं भवेत् तेषां तदा ज्ञानावृत्तिर्नास्ति । मन्दप्रज्ञानामेबाधिकत्वात् बहूनामुपकाराय शास्त्रस्य प्रवृत्तत्वाच्च आवृत्ति विधानमत्राधिकरणे ।

**4-1-2 आत्मत्वोपासनाधिकरणं**—मत्तः अन्यः परमात्मा इति न चिन्त्यम् । त्वं वा अहमस्मि इत्यादि प्रमाणबसात् अहमात्मेत्येव ।

**4-1-3 प्रतीकाधिकरणं** — प्रतीकेषु आत्मदृष्टिः न कार्या । नामादीनां ब्रह्मविकारत्वेन ब्रह्मत्वमेवेति न मन्तव्यम् । तेषां ब्रह्मविकारत्वे प्रतीकाभावप्रसङ्गात् ।

**4-1-4 ब्रह्मदृष्टयधिकरणं** — आदित्यो ब्रह्मेत्यादेशः इत्यादौ आदित्यादौ ब्रह्मदृष्टिः । उत्कृष्टदृष्टिः निकृष्टे इति न्यायात् । प्रतीकोपासकस्य फलदाता ईश्वर एव ।

**4-1-5 आदित्यादिमत्यधिकरणं**—य एवासौ तपति वमुद्गीथमुपासीत इत्यादौ आदित्यादिषु उद्गीथादिदृष्टिर्वा उद्गीथादौ आदित्यादिदृष्टिर्वा इति संशय्य उत्कर्षनिकर्षाभावात् उभयथापि उपासनं भवतीति पूर्वपक्षः। आदित्यादेः देवतारूपत्वेनोत्कृष्टत्वात् उद्गीथादिषु आदित्यादिदृष्टय एव । कर्मसमृद्धि फलकोपासनेष्वेवं

स्वीकारेपि स्वतन्त्रोपासनेषु कथं इति न शंक्यं तत्रापि तथैव द्वितीया-निर्देशसाम्यात् ।

**4-1-6 आसीनाधिकरण**—संयक्दर्शनव्यतिरिक्तोपासनेषु आसीन एवोपासनं कुर्यात् । ध्यायति बकः इतिवत् ध्यायीत इत्युक्तेः निश्चलत्वं प्रतीयते । शुचौ देशे इति गीता । पद्मकाद्यासननिष्ठस्यैवोपसनमिति योगशास्त्रम् ।

स्वस्तिकं गोमुखं पद्मं वीरसिंहासने यथा
भद्रं मुक्तासनं चैव मयूरासनमेव च
सुखासनसमाख्यं च नवमं मुनिपुङ्गव ॥

इति नवविधासनानि तल्लक्षणानि च जाबालदर्शनोपनिषदि ॥

**4-1-7 एकाग्रताधिकरणं** – यागादिकरणे प्रचीनवंशं करोति वसन्ते ज्योतिषा यजेत इति दिक्देशकालादिनियमोऽस्ति उपासने तु न । मनोऽनुकूले इति चित्तस्य ऐकाग्र्यं यत्र यदा तदा तत्रोपासनम् ।

**4-1-8 तदधिगमाधिकरणं**—विद्याधिगमे दुरितक्षयः बोध्यते ।

**4-1-9 इतरासंश्लेषाधिकरणं**—विद्यानिष्ठस्य पुण्यक्षयः । पुण्यस्यापि पाप्मशब्देन ग्रहणात् ।

**4-1-10 अनारब्धकार्याधिकरणं** — पुण्यपापविनाशः अप्रवृत्तफलयोरेव (सञ्चितयोः) नत्वारब्धकार्ययोः । प्रारब्धं भोगतो नश्येत्, तस्य तावदेव इति शास्त्रात् । प्रारब्धशरीरान्त एव मोक्ष इति प्रतीतेः ।

**4-1-11 अग्निहोत्राधिकरणं**—विद्यानिष्ठस्य सर्वपुण्यविनाशोक्तौ सत्यामपि नित्याग्निहोत्रादेः सन्ध्यावन्दनादेश्च स्वाश्रमकर्मणः कर्तव्यत्वमेवेति प्रतिपाद्यते । तमेतं वेदानुवचनेन इति यज्ञदानादेः विद्यासिद्ध्ये कर्तव्यत्वोक्तेः । तर्हि पुण्यापुण्याश्लेषविनाशयोः कथमुपपत्तिः । नित्यकर्मव्यतिरिक्त, ऐहिकामुष्मिकप्रयोजनकः, अनारब्धफल अनन्तसाधुकृत्याविषयकौ अश्लेषविनाशौ इत्यदोषात् ।

**4-1-12 विद्याज्ञानसाधनत्वधिकरणं**--अग्निहोत्रादि विद्याविहीनस्यापि कर्तव्यम् । तदेव वीर्यवत्तरमिति विद्यासहितकर्मणः वीर्यवत्तरत्वोक्तेः विद्याविहीनेनाप्यनुष्ठेयत्वावगमात् ।

**4-1-13 इतरक्षपणाधिकरणं** — आरब्धफले पुण्यपापे भोगेन विनाश्य ब्रह्मैव सन् ज्ञानी ब्रह्म संपद्यते ।

## द्वितीयः पादः

**4-2-1 वागधिकरणं**—अस्य सोम्य पुरुषस्य-वाङ्मनसि संपद्यते इत्यत्र वाग्वृत्तिरेव मनसि संपद्यते । अविभागो वचनात् इति उत्तरत्र विभागाभावोक्तेः अत्रोक्ता संपत्तिः वृत्तिसंपत्तिरेव । न तु लयः ।

**4-2-2 मनोधिकरणं**—मनः प्राणे इत्यत्रापि मनोवृत्तिः प्राणे संपद्यते प्राणस्य मनः प्रकृतित्वाभावात् । मनसः आहंकारिकत्वात् ।

**4-2-3 अध्यक्षाधिकरणं**—प्रकृतः प्राणः विज्ञानात्मनि अवतिष्ठते । एवमेवेमं आत्मानं अन्तकाले सर्वे प्राणा अभिसमायन्ति इति जीवात्मन्येव प्राणसंपत्तिबोधनात् ।

**4-2-4 आसृत्युपक्रमाधिकरणं**—ज्ञानिनः कर्मिणश्च उत्क्रान्तिस्तुल्या । विदुषः मूर्धन्यनाडीप्रवेशमारभ्य देवयानेन गमनम् । अविद्वान् तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैः इति प्रमाणेन भूतसूक्ष्म विशिष्टः पुनः देहं प्राप्तुं संसारे वर्तते ।

**4-2-5 संसारव्यपदेशाधिकरणं**—मृतस्य पुंसः सप्राणं सकरण ग्रामं भूतान्तरसहितं साध्यक्षं तेजः परस्यां देवतायां संपद्यते । इयं च संपत्तिः नात्यन्तिकलयः । संसारमोक्षपर्यन्तं अविभागेनावस्थानमेव । यो निमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्ये प्रपद्यन्ते यथाकर्म यथाश्रुतम् ।। इति । सूक्ष्मत्वात् तदा तेज आदेरनुपलब्धिः। सूक्ष्मशरीर ज्ञापकं तु 'उष्ण एव जीविष्यन् शीतो मरिष्यन्' इत्यादिश्रुतिः ।

**4-2-6 प्रतिषेधाधिकरणं** — परब्रह्मविदोपि शरीरात्प्राणानां उत्क्रान्तिरस्त्येव । आत्मनस्तु नोत्क्रान्तिः । सर्वभूतात्मभूतस्य संयग् भूतानि पश्यतः । देवा अपि मार्गे मुह्यन्ति अपदस्य पदैषिणः इति आत्मनः गत्युत्क्रान्ती न भवतः । अपदस्य-ब्रह्मविदः । पदैषिणः-ब्रह्म प्राप्ति साधन ज्ञानेच्छवो मुह्यन्ति। शुकस्य गत्युत्क्रान्तिश्रवणम् । दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत् इति स्वयोगप्रभावप्रदर्शनाय ।

**4-2-7 वागादिलयाधिकरणं**—एवमेवास्याः परिद्रष्टुः षोडश-कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति । बाह्येन्द्रियाणि दश-भूतानि पञ्च मन एकं इति षोडशकलाः । क्वचित् पञ्चदशकलाः इत्यपि श्रूयते । प्राणमनसोः एकप्रकृतित्वविवक्षया । एते च विद्वन् निष्टाः परस्मिन् लीयन्ते । षोडशकलानां नामरूपे भित्वा विद्वान् अमृतो भवति, ब्रह्मवित् ब्रह्मैव भवति । तथा विद्वान् नामरूपे विहाय इत्यादि श्रुतिरत्र प्रमाणम् ।

**4-2-8 अविभागाधिकरणं**—विदुषः षोडशकलाप्रलयः ब्रह्मण्युक्तः स निरवशेष एव नतु सावशेषः । भिद्यते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलः अमृतो भवति इति श्रुतेः । अविभाग एव लयः ।

**4-2-9 तदोकोधिकरणं**—अपरविद्याविषयः । विद्वान् हार्दानु-ग्रहात् शताधिकया एकशततम्या नाड्या निष्क्रामति । अविद्वान् अन्य-स्थानात् ।

**4-2-10 रश्म्यधिकरणं** – रात्रि दिवं सूर्यरश्मिसत्वात् रात्रौ मृतोपिविद्वान् रश्मिद्वारैव गच्छति । स यावत् क्षिप्येत् मनः तावदा-दित्यं गच्छति । आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन् आदित्ये सृप्ताः इति नाडीरश्मीनां सर्वदा संबन्धदर्शनात् ।

**4-2-11 दक्षिणायनाधिकरणं**—दक्षिणायनमरणेपि विदषो विद्या-फलमस्त्येव । भीष्मस्योत्तरायणप्रतीक्षा पितृप्रसादलब्ध स्वच्छन्दमरण-ख्यापनाय । यत्र काले त्वनावृत्ति इति गीतावचनं तु सांख्ययोगनिष्ठ प्राशस्त्यपरम् । इदं च स्मार्तं दक्षिणायन रात्र्यादौ मृतस्य विदुषः विद्याफलबोधक श्रुत्युक्तार्थबाधकं न भवति । उपासकस्य देवयानपितृ-याणस्मरणार्थत्वाच्च ।

## तृतीयः पादः

**4-3-1 अर्चिराद्यधिकरणं**—अर्चिरादिः एक एव मार्गः ।

**4-3-2 वाय्वधिकरणं**—देवयानमार्गे क्रमः अवश्यमङ्गीकार्यः—उत्तरायणानन्तरं संवत्सरः । तदनन्तरं वायुः । स एव देवलोकशब्दे-नोच्यते । तदनन्तरमादित्यः ।

**4-3-3 तटिदधिकरणं**–विद्युतः उपरि वरुणः तदुपरि इन्द्रः तदुपरि प्रजापतिः । तेजो वावाद्भ्यो भूयः तद्वा एतद्वायुम् इत्यारभ्य तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तेज उपास्वेति । इति ब्राह्मणम् । जलाधिपतिः वरुणः इति च प्रसिद्धम् । अनयोस्संबन्धश्च—'चत्वारि वा अपां रूपाणि मेघो विद्युत् स्तनयित्नुः वृष्टिः इति ।

**4-3-4 आतिवाहिकाधिकरणं**—अर्चिरादयः गमयितृत्वश्रवणात् अतिवाहिकाः । अग्निलोकं प्राप्तः अयं ज्ञानी अग्निना अतिवाह्यते वायुलोकं प्राप्तः वायुना इत्येवम् ।

**4-3-5 कार्याधिकरणं**–सगुणमपरं ब्रह्मैव अमानवः गमयति इति बादरिः जैमिनिस्तु परं ब्रह्मैव । बादरिमतमेव स्वमतम् ।

**4-3-6 अप्रतीकालम्बनाधिकरणं** — अमानवः नामाद्युपासकान् वर्जयित्वा विकारालम्बनान् प्रापयति ।

**चतुर्थः पादः**

**4-4-1 संपद्याविर्भावाधिकरणं** – एष संप्रसादः–अभिनिष्पद्यते इत्यत्रोक्ता अभिनिष्पत्तिः आत्ममात्रेण न तु केनचिदागन्तुकेना यथा रोगनिवृत्तौ अरोगः अभिनिष्पद्यते इत्यत्र ।

**4-4-2 अविभागेन दृष्टत्वाधिकरणं**—स्वेन रूपेणाभिनिष्पद्यते इत्युक्ता आत्मप्राप्तिः परस्मादात्मनः अविभागेन, तत्त्वमसि अहं ब्राह्मास्मि ततोऽन्यत् 'नतु तत्द्वितोयमस्ति ततोऽन्यत् विभक्तं यत् पश्येत् । 'यथोदकं शुद्धे शुद्धं आसिक्तं तादृगेव भवति । एवं मुनेर्विजाननतः आत्मा भवति गौतम, इत्यादि श्रुतेः । भेदनिर्देशः आत्मरतिः आत्मक्रीडः, स्वे महिम्नि प्रतिष्ठितः इत्यादिवत् अभेदेपि गौणः।

**4-4-3 ब्राह्माधिकरणं** —य आत्मा अपहतपाप्मा कृत्स्नः प्रज्ञान घन एव इत्युभयश्रुत्यविरोधाय व्यवहारापेक्षया सगुणब्रह्मप्राप्तिः वस्तुतो निर्गुणब्रह्मैक्यमेव मुक्तिः इति बादरायणः ।

**4-4-4 सङ्कल्पाधिकरणं**–मुक्तः स्वसङ्कल्पादेव निमित्तान्तरानपेक्षस्सन् सर्वान् सृष्ट्वा अनुभवति । यथा अगस्त्यः स्वयोगमहिम्ना

समुद्रमपिबत् । दण्डकारण्यं हि शुक्रस्य शापात् प्रथमं प्राणिनां निवासानर्हमासीत् । वासार्हं अगस्त्यः कारयामास तथा ।

**4-4-5 अभावाधिकरणं** — सगुणब्रह्मप्राप्तविदुषः मोक्षे शरीरेन्द्रियादीनां सद्भावः असद्भावश्च । सत्यसङ्कल्पोऽयं स्वेच्छानुगुण्येन सृष्ट्वा विहरति अन्यथा वा ।

**4-4-6 प्रदीपाधिकरणं**--मुक्तस्य शरीरेन्द्रियादीनि सन्तीत्युक्तम् । तथापि आत्मनः मनसश्चैकत्वात् सृष्टेषु शरीरेषु एकेनैवात्ममनसोरसंयोगसंभवात् शरीरान्तराणि निरात्मकानि दारुयन्त्राणीव । इति शङ्का । विद्यासामर्थ्यरूपैश्वर्ययोगात् सर्वाणि शरीराणि अनुप्रविश्यानुभवति । इदं सगुणब्रह्मविषयम् । न प्रेत्यसंज्ञाऽस्ति । यत्र त्वस्य सर्वं इत्यादिश्रुत्या मुक्तस्य चैतन्यमात्रावगतेः । सलिल एको द्रष्टाऽद्वैतो भवतीति अद्वैतमेव तत्त्वम् ।

**4-4-7 जगद्व्यापारवर्जाधिकरणं**—सगुणब्रह्मविद्यानिष्ठानां ब्रह्मप्राप्तौ आप्नोति स्वाराज्यं इति निरङ्कुशैश्वर्यमुक्तम् । इदं च जगद्व्यापारं विना । ब्रह्मणः सगुणं निर्गुणं इति रूपद्वयमस्ति । सगुणब्रह्मप्राप्तवतः सावग्रहैश्वर्यमेव । सगुणब्रह्मभोगसाम्यमेव । 'तयोर्ध्वमायन् अमृतत्वमेति, तेषां न पुनरावृत्तिः एतेन प्रतिपद्यमाना नावर्तन्ते न च पुनरावर्तते इत्यादिषु उक्ता अनावृत्तिः सगुणब्रह्मनिष्ठस्य, इयं च ब्रह्मणा सह ते सर्वे...प्रविशन्ति परं पद-इति प्रमाणमनुसृत्य कार्यात्यये सति तदध्यक्षेण साकं पुनरावर्त्यभावाभिप्रायेण । निर्गुणब्रह्मैक्यरूपा मुक्तिर्भवतीत्याशयः । सगुणब्रह्मशरणानामपि तत्त्वमसीति वाक्यजन्यसंयक्दर्शनाश्रयणेनैवानावृत्तिस्साधनीया । न तु साक्षात् । संयक्दर्शिनां आवृत्तिशङ्कैव नास्ति । निर्गुणब्रह्मनिष्ठानां स्वतस्सिद्धा । दहरादिविद्यानिष्ठानामेव अनावृत्तिः श्रुतिषु सूत्रेषु च वर्णिता । तेषामेव हि कल्पान्तरेपि आवृत्तिशङ्का भवत्येव । तत्त्वमसीति अपरोक्षज्ञानवतां ऐक्यसिद्धेः नैवावृत्तिशङ्का । सगुणब्रह्मनिष्ठः कल्याण गुणविशिष्टं ब्रह्मैयानुभवति । तथापि तत्र ज्ञातृत्वभोक्तृत्वादिसत्त्वात् हेयमिश्रसगुणब्रह्मानुभवस्तस्य । अविद्यामिश्रितात्मन एव प्रपञ्चात्मना

अत्रभासमानत्वात् अविद्यानिवृत्तेरेवमुक्तित्वात् तन्निवृत्तौ स्वयं प्रकाशं ज्ञानमेवशिष्यते तत्पर्यायात्मैक्यमेव मोक्षः । तच्च ज्ञानमसंवेद्यम् । वेद्य त्वाभ्युपगमे मन इन्द्रियविशिष्टदेहसद्भावाभ्युपगमप्रसङ्गेन न ह वै सशरीरस्य इत्यादि श्रुतिविरोधस्स्यात् । अतो अशरीरत्वमेव मोक्षः ।

श्रीः

## अथ द्वैतमते प्रत्यधिकरणविषयाः

### प्रथमाध्यायः

**1-11 जिज्ञासाधिकरणं**—विष्णुभक्तिरूपाधिकारसिद्ध्यनन्तरं तत एव हेतोः विष्णु, तद्गुण विभूत्यादिचिन्ता कर्तव्या ।

**1-1-2 जन्माद्यधिकरणं**–विष्णोः जत्माद्यष्टकं लक्षणम्–

उत्पत्ति स्थिति संहाराः नियतिः ज्ञान मावृत्तिः ।
बन्धमोक्षौ च पुरुषात् यस्मात्सहरिरेकराट् ।।

**1-1-3 शास्त्रयोनित्वाधिकरणं**—पूर्वोक्तं लक्षणं शास्त्रैकवेद्यम् । अत एव विष्णोः शास्त्रवेद्यत्वम् ।

ऋग्यजुस्सामाथर्वाश्च भारतं पञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ।।
यच्चानुकुलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।
अतोऽन्यो ग्रन्थविस्तारः नैवशास्त्रं कुवर्त्म तत् ।।

**1-1-4 सयन्वयाधिकरणं**–विष्णोरेव शास्त्रवेद्यत्वं रुद्रादीनां क्वचिदेव, सर्वश्रुतीनां तात्पर्यं विष्णावेव । वेदान्तवाक्येषु उपक्रमादि-षड्विधतात्पर्यनिर्णायकलिङ्गं विष्णुविषये ।

**1-1-5 ईक्षत्यधिकरणं**–यतो वाचो निवर्तन्ते इत्यादिना विष्णोः वाच्यत्वादिनिषेधो न भवति, पुरिशयं पुरुषमीक्षते इति ईक्षणीय-त्वोक्तेः। अशब्दत्ववादिश्रुतेः दूनिरूपत्वे तात्पर्यम्। पश्यन्तोपि न पश्यन्ति शतिवत् इति वत् ।

न तत् ईदृगिति ज्ञेयं न वाच्यं न च तर्क्यते ।
पश्यन्तोपि न पश्यन्ति मेरोः रूपं विपश्चितः ।।

सदेवेत्यादिश्रुतिः विष्णोः जगन्निदानत्वं वदति ।।

**1-1-6 आनन्दमयाधिकरणं** — आनन्दमयः विष्णुरेव न ब्रह्मा, न रुद्रः न प्रकृतिः । पुच्छः सङ्कर्षणः प्रोक्तः एक एव तु पञ्चधा । पुच्छ शब्दवाच्यः संकर्षणः अन्नमयादिशब्दवाच्यः आनन्दमयो विष्णुः ।

**1-1-7 अन्तस्थत्वाधिकरणं** — अन्तस्समुद्रे मनसा चरन्तं, अत्रान्तः श्रूयमाणो विष्णुः ।

**1-1-8 आकाशाधिकरणं**—आकाशशब्दवाच्यः विष्णुः । परो मात्रया तन्वा वृधान स एष परो वरीयान् इत्यादिश्रुतेः । परो वरीयान्—उत्तमभूत रुद्रादि भारत्यन्तापेक्षया उत्तमो वायुः तदपेक्षयोत्तमा लक्ष्मीः तदपेक्षयोत्तमो विष्णुः ।

**1-1-9 प्राणाधिकरणं** — तद्वै त्वं प्राणो अभवः । महान्भोगः प्रजापतेः । हिरण्यगर्भस्यापि महानन्ददायित्वात् प्राणः विष्णुः ।

**1-1-10 ज्योतिरधिकरणं**—यो वेद निहितं गुहायां ज्योतिः हृदय आहितं इत्यत्र ज्यातिश्शब्दवाच्यः विष्णुः ।

**1-1-11 गायत्र्यधिकरणं**–अथ यदतः परो ज्योतिर्दीप्यते इत्यत्र ज्योतिः विष्णुः ।

**1-1-12 अन्तिमप्राणाधिकरणं**—तं देवाः प्राणयन्तः स एषोसुः स एष प्राणः प्राणऋत इत्येव विद्यात् तदयं प्राणोऽधितिष्ठति इत्यत्र प्राणशब्दवाच्यो विष्णुः ।

**द्वितीयः पादः**

**1-2-1 सर्वगत्वाधिकरणं**–स यश्चायमशरीरः प्रज्ञात्मा इत्यादिना सर्वत्रोच्यमानः विष्णुरेव । स हि न ते विष्णो जायमानः इत्यादिगुणस्यापि तस्मिन्नेवोपपत्तेः ।

सर्वेन्द्रियमयो विष्णुः सर्वप्राणिषु च स्थितः ।
स्वातन्त्र्यपारतन्त्र्याभ्यां संभोगो नेशजीवयोः ।।

इति जीवपरयोः एकशरीरसत्वेपि न समानभोगप्राप्तिः ।

**1-2-2 अत्तृत्वाधिकरणं**—स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वाऽत्ति इति तददितेरदितित्वं इति अदितिदेवतायाः अत्तृत्वमिति पूर्व पक्षे चराचरात्तृत्वं विष्णोरेव । अदितेरसंभवात् ।

स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु ।
वासुदेवः परः पुंसां इतरेऽल्पस्य वा न वा ।।

एकः पुरस्तात् य इदं बभूव भुवनस्य गोपाः । यमप्येति भुवनं संपराये स नो हरिः घृतमिहायुषेत्तु देवः इत्यादिप्रमाणात् ।

यद्यत् ब्रह्मासृजत्पूर्वं तत्तदत्ति जनार्दनः
अदितिर्नाम तेनासौ भगवान् पुरुषोत्तमः ।
उपास्ते यः परं देवं एवमत्तीति सर्वदा
स योग्यतानुसारेण सर्वात्तासौ भवत्युत ।।

**1-2-3 गुहाधिकरणं**—ऋतं पिबन्तौ इत्यत्र पिबन्तौ हरिरेव, स एव आत्मा अन्तरात्मा इति द्विधा वर्तते । आत्माऽन्तरात्मेति हरिः एक एव द्विधा स्थितः । शुभं पिबत्यसौ नित्यं ना शुभं स हरिः पिबेत् ।

**1-2-4 अन्तराधिकरणं**—य एषाऽन्तरक्षिणि पुरुषो दृश्यते इत्यत्र अक्ष्यन्तर्वर्ती विष्णुः ।

**1-2 5 अन्तर्याम्यधिकरणं**—यः पृथिव्यां तिष्ठन् इत्यत्रान्तर्यामी-विष्णुः ।

पृथुं नारायणं वाति समादायैव पक्षिराट् ।
अतस्स पृथिवीत्युक्तः त्वन्तरिक्षं हरस्स्मृतः ।।

इति पृथिव्यभिमानिभूतो गरुडः पृथिवीशब्दवाच्यः । अत्र तदधी नत्वमेव तच्छरीरत्वं, पृथिव्याद्या देवतास्तु देहवत् यद्वशत्वतः । शरीर मिति चोच्यन्ते यस्य विष्णोर्महात्मनः इत्युक्तेः ।

**1-2-6 अदृश्यत्वाधिकरणं**—अक्षरात्संभवतीहविश्वं । अक्षरशब्द-वाच्यो विष्णुः । अक्षरात् परतः परः—प्रकृतेः परतः लक्ष्म्याः परः विष्णुः ।

अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका ।
श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया ।
तामक्षरं परं प्राहुः परतः परमक्षरम् ।
हरिमेवाखिलगुणं अक्षरत्रयमीरितम् ॥

**1-2-7 वैश्वानराधिकरणं**—आत्मानं वैश्वानरमुपास्ते इत्यत्र अग्नौ विष्णौ च प्रयुक्तो साधारण वैश्वानरशब्दः विष्णुवाचकः । न रीयते-नश्यति इति नरः—गुणः । विश्वश्चासौ नरश्च । अन्येषामपि दृश्यते इति सूत्रात् वैश्वानरः इति दीर्घः । विश्वगुणपूर्ण इत्यर्थः ।

अत्र ऋषीणां कथं परस्परविरोधाभिप्रायकत्वं इति न मन्तव्यम् । सर्वेषां व्यासचित्तानुवर्तनत्वात् । व्यासचित्तस्थिताकाशात् अवच्छिन्नानि कानिचित् । अन्ये व्यवहरन्त्येतानि नरीकृत्य गृहादिवत् ।

**तृतीयः पादः**

**1-3-1 द्युभ्वाद्यधिकरणं**—यस्मिन् द्यौः, प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः, प्राणेश्वरः कृत्तिवासाः पिनाकी ; स एषोऽन्तश्चरते बहुधा जायमान इत्यादौ श्रुतः द्युभ्वाद्याश्रयः विष्णुरेव । अत्र रुद्रवाचकाः शब्दाः विष्णुमेव वदन्ति ।

आत्मब्रह्मादयश्शब्दाः तमृते विष्णुमव्ययम् ।
न संभवन्ति तस्मात्तैः नैवाप्ता गुणपूर्णता ॥
रुजं द्रावयते यस्मात् रुद्रस्तस्माज्जनार्दनः
पिबन्ति ये नरा नाकं मुक्तास्संसारसागरात् ।
तदाधारो यतो विष्णुः पिनाकीति ततः स्मृतः ॥
कृत्यात्मकमिदं देहं यतो वस्ते प्रवर्तयन् ।
कृत्तिवासाः ततो देवः विरिञ्चश्च विरेचनात् ॥

न संभवन्ति—मुख्यवाचकत्वेन । तैः चतुर्मुखादिभिः । रुजं—जन्मादिकं द्रावयते—निवर्तयति विष्णुः । विरेचनात् जगत्सर्जनात् :

**1-3-2 भूमाधिकरणं**—यो वै भूमा तत्सुखं-अत्र-भूमा-विष्णुः ।

**1-3-3 अक्षराधिकरणं**—एतस्मिन्नक्षरे गार्गि आकाशः ओतश्च प्रोतश्च । अत्राक्षरशब्दोविष्णुवाची । पृथिव्यादिप्रकृत्यन्तं भूतं भव्यं

भवच्च यत् । विष्णुरेको बिभर्तीदं नान्यस्तस्मात् क्षमो श्रुतौ । विष्णोः प्रसिद्धस्थौल्याद्यभावेपि सर्वाधारत्वानुगुणाप्राकृतस्थौल्यगुणसंभवे न दोषः । सर्वत्र विष्णोः ईश्वरत्वमेव नियामकम् ।

**1-3-4 सदधिकरणं**–सोम्येदमग्र इत्यत्र स्रष्टा विष्णुः सच्छब्द-वाच्यः, तदैक्षत इति ईक्षतिकर्मव्यपदेशात् नन्योऽतोऽस्ति द्रष्टा इत्यादिना अयस्य ईक्षति कर्मव्यपदेशाभावात् । बहुस्यां प्रजायेय इति बहुत्वं परिणामित्वं च कथमिति न शंक्यं अजायमानो बहुधा विजायते इतिवत् बहुत्वादि संभवति। इदं परिदृश्यमानं जगत् सदेव ब्रह्मैवावर्तत एकमेव–स्वगतभेदाभेदवर्जितम् ।

एकमेवाद्वितीयं यत् समाभ्यधिकवर्जनात् ।
स्वगतानां च भेदानां अभावात् ब्रह्म शाश्वतम् ॥
भेदाभेदनिवृत्यर्थं एवशब्दोवधारकः ।
समाधिकनिवृत्यर्थं अद्वितीयपदं तथा ॥
भेदाभेदेऽप्येकशब्दः यतोऽवयविनि स्थितः ।
एकमेवेप्यतः प्राह नारायणमियं श्रुतिः ।
समे द्वितीयशब्दः स्यात् अद्वितीयोऽसमत्वतः ॥

**1-3-5 दहराधिकरणं**-अथ यदिदं दहरं पुण्डरीकं...अन्तर आकाशः किं तदत्र विद्यते । विद्युन्नक्षत्राणि इत्यत्राकाशस्य चन्द्रादित्याद्याधारत्व-श्रवणात् आकाशः विष्णुः । य आत्मा अपहतपाप्मा इत्यादि श्रुतेश्च । परिदृश्यमानदेहांतरवस्थितः अल्पपरिमाणपुण्डरीकवेश्मनि वर्तमानः अल्पपरिमाणः दहराकाशः भूताकाशः एतदन्तर्वर्ती विष्णुः अन्वेष्टव्यः ।

**1-3-6 अनुकृत्यधिकरणं**–अनिर्देश्यसुखस्वरूपः परमात्मा तमेव भान्तं इति जगद्भानप्रयोजकभानाश्रयत्वश्रवणात् । तस्य भासा सर्वमिदं विभातीति श्रुतेश्च ।

**1-3-7 वामनाधिकरणं**–ऊर्ध्वं प्राणमुन्नयति अपानं प्रत्यगस्यति मध्ये वामनमासीनं विश्वे देवा उपासते । अत्र प्रमितः विष्णुरेव सर्वदेवोपास्यः मध्ये वामनमासीनमिति श्रुतेः। व्यापकमपि ब्रह्म वेदविद्या-

धिकारिमनुष्य हृदयापेक्षया अङ्गुष्ठमात्रमपि । वामाः—सुन्दर्यः तासां नेतारं वामनम् ।

**1-3-8 देवताधिकरणं**—अत्र देवादीनां तिरश्चां चाधिकारः समर्थ्यते। जरितार्यादीनां तिरश्चां ज्ञानवत्व ब्रह्मोपासनत्वादिदर्शनात् । वालि जटायुप्रभृतयः सन्ध्यावन्दनाद्याचरितवन्तो दृष्टाः । और्ध्वदेहिकं कर्म च रामेणानुष्ठितम् । यज्ञेन यज्ञमयजन्त देवाः, तानि धर्माणि प्रथमान्यासन्......सन्ति देवाः इत्यादिश्रुतेः । देवत्वयोग्या मनुष्या हि ज्ञानात्मकयज्ञेन यज्ञं विष्णुमपूजयन् । ते च पूजनादि धर्माः लोकसाधका आसन् । ते च देवाः स्वाधिकारान्ते मोक्षमाप्नुवन् । यत्र मोक्षे पूर्वकल्पीयमुक्ताः साध्यनामकदेवास्सन्ति । मधुविद्यायां वस्वादीनामधिकाराभावः जैमिनेर्मतः प्रकाशाधिक्यफलान्तरसत्वेनाधिकारः बादरायणेर्मतः ।

**1-3-9 अपशूद्राधिकरणं** — शुद्रस्य ब्रह्मविद्यायां नाधिकारः । यत्र वेदो रथः तत्र न वेदो यत्र नोरथः इति प्रमाणात् जानश्रुतेर्वेदवत्वदर्शनात् न शूद्रत्वं जानश्रुतेः । राजा पौत्रायणः शोकात् शूद्रेति मुनिनोदितः । प्राणं विद्यामवाप्यास्मात् परं धर्ममवाप्तवान् इति पाद्मे सपत्नी मे पराधमा इत्यादिमन्त्रलिङ्गात् उत्तमस्त्रीणां ब्रह्मविद्यायामधिकारः यथा इन्द्राण्यादेः । शुद्रवत् निषेधाभावाच्च ।

**1-3-10 कम्पनाधिकरणं**—यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम् इत्यत्र प्राणशब्दवाच्यः परमात्मा । न नभस्वान् । नभस्वतोपि सर्वाः स्युः चेष्टा भगवतो हरेः । किमुतान्यस्य जगतो यस्य चेष्टा नभस्वतः । को ह्येवान्यात् ।

**1-3-11 ज्योतिरधिकरणं**—योऽयं विज्ञानमयः प्राणेषु हृद्यन्त ज्योतिः पुरुषः । अत्र ज्योतिः पुरुषो विष्णुः । ज्योतिः जीवस्य बुध्यादिप्रकाशः । पुरुषः पूर्णषट्कगुणः ।

भावेऽभावेपि सूर्यादेः जीवानां विष्णुरेव हि ।
ज्योतिस्तथाप्यभावेतु तज्ज्ञेयं हि विशेषतः ।।

अस्वातन्त्र्यात्तु जीवस्य द्योतयन् बुद्धिमस्य सः ।
प्रवर्तयति सर्वेशः तमस्यपि जनार्दनः ।।

1-3-12 अकाशाधिकरणं—आकाशो ह वै । आकाशः विष्णुः । नामरूपराहित्याख्यविलक्षणार्थव्यपदेशात् । कथं तर्हि विष्णुव्यपदेशः ? 'अवर्णमगोत्रं अकायमव्रणं, यतो वाचो निवर्तन्ते' अनामा सः असिद्धत्वात् अरूपो भूतवर्जनात् इति । प्राकृतरूपनामरहितः ।।

चतुर्थः पादः

1-4-1 आनुमानिकाधिकरणं—इन्द्रियेभ्यः परा ह्यर्थाः—परमव्यक्तं अव्यक्तात्पुरुषः परः इत्यादिषु अव्यक्तशब्दादयः विष्णुवाचकाः । यथा भक्षणसाधन प्रसिद्धचमसशब्दस्य 'यथेदं तच्छिरः' इति वाक्य शेषात् शिरोवाचकत्वं, एवं नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति इति श्रुतेः विष्णुवाचकत्वम् ।

इन्द्रियेभ्यः-तदभिमानिदेवताभ्यः सोमवित्तपादिभ्यः अर्थाभिमानिदेवताः पराः । ताभ्यः सुपर्णी वारुणी उमादिभ्यः मनोभिमानिदेवताः रुद्रवीन्द्रशेषाः पराः । ताभ्यः बुद्धेः सरस्वती । तस्याः ब्रह्मा महानात्मा इति चतुर्मुखः । तस्मात् अव्यक्ताभिधा रमा । तस्याः पुरुषो विष्णुः इति तात्पर्यम् ।

1-4-2 ज्योतिरधिकरणं—वसन्ते वसन्ते ज्योतिषा यजेत इत्यादौ ज्योतिष्टोमादौ प्रसिद्धोपि ज्योतिश्शब्दः विष्णावेव प्रसिद्धः । तावा एतास्सर्वाः ऋचः सर्वे वेदाः सर्वे घोषाः इति प्रमाणात् । ज्योतिश्शब्दस्य यागादौ प्रसिद्धिरपि मधुविद्यायामिव कल्पनया ।

1-4-3 न संख्योपसंग्रहाधिकरणं—यस्मिन् पञ्च पञ्चजनाः आकाशश्च इत्यत्र पञ्चजन आकाशशब्दवाच्यः विष्णुः । यस्मिन्निति आधाराधेयभावविरोधोपि न भवति । विष्णोः नानारूपत्वान् एकरूपत्वाच्च । विष्णोः विशेषशक्तिमत्वाच्च ।

1-4-4 कारणत्वे न चाकाशाधिकरणं—आकाशे तिष्ठन् इत्यादौ आकाशेऽवान्तरकारणत्वेन विष्णुरेव तिष्ठति । आकाशादेव समुत्पद्यन्ते

इत्यत्र आकाशशब्दो विष्णुवाचकः। आकाशादिकारणत्वेन कार्यस्व-रूपत्वेन च स्थितः।

1-4-5 **समाकर्षाधिकरणं** — विष्णुवाचकानामपि सर्वशब्दानां आकृष्य जगत्यपि व्यवहारः। परस्य वाचकाः शब्दाः समाकृष्येतरेष्वपि व्यवह्रियन्ते सततं लोकवेदानुसारतः। अतः सर्वलौकिकवैदिकशब्दवाच्यः विष्णुः। अमुख्यया वृत्त्या अन्यत्र व्यवहारः।

1-4-6 **प्रकृत्यधिकरणं**—वेदे प्रयुक्तः स्त्रीलिङ्गः प्रकृतिशब्दः विष्णुवाचकः एषः स्त्री, एष पुरुषः एष प्रकृतिः इति विष्णोः प्रकृतिं पुरुषवाचकत्वोभयाम्नानात् प्रकृतौ अनुप्रविश्य प्रकृतिं परिणमय्य प्रकृतौ स्वयं स्थित्वा बहुधाकारणात् अस्याव्यवधानेन प्रकृतित्वं, प्रकृतिद्वारा उत्पत्तिद्वारत्वं इत्याद्युक्तेश्च प्रकृतिशब्दवाच्यो विष्णुः। प्रकृष्टा कृतिर्यस्य प्रकर्षेण करोति इति वा।

1 4-9 **सर्वव्याख्यानाधिकरणं**—निरकर्थत्वेन प्रसिद्धानां तुच्छशून्यादि शब्दानामपि विष्णुवाचकतैव। एष ह्येव शून्यः। एष ह्येव तुच्छः एष ह्येवाभावः इति श्रुतेः। अप्रसिद्धार्थकत्वेन श्रुताः सर्वे शून्यादिशब्दाः व्याख्याताः इत्यर्थः।

## द्वितीयोऽध्यायः

2-1-1 **स्मृत्यधिकरणं**-सर्वज्ञरुद्रादिकृतानां स्मृतीनां न प्रामाण्यम्। विष्ण्वादिकृतानामेव प्रामाण्यम्। इतरकृतस्मृत्युक्तफलस्यानुपलब्धेः। यागस्मृतिरपि न प्रमाणम्।

2-1-2 **न विलक्षणत्वाधिकरणं**—वेदानां मन्वादिस्मृतीनां च इतरकृतस्मृति वैलक्षण्यम्। तेष्विव न दोषाः कल्प्याः। अत्र तु फला व्यभिचारः। अतः सांगाः वेदाः प्रमाणम्।

2-1-3 **अभिमान्यधिकरणं**—मृदब्रवीत् आपोऽब्रुवन् इत्यादौ तत्तदभिमानिदेवताः ब्रुवन्ति इति तात्पर्यम्। मृदादीनां भगवद्दत्तविशेषसामर्थ्यमस्ति। अचिन्त्याः शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः।

ताश्च सर्वगता नित्यं वासुदेवैकसंश्रयाः॥

**2-1-4 असदधिकरणं**—नासदासीन्नो सदासीत् तदानीं नासीद्रजो नो व्योमा परोयत् । असदेववेदमग्र आसीत् । असतः सदजायत इत्यादौ असच्छब्दवाच्यविष्णोः उत्पत्तिरुच्यते । प्रलये वाय्वन्तरिक्षरूपं भूतं पृथिव्यप्तेजोरूपं भूतं वाय्वादिकं कार्यं कारणभूतं वाय्वादिकं च चेष्टमानं नासीत् । परमात्मैवासीरितिभावः ।

**2-1-5 भोक्त्रधिकरणं**—कर्माणि विज्ञानमयश्चात्मा परेऽव्यये सर्वं एकीभवन्तीति श्रुत्या मुक्तस्य परमात्मापत्तिरुक्ता इति न मन्तव्यम् । यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति इति जलान्तरसंबन्धे जलाधिक्यरूपभेदस्योक्तेः मुक्तावपि जीवपरयोः भेद एव । मुक्त्यवस्थायामपि न जोवस्य विष्णुमहिमसंभवः ।

**2-1-6 आरम्भणाधिकरणं**—किं स्विदासीदधिष्ठानं आरम्भणं कतमस्वित् कथाऽसीत् इति ब्रह्मणः साधनाधिष्ठानाभवेपि जगत्सृष्टृत्व मुपपद्यते । कुलालस्य परतन्त्रत्वात् अपेक्षा । विष्णुर्हि स्वतन्त्रः । साधनानां साधनत्वं यतः किं तस्य साधनैः इति । प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः । क्षोभयामास भगवान् सृष्ट्यर्थं जगतो विभुः । शरीरेन्द्रियसाधनवानेव भगवान् ।।

**2-1-7 इतरव्यपदेशाधिकरणं**—जीवस्य न कारणत्वं हिताहितादिकरणदोषप्रसक्तेः । विष्णोस्सर्वशक्तिमत्वेन जगत्स्रष्टृत्वे न कोपि दोषः । जोवस्य चेतनत्वेपि अश्मादिवत् न कर्तृत्वम् । अन्नं रसादिरूपेण प्राणः परिणयत्यसौ इति प्रमाणात् । गवि प्राण एवं क्षीरात्मना परिणामं जनयति । अयमपि कार्योपसंहारः विष्णुगत एव । सामान्य पिशाचादीनामेव अन्यशरीरप्रवेशपूर्वककार्यकतृत्वदर्शनात् अधिकशक्तिमतो विष्णोः विषये वा कथा ।

**2-1-8 श्रुतिशब्दमूलत्वाधिकरणं**—अपाणिपादो जवनो गृहीता इति विष्णोः विचित्रशक्तिमत्वोक्तेः विष्णुरेव कर्ता । निरवयवस्य सुखिनो दुःखिनः ज्ञातुः अज्ञातुश्च जीवस्य न कर्तृत्वोपपत्तिः ।

**2-1 9 प्रयोजनवत्वाधिकरणं**—कृतकृत्यस्य विष्णोः न प्रयोजन मुद्दिश्य सृष्टिकर्तृत्वं, अथ य एष एव परमानन्दः इत्युक्तेः। सृष्टचादिकं

हरिः नैव प्रयोजनमपेक्ष्य तु । कुरुते केवलानन्दात् यथा मत्तस्य नर्तनम् । लीलयैव सृजतीत्यर्थः ।

**2-1-10 वैषम्यनैर्घृण्याधिकरणं**–जीवगतपुण्यापुण्यापेक्षयैव जगत् सृष्टेः न हरेः वैषम्यनैर्घृण्यादिदोषः । कर्म चानादि । द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतस्सन्ति न सन्ति यदपेक्षया । अतः कर्मापेक्षत्वेपि विष्णोः न स्वातन्त्र्यभङ्गः ।

स कारयेत् पुण्यमथापि पापं न तावता दोषवानीशितापि ।
ईशो यतो गुणदोषादिसत्त्वे स्वयं परोऽनादिरादिः प्रजानाम् ।

अतः कारयितृत्वेपि न स्वातन्त्र्यं अपगच्छति ।

## द्वितीयः पादः

**2-2-1 रचनानुपपत्त्यधिकरणं**—अचेतनप्रधानस्य कारणत्व-निरासः । अक्षरप्रशासनेनैव सर्वेषां प्रवृत्तिः । एतेन हवाव पयो भवति इति पयसः दध्यादिभावेपि विष्णुशक्तिरेव प्रयोजिका ।

**2-2-2 अन्यत्राभावाधिकरणं** – ब्रह्मण्येवेदमाविरासीत् ब्रह्मणि लयमभ्युपैति इति श्रुतेः स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षति इति स्मृतेश्च प्रकृतिरूपां जीवमायामनुप्रविश्य सृजति।

**2-2-3 अभ्युपगमाधिकरणं**–लोकायतिकपक्षोऽनुपपन्नः । धर्म-धर्मयोः अभावात् ।

**2-2-4 पुरुषाश्माधिकरणं** – अचेतनायाः प्रकृतेः पुरुषसंबन्धात् प्रवृत्तिः इत्याक्षेपोऽत्र परिह्रियते । विष्णोः स्थित्या विष्णुप्रेरणादेव इति न त्वत्पक्षसंभवः ।

**2-2-5 अन्यथाऽनुमित्यधिकरणं** – शरीरसंबन्धात् पुरुषप्रवृत्तिः इत्यापि न पुरुषस्यासामर्थ्यात् शरीरसंबन्ध एवायुक्तः । अनीश्वरमतं सकलप्रमाणविरुद्धम् । तत्संबन्धस्यापि विष्णुकर्तृकत्वमेव ।

**2-2-6 वैशेषिकाधिकरणं** — परमाणुकारणवादितार्किकमत-निरासः ।

**2-2-7 समुदायाधिकरणं**—परमाणुपुञ्ज (समुदाय)स्य न जगद्धेतुत्वम् ।

**2-2-8 शून्याधिकरणं**—शून्यवादनिराकरणम् । असतः कारणत्वं न भवति । गगनकुसुमादीनामप्युत्पत्तिप्रसङ्गात् । सर्वैः दृष्टत्वेन जगतः शून्यत्वं न भवति । अयं मया दृष्टः स्वप्नः इत्यनुभवात् आत्मनः स्थिरत्वमेव ।

**2-2-9 अनुपलब्ध्यधिकरणं**—ज्ञानमात्रमेव जगत् । तच्च क्षणिकं इति विज्ञानवादः श्रुतिस्मृतिन्यायविरुद्धः ।

**2-2-10 नैकस्मिन्नधिकरणं**—एकस्मिन्वस्तु सत्वमसत्वं, सदसत्वमित्यादि विरुद्धम् । लोकदृष्टया शरीरपरिमित एव जीवः इति वादोऽयुक्तः पिपीलिकादिशरीरस्थजीवस्य गजादिशरीरप्रवेशे अकात्स्न्यं प्रसक्तेः विकारित्वानित्यत्वादिप्रसक्तेश्च ।

**2-2-11 पाशुपतनिराकरणाधिकरणं**—पशुपतेः न जगत्कारणत्वम् । अहं रुद्रस्य धनुरातनोमि ब्रह्मद्विषे शरवेऽहं तव 3 ; एको नारायण आसीत् न ब्रह्मा नेशानः इत्यादिना रुद्रस्यावरत्वं परतन्त्रत्वं च ।

**2-2-12 उत्पत्त्यधिकरणं**—शक्तिपक्षदूषणम् । केवलस्त्रीभ्यः न प्रजोत्पत्तिः । तदर्थं पुरुषानुग्रहः । तत्रापि करणाभावात्तदनुपपत्तिः विज्ञानादिकरणस्वीकारे तेनैव सृष्ट्याद्युपपत्तिरिति ईश्वरवादेऽन्तर्भावः।

## तृतीयः पादः

**2-3-1 वियदधिकरणं**—आकाशस्य विष्णोरुत्पत्तिः । अनादिर्वा अयमाकाशः इति श्रुतिः गौणी । यथाऽन्यत्र ब्रह्मशब्दश्रुतिरमुख्या । तथैव आकाशोत्पत्तिश्रुतिरपि । विष्णुरेव अविभागी, ततो विकारशून्यः विकारी तु विभक्तः ।

तद्विभागेन जायन्ते आकाशाद्याः पृथक् पृथक् ।
यो विभागी विकारस्सः सोऽविकारः परो हरिः ।।

**2-3-2 मातरिश्वाधिकरणं** — वायुर्वाविचेतनः । वायुना हि सर्वाणि भूतानि विज्ञायन्ते । वायुर्वाव नित्यः वायुना हि सर्वाणि भूतानि नीयन्ते इति श्रुतिः न वायोर्नित्यत्वबोधिका । तत्र अमुख्यनित्यत्वस्यैवोक्तेः ।

प्रतिव्यूह्य व्यूह्य चासौ अतीत्य च जनार्दनः ।
धारयत्यनिशं देवो नित्यानन्दैकलक्षणः ।।

इति परमात्मन्येव मुख्यनित्यत्वमुक्तम् ।

**2-3-3 असंभवाधिकरणं**–असद्वा इदमग्र आसीत् ततो वै सदजायत इति श्रुत्या सतोऽप्युत्पत्तिरस्तीति न वाच्यम् । तत्रासच्छब्दस्य ब्रह्मवाचित्वात् । तद्वा एतत्परमाहुः परतो हि तदुदीक्ष्यते इति श्रुतेः । ब्रह्म वा असत् सद्वाव प्राणः प्रति ब्रह्मणः असच्छब्दवाच्यत्वप्रतीतेः ।

**2-3-4 तेजोधिकरणं**—वायोरग्निः इति वायुजन्यत्वं तेजस एव तत्तेजोऽसृजत । विष्णुसृज्यत्वं च । नैतावता विरोधः शङ्क्यः । साक्षादुत्पत्तिस्थानत्वस्य विष्णावेवाङ्गीकारात् । अन्यत्रामुख्यत्वाभिप्रायात् ।

**2-3-5 अबधिकरणं**—अपां ब्रह्मणः सृष्टिः ।

**2-3-6 पृथिव्यधिकरणं**–ता अन्नमसृजन्त इत्यन्नस्य जलजन्यत्वम् । अद्भ्यः पृथिवी इत्यत्र पृथिव्या जलजन्यत्वमिति परस्परविरोधः । मैवं अन्नशब्देन पृथिव्या एवोक्तेः । भूतप्रकरणात् । भूमेः कृष्णवर्णत्वाच्च ।

**2-3-7 तदभिध्यानाधिकरणं** — प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः इति विष्णुभिन्नस्य संहर्तृत्वं प्रतीयते । मैवम् । तस्याभिध्यानात् योजनात्तत्वभावादिति विष्णोरेव संहर्तृत्वोक्तेः । स्रष्टा पाता च संहर्ता स एको हरिरीश्वरः ।

**2-3-8 विपर्ययाधिकरणं**—सृष्टिक्रमप्रतिरूपो लयक्रमः । कर्ता प्राणादिकस्यास्य हन्ता भूम्यादिकस्य च । यः क्रमात् व्युत्क्रमाच्चैव स हरिः पर उच्यते । इति श्रुतेः ।

**2-3-9 अन्तरा विज्ञानाधिकरणं**—प्राणान्मनो मनसश्च विज्ञानं यच्छेत् वाङ्मनसी प्राज्ञः तद्यच्छेत् ज्ञान आत्मनि इति श्रुत्या मध्ये विज्ञानमनसोः विपरीतक्रमः इति न वाच्यम् । विज्ञानतत्त्वात्तु मनः मनस्तत्त्वात्तु खादिकं इति प्रमाणात् चराचरव्यपेक्षया स विपरीतक्रमः । न मुख्यक्रमः ।

2-3-10 आत्माधिकरणं–विष्णोरपि लयः इत्याशंक्य परिह्रियते। तुच्छेनाभ्वपिहितं यदासीत् । इति तुच्छे न लयः प्रतिपाद्यते । स एतस्मिन् तमसि निलीनः प्रकृतिं पुरुषं कालं चानुपश्यति नैनं पश्यति कथंचन । इति पैंगिश्रुतिः विष्णोः तमसि छन्नत्वं हि प्रतिपादयति । अतो न लयः ।

2-3-11 ज्ञाधिकरणं–सर्वे एते चिदात्मनो व्युच्चरन्ति इति जीवस्योत्पत्तिः विष्णोरुक्ता इति शङ्का । उपाध्यपेक्षयोत्पत्तिः । मातृ देहान्निसृत्य जाताः । अनुत्पन्नाः अविनष्टाः परं ज्योतिर्निविशन्ति इत्यादि श्रुतेः ।

2-3-12 उत्क्रान्त्यधिकरणं–जीवाणुत्वबोधकम्—स गर्भी भवति स प्रसूयते स कर्म कुरुते, सोऽस्मात् शरीरात् उत्क्रम्यामुं लोकं इत्युक्तेः अणुत्वम् । स एतेनैव स्वात्मना परेण इमं गर्भमनुप्रविशतीत्युक्तेः अस्वतन्त्रश्च । विष्णुप्रविष्टस्यैव कर्तृत्वोत्पत्त्यादिकम् । अणुत्वेपि जीवस्य सर्वशरीरव्याप्तिः हरिचन्दनबिन्दुवत् । चिद्गुणेन सर्वशरीरव्याप्तिरपि ।

सूत्रे ज्ञः इति जात्यभिप्रायकम् । असंख्याकाः गणशोप्यनन्ताः । मुक्तियोग्याः नित्यसंसारिणः तमोयोग्याश्च । मुक्तियोग्याः पञ्चविधाः- देवा देवगन्धर्वाश्च, ऋषयः, पितरः, चक्रवर्तिनो मनुष्योत्तमांश्च, मनुष्यगन्धर्वाश्च । नित्यसंसारिणः नित्यं सुखदुःखमिश्राः । तमोयोग्याः चतुर्विधाः–दैत्याः राक्षसाः पिशाचाः मनुष्याधमाश्च सर्वेपि परस्परं भिन्नाः परमात्मना च भिन्नाः । संसारे मुक्तौ च तारतम्योपेताः ।

अनागताः अतीताश्च यावन्तः सहिता क्षणाः ।
अतीतानागताश्चैव यावन्तः परमाणवः ।।
ततोऽत्यनन्तगुणिताः जीवानां राशयः पृथक् ।
परमाणुप्रदेशेपि ह्यनन्ताः प्राणिराशयः । इति तत्वनिर्णये ।

2-3-13 व्यतिरेकाधिकरणं — शतधा सहस्रधा स गच्छति समुच्चये । इति जीवस्यैवानेकधाभावो दृश्यते । यथा पुष्पात् गन्धः

पृथक् गच्छति । एवं अंशिनो जीवात् अंशाः पृथक् गच्छन्ति । आत्मानं बहुधा कृत्वा क्रीडते योगसत्तमा इति ईश्वरदत्तयोगशक्त्या अनेकधाभावः ।

**2-3-14 पृथगधिकरणं** — जीवब्रह्मणोः भेदाभेदपरिहारोऽत्र । भिन्नोऽचिन्त्यः परमो जीवसंघात् पूर्णः परो जीवसङ्घोह्यपूर्णः इति पूर्णगुणात् विष्णोः भिन्नो जीवः । ज्ञानानन्दादिगुणसाम्यादभेदोक्तिः ।

**2-3-15 पुंस्त्वाधिकरणं**—जीवानां ज्ञानानन्दादिसत्वेपि मुक्तावेवाविर्भावः । यथा सतोपि पुंस्त्वस्य यौवनावस्थायां प्रकाशः ।

नित्यानन्दज्ञानबला देवाः नैवं तु दानवाः ।
दुःखोपलब्धिमात्रास्ते मानुषास्तूभयात्मकाः ।।
तेषां यदन्यथा दृश्यं तदुपाधिकृतं मतम् ।
विज्ञानेनात्मयोग्येन निजरूपे व्यवस्थितिः ।।

**2-3-16 कर्तृत्वाधिकरणं**—परमात्मन एव कर्तृत्वं. विधिनिषेध शास्त्रावैयर्थ्याय परमात्मशक्त्यधीनकर्तृत्वं बद्धदशायां जीवस्योच्यते । परतन्त्रकर्तृत्वं जीवस्य । स्वतन्त्रकर्तृत्वं परस्य । मोक्षे पि हि स्त्रीभिः सह जीवानां विहारो दृश्यते ।

**2-3-17 अंशाधिकरणं** — जीवानां ब्रह्मांशत्वम् । अंशत्वेपि नैकरूपता । जीवानां प्रतिबिम्बस्वरूपत्वात् न विष्णुसाम्यम् । यथा अमृत समुद्रस्य जलांशत्वम् ।

**2-3-18 अदृष्टाधिकरणं**—जीवाः प्रतिबिम्बरूपाः । अथापि जीव कर्मापेक्षया परस्परं वैचित्र्यम् । स्वर्गनरकभूमिस्थत्वहेतुना न वैचित्र्यम् । एकदेशस्थानामपि वैचित्र्यदर्शनात् । वैचित्र्ये अदृष्टमेव नियामकम् ।

## चतुर्थः पादः

**2-4-1 प्राणोत्पत्त्यधिकरणं** – प्राणादीनामुत्पत्तिः । अथ प्राणा एवानादयः प्राणा नित्याः इति श्रुतिः सूक्ष्मरूपेणेन्द्रियाणां स्थितिप्रतिपादिका एतस्माज्जायते प्राणः इति प्रबलश्रुतिविरोधात् ।

2-4-2 तत्प्रागधिकरणं—मनसोप्युत्पत्तिः ।

2-4-3 तत्पूर्वकत्वाधिकरणं–वागिन्द्रियस्योत्पत्तिः ।

2-4-4 सप्तगत्यधिकरणं—इन्द्रियाणां द्वादशसंख्याकत्वं–सप्त-प्राणास्त्ववगतेः पञ्च प्राणाश्च कर्मणः । एवं प्राणद्वादशकं शरीरे नित्य संस्थितम् । इति पुराणे ।

2-4-5 अण्वधिकरणं — प्राणानामणुत्वं-तद्यथा ह्यणुनश्चक्षसः प्रकाशो व्याततः, अणुभिः पश्यति इति प्रमाणात् । जीवः स्वरूपतोऽणुः तस्य चक्षसः प्रकाशः व्याप्तः । अणुभिः ज्ञानेन्द्रियैः हि स पश्यति ।

2-4-6 श्रेष्ठाधिकरणं – श्रेष्ठप्राणस्यापि उत्पत्तिमत्त्वम् । आत्मनः एषः प्राणो जायते इति श्रुतेः । सूक्ष्मत्वमपि ।

2-4-7 चक्षुराद्यधिकरणं-चक्षुरादीन्द्रियाणामिव मुख्यप्राणस्यापि परमात्माधीनत्वम् । अकरणत्वप्रयुक्तोत्पत्तिनिषेधो न भवति । इतर-प्राणानां करणत्वं अस्यचाकरणत्वमिति विशेषः ।

2-4-8 पञ्चवृत्त्यधिकरणं--मुख्यप्राणस्य पञ्चधा भेदेन व्यपदेशः यथा मनसः पञ्चधा भेदेन व्यपदेशः ।

2-4-9 अण्वधिकरणं – मुख्यप्राणश्चाणुरेव । अन्तर्वाणुः बहि-र्महान् इति श्रुतेः । व्याप्तिबोधकश्रुतिः स्तुतिपरा ।

2-4-10 ज्योतिरधिकरणं — सेन्द्रियस्य जीवगणस्याधिष्ठाता विष्णुः यः प्राणे तिष्ठन् इति श्रुतेः । करेणैः कारणं ब्रह्म पुरुषापेक्षया अखिलम् । श्रोत्रादिभिः कारयति करणानीत्यतो विदुः । विष्णोरेव मुख्यकारणत्वं जीवकरणत्वं तु तदपेक्षया । जीवकरणसम्बन्धः अनादि नित्यः । अतो जीवकरणत्वोक्तिः ।

2-4-11 इन्द्रियाधिकरणं – इन्द्रियाणां द्वादशत्वमेव । मुख्य प्राणस्य नेन्द्रियत्वम् ।

श्रोत्रादीनि तु पंचैव तथा वागादिपञ्चकम् ।
मनोबुद्धिसहायानि द्वादशैवेन्द्रियाणि तु ।।
विषयद्रवणात्तेषां इन्द्रियत्वमुदाहृतम् ।
तेषां नियामकः प्राणः स्थित एवाखिलं प्रभुः ।।

**2-4-12 संज्ञाधिकरणं**-नामरूपव्याकरणं त्रिवृत्कुर्वतो विष्णोरेव।
सर्वनाम्नां च रूपाणां व्यवहारेषु केशवः।
एक एव यतस्स्रष्टा ब्रह्माद्यास्तदवान्तराः॥

**2-4-13 मांसाधिकरणं**—आपो वा मांसमस्थि च इति श्रुत्या शरीरस्य भूतत्रयं कारणं उत पृथक् पृथक् इति संशयः। आपो हीदं सर्वं इति श्रुतेः एकमेव जलं कारणं इति पूर्वपक्षः। उत्तरं-समुदितमेव कारण इति समाधिः। अम्मयं तेजोमयं अन्नमयमिति व्यवहरात्। त्रिवृत्करणे यस्य भागस्याधिक्यं तेन भागेन व्यवहारः। यत्कठिनं सा पृथिवी, यद्रवं तदापः यदुष्णं तत्तेजः इति श्रुत्या शरीरे दृश्यमानः मांसभागः भौम एव।

## तृतीयाध्यायः

**3-1-1 तदन्तरप्रतिपत्त्यधिकरणं**—देहान्तरप्रतिपत्तौ भूतसूक्ष्मपरिष्वक्तस्य गमनम्। भूतबन्धस्तु संसारः मुक्तिस्तेभ्यो विमोचनम्। भूतानां विनिवृत्तिस्तु मरणं समुदाहृतम्।

**3-1-2 त्र्यात्मकाधिकरणं**—आपः पुरुषवचसः इत्यत्र अप्शब्दः भूतान्तरोपलक्षकः। अपां भूयस्त्वात्तथा व्यवहारः।

**3-1-3 प्राणगत्यधिकरणं** — भूतसूक्ष्मैस्सह इन्द्रियाणामपि गमनम्।

**3-1-4 अग्न्यादिगत्यधिकरणं**—मृतिकाले जहात्येनं प्राणाभूतानि पञ्च च। भागतो भागतस्त्वेनं अनुगच्छन्ति सर्वशः। इति ब्रह्माण्डपुराणे श्रूयते। अतः जीवेन सह प्राणाः भागतो गच्छन्ति भागतः अधिदैवं गच्छन्ति। अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम्।

**3-1-5 प्रथमेऽश्रवणाधिकरणं**—तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति इत्यत्र श्रद्धाशब्दः अब्सहितपुरुषोपलक्षकः। अप्पदं च भूतोपलक्षकम्।

**3-1-6 अश्रुतत्वाधिकरणं** – अग्न्यादिगतेरिव भूतैश्चरति भूतैः विचरति इति श्रुतिबलात् यजमानेन सह भूतगमनं दृष्टम्।

3-1-7 **भाक्ताधिकरणं**–स्वर्गं गतस्यामृतत्ववचनं गौणम्। नान्यः पन्था इति आत्मविद एवामृतत्वोक्तेः । यागादिकर्म अस्य कर्म क्षीयते नश्वरम् । ज्ञानेनामृतीभवति, कर्मणा ज्ञानमातनोति च ।

3-1-8 **कृतात्ययाधिकरणं**–ततः शेषेण इमं लोकमायाति, पुनः कर्म कुरुते इत्युक्तेः भुक्तशेषानुशयवानेव गच्छति । एवं पुनः पुनः आवर्तनेषु अशेषकर्मसमाप्तिर्न भवेत् । पुनः पुनः कर्मकरणात् ।

आचतुर्दशमाद्वर्षात् कर्माणि नियमेन तु ।
दशावराणां देहानां कारणानि करोत्ययम् ।
अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यति ।।

3-1-9 **यथेताधिकरणं**–जीवानां परलोकात् पुनरागमने मार्गान्तरेण किञ्चिदन्यथा च ।

3-1-10 **चरणाधिकरणं**–रमणीयचरणाः इत्यादौ चरणःशब्दः न केवलाचारपरः । परं तु यज्ञादिकर्मपरः ।

3-1-11 **अनिष्टादिकार्यधिकरणं** — पुण्यकृतामिव अनिष्टादिकारिणामपि परलोकगमनागमने वर्तेते । यमकृतदण्डनाद्यनुभवः तमसि निमग्नता च ।

3-1-12 **सप्तनरकाधिकरणं**–पापिनामपि आरोहावरोहौ ।

रौरवोऽथ महांश्चैव वह्निः वैतरणो तथा ।
कुम्भीपाकः इति प्रोक्तान्यनित्यनरकाणि च ।।
तामिस्रश्चान्धतामिस्रः द्वौ नित्यौ संप्रकीर्तितौ ।
इति सप्त प्रधानानि बलीयस्तूत्तरोत्तरम् ।।

3-1-13 **तत्राप्यधिकरणं**—सर्वत्र विष्णोः वर्तमानत्वात् नरकेपि विष्णुः अदुःखी गुणपूर्णः प्रेरितैव वर्तते ।

नरकेपि वसन्नीशः नासौ दुःखभुगुच्यते ।
नीचोच्चतैव दुःखादेः भोग इत्यभिधीयते ।।
नासौ नीचोच्चतां याति पश्यत्वेव प्रभुत्वतः ।

3-1-14 **विद्याधिकरणं**–विद्यानिष्ठस्य देवयानं सत्कर्मानुष्ठातुः पितृयानम् । तदितरसामान्यजीवानां तृतीयं स्थानम् । अथैतयोः पथोः–एतत् तृतीयं स्थानम् ।

**3-1-15 न तृतीयाधिकरणं**—तिर्यक्षु नरकेचैव सुखलेशो विधीयते। नान्धे तमसि मग्नानां सुखलेशोपि कश्चन। इति प्रामाणात् जीवस्य तृतीयमार्गेण अवाक्गतौ दुःखमेव।

**3-1-16 तत्स्वाभाव्यापत्त्यधिकरणं**—भूलोकप्राप्तिकाले धूमाद्यापत्तिः न धूमाद्यैक्यम्। धूमातिगतौ एतद्गमनं धूमादिस्थितौ एतत् स्थितिः, साम्यापत्तिर्वा, इत्यभिप्रायेण धूमाद्यापत्तिकथनम्। एकदेशस्वभावेन बागभेदापि युज्यते।

यथा जीवः परं ब्रह्म ब्रह्मेदं जगदित्यपि।

**3-1-17 नातिचिराधिकरणं**—प्रत्यवरोहतो जीवस्य आकाशादि प्राप्तौ तत्र स्थितिः, कदाचित् कल्पान्तमपि स्यादिति न शंकनीयम्।

स्वर्गाल्लोकादवाक्प्राप्तः वत्सरात्पूर्वमेव तु।

मातुश्शरीरमाप्नोति पर्यटन् यत्र तत्र च ॥ इति वचनात्।

**3-1-18 अन्याधिकरणं** — स्थावरजन्मप्राप्तजीवान्तराधिष्ठिते जीवान्तःप्रवेशमात्रमेव। न तु तत्र भोगः।

स्वर्गादवाक्गतो देही व्रीह्यादीतरदेहगः।

अभुञ्जंस्तु क्रमेणैव देहमाप्नोति कालतः ॥

**3-1-19 रेतोधिकरणं**—अवरोहन् मातुरुदरं व्रजेत् इत्युक्तम्। रेतस्सिक्तीति चोक्तम्। रेतस्सिक्शरीरं प्रविश्य ततो मातुरुदरं प्रविशतीति भावः।

**3-1-20 योनेश्शरीराधिकरणं** – अवरोहतां जीवानां स्थावर पुरुषस्त्रीशरीरादिप्राप्तिः यथाशास्त्रं भवति। स्थास्नुष्वथापि पुरुषे प्रमदायामथापि वा। गर्भे वा बहिरेवाऽथ क्वचित् स्थानान्तरेषु च। इति। स्थास्नुषु शुकादयः। पुरुषे मान्धातृमुखाः, प्रमदायां आस्तिकप्रभृतयः, जरत्कार्वाद्यनुग्रहात्। केषांचित् गर्भे पूर्वं सिद्धस्यैव शरीरस्य प्राप्तिः। द्रुपदादीनां बहिः पितृमापेक्षत्वं, धृष्टद्युम्नादीनां पित्रादिनिरपेक्षता।

अभ्रधूमादिभावस्तु जीवस्याभ्रादिसंस्थितिः।

अभ्राभिमानिरूपं तु ज्ञानिप्राप्यं यतो भवेत् ॥

इति प्रमाणात् अवरोहतां जीवानां अभ्रादिस्थितिरेव। पञ्चमाहुत्य-पेक्षा निर्बन्धः प्राण्युत्पत्तेर्नास्ति। योनिद्वारेण देहं च प्राप्नोति प्रायशो नरः। विशेषकारणादेव विशेषाज्जनिरिष्यते। सामान्यजननं चैव नृणां सामान्यहेतुकः।

## द्वितीयः पादः

**3-2-1 सन्ध्याधिकरणं**—स्वाप्नपदार्थाः—भगवादिच्छा जीवमनो गतसंस्काराभ्यां निर्मिताः सत्याः। बहिरिवाप्रकाशमानत्वात्। विष्णु-कर्तृकं सर्वम्। अतः प्रज्ञातृमायोक्ता नैव्युपादानमेव सा। निमित्त-मैश्वरी मुख्या निर्मितं त्रातमेव च। इति। यद्वाव ब्रह्मणो ब्रूयात् देवतावृषभोपि वा। स्वप्नस्थ मथवा राजा तत्तथैव भविष्यति इति शुभाशुभसूचकम्।

**3-2-2 पराभिध्यानाधिकरणं** – जीवस्य बन्धमोक्षौ विष्णुनैव भवतः इति तदिच्छयैव स्वप्नबुद्धि स्वप्नतिरस्कारादि।

**3-2-3 देहयागाधिकरण**–जीवस्य देहसंबन्धं स्वप्नं जाग्रदवस्थां च सर्वमुत्पादयति।

**3-2-4 तदभावाधिकरणं**—जीवस्य स्वप्नस्थानं परमात्मैव।

**3-2-5 प्रबोधाधिकरणं**–सुप्तिप्रबोधौ भगवतैव भवतः।

**3-2-6 कर्मानुस्मृतिशब्दविध्यधिकरणं**—विष्णुरेव सर्वजीवकर्म कारयिता। एष स्वप्नान् दर्शयति। एष प्रबोधयति, एष ह्येवासाधु कर्म कारयति इत्यादि कर्मानुमारिवाक्यादिभिः।

**3-2-7 मुग्धाधिकरणं**—यत एवं त्रयोऽवस्था मोहस्तु परिशेषतः अर्धप्राप्तिः इति ज्ञेयो दुःखमात्र प्रतिस्मृतेः इति विष्णोरर्धप्राप्तिः मोहावस्था। विष्णुसमीपस्थः स्वप्नं पश्यति। हृदयवर्ती विष्णोः दूरस्थः जीवः जागर्ति। विष्णौ जीवस्य लये सति स्वपिति परि-शेषात् मोहावस्था विष्णोरर्धप्राप्तिः। रुद्र, अश्वत्थाम, लक्ष्मण, बल-राम, इन्द्र, अर्जुन प्रभृतीनां, भीमसेन, रावणशक्ति, जरासन्ध, देवा-सुरयुद्ध स्वपुत्र बभ्रुवाहनप्रभृतिभिः प्रकारेण मूर्च्छा दृष्टा। तदा दुःख-

मात्रानुभवः । तत्प्रवर्तकोपि भगवान् । मूर्च्छा प्रबोधनं चैव यत एव प्रवर्तते स ईशः परमो ज्ञेयः परमानन्दलक्षणः । इति ।

**3-2-8 उभयलिङ्गाधिकरणं**–विष्णोरेवानन्तरूपत्वम् । अभेदेपि स्थानभेदात् ऐश्वर्ययोगाच्च भेदव्यपदेशः । एकरूपः परो विष्णुः सर्वत्र अपि न संशयः । ऐश्वर्याद् रूपमेकं च सूर्यवत् बहुधेयते ।

अमृतमिदं ब्रह्मेदं सर्वं अन्तर्याम्यमृतः, अयं वै दश च सहस्राणि च इत्यनन्तत्वव्यपदेशः ।

**3-2-9 अरूपवदधिकरणं**-सर्वेभ्यः उत्तमत्वात् ब्रह्मणः अरूपवत्वं। अरूपवानतः क्व तदव्यक्ततः परः। मात्स्यपुराणम्। रुक्मवर्णत्वव्यपदेशः कथम् ? विलक्षणरूपवत्वात् । अप्राकृतविलक्षणरूपवत्वं तस्यांगीक्रियते । गृहादौ दीपे सत्यपि प्रकाशो न विद्यते इति व्यवह्रियते । एवं रूपवत्वेपि अरूपित्वव्यपदेशः आनन्दरूपत्वं तस्य । चिन्तयीत यतिर्नान्यं ज्ञानरूपादृते हरेः ।

**3-2-10 सूर्यकाधिकरणं** – जीवात्मानः विष्णोर्भिन्नाः विष्णुसदृशाः विष्णवधीनाः । रूपं रूपं प्रतिरूपो बभूव । बहवः सूर्यका यद्वत् सूर्यस्य सदृशा जले । एवमेवात्मका लोके परात्मसदृशा मताः ।

**3-2-11 अम्बुवदधिकरणं**–यमेवैष वृणुते तेन लभ्यः इति विष्णौ जीवैः भक्तिः कार्या इत्युच्यते । नित्यानन्दरूपविष्णुसादृश्यस्य नित्यज्ञानान्दादेश्च जीवेषु सिद्धत्वात् किमर्थं भक्तिः इति न वाच्यम् । अम्बुवत्—स्नेहेन ग्रहणात्मकज्ञानरूपभक्तिं विना जीवस्य विष्णुसादृश्याभावात् ।

महत्ववृद्धिः भक्तिस्तु स्नेहपूर्वाऽभिधीयते ।
तयैव व्यज्यते संयक्जीवरूपं सुखादिकम् ।।

**3-2-12 वृद्धिह्रासभाक्त्वाधिकरणं** – विष्णुगतजीवभक्तिज्ञान तारतम्याधीनं मुक्तौ जीवस्य वृद्धिह्लासादितारतम्यम् । ब्रह्मादयः उत्तमाधिकारिणः पूर्णभक्तिपूर्णज्ञानवन्तः। अतः उभयसामञ्जस्यम् ।

यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ।
तथा मुक्तिविशेषोपि ज्ञानिनां लिङ्गभेदने ।।

क्रियावन्तः श्रोत्रियाः ब्रह्मनिष्ठाः इत्यादिभिः भक्तितारतम्यात् आनन्दतारतम्यमुच्यते ।

3-2-13 **प्रकृतैतावत्त्वाधिकरणं**—विष्णोः सृष्टिसंहारकर्तृत्वमात्रमेव इति न वाच्यम् । नैतावदेवापरो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति इति श्रुतेः । सृष्टिं च पालनं चैव संहारं नियमं तथा । एक एव करोतीशः सर्वस्य जगतो हरिः । इति च ।

3-2-14 **अव्यक्ताधिकरणं**—यद्यपि ब्रह्म अव्यक्तस्वरूपमेव । तथापि व्यक्तमपि भवति । तत्प्रसादेन जीवानां तदपरोक्षज्ञानात् ।

नित्याव्यक्तोपि भगवान् ईक्ष्यते निजशक्तितः ।
तमृते परमात्मानं कः पश्येताऽभितः प्रभुम् ॥

3-2-12 **अहिकुण्डलाधिकरणं**—अथैव परमः आनन्दः इति विष्णोः आनन्दरूपत्वमुक्तम् । आनन्दं ब्रह्मणो विद्वान् इति आनन्दस्य ब्रह्मधर्मत्वम् । एवं भेदाभेदनिर्देशः अहिकुण्डलवत् । यथा सूर्यस्य तेजोरूपत्वात् प्रकाशित्वम् । कालस्यैकत्वेपि पूर्वापरादिभेदनिर्देशो यथा । प्रकाशवत् कालवद्वा—यथांगे शयनादिकम् ।

ब्रह्मणश्चैव मुक्तानां आनन्दो भिन्न एव तु ।
आनन्देनत्वभिन्नेन व्यवहारः प्रकाशवत् ।
कालवद्वा यथा कालः स्वावच्छेदकतां व्रजेत् ॥

अभेदेपि भेदव्यवहारो भवति । शयनं—अवस्थाविशेषः । अङ्गे अवस्था विशेषेण भेदः अभेदश्च भवति ।

3-2-16 **पराधिकरणं**—सेतून्मानादिव्यपदेशेभ्यः परमात्मनोऽन्यदेव जीवज्ञानानन्दादिकम् । जीवेश्वरसंबन्धज्ञापनार्थं सेतून्मानादिव्यपदेशः ।

3-2-17 **स्थानविशेषाधिकरणं**—चतुर्मुखानन्दादयः विष्ण्वानन्दप्रतिबिम्बभूताः । यथा जलादिषु सूर्यस्य प्रतिबिम्बविशेषः । अत एव भगवदानन्दादीनां चतुर्मुखानन्दादीनां च तारतम्यमिति बिम्बभूतपरमानन्दे विष्णौ चतुर्मुखादीनां भक्ति युंज्यते ।

ऐश्वर्यात्परमात् विष्णोः भक्त्यादीनामनादितः ।
ब्रह्मादीनां सूपपन्ना ह्यानन्दादेर्विचित्रता ॥

**3-2-18 तथान्यत्वाधिकरणं** — ध्यानकाले विष्णोः दृश्यत्वात् कथमव्यक्तत्वम् ? दृश्यमानस्य विष्णोरन्यत्वात् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते । इति श्रुतेः । अव्यक्त एव हि उपासनकाले चित्ते दृश्यमानः व्यक्तो भवति । आपरोक्ष्यज्ञानजनकत्वात् उपासनस्येति तात्पर्यम् ।

**3-2-19 अनेन सर्वगतत्वाधिकरणं**—सर्वत्र सर्वमेतस्मात् सर्वदा सर्ववस्तुषु । स्वरूपभूतया नित्यशक्त्या मायाख्यया यतः अतो मायामयं विष्णुं प्रवदन्ति सनातनम् । इति प्रमाणात् सर्वजगत्कर्तृत्वं तस्योपपद्यते । एतेन बहूनां बहुदेशाधिपानां राज्ञां नगरसृष्ट्यादि पालनसंहारादिदर्शनात् एकस्य विष्णोः सर्वकालसर्ववस्तुसृष्ट्यादिकर्तृत्वं न संभवतीति पूर्वपक्षो निरस्तः ।

**3-2-20 फलाधिकरणं**—विज्ञानमानन्दं ब्रह्म रातिः दातुः परायणं दातुः यजमानस्य विष्णुः रातिः फलप्रदः । अतः प्राधान्येन फलप्रदत्वं विष्णोरेव ।

## तृतीयः पादः

**3-3-1 सर्ववेदान्तप्रत्ययाधिकरणं**—सर्वैश्च वेदैः परमो हि देवः जिज्ञास्योऽसौ नाल्पवेदैः प्रसिध्येत् । यथा नदीनां सलिलं शक्ये सागरगं भवेत् । एवं वाक्यानि सर्वाणि पुंशक्त्या ब्रह्मवित्तये इत्यादि प्रमाणबलात् ब्रह्म सर्ववेदान्तविचाराधीननिर्णयपूर्वक ज्ञानविषयो भवति । तथा च ब्रह्मज्ञानं सर्ववेदान्तविचाराधीनम् । अतः सर्वा अपि शाखाः एकाधिकारिविषया भवन्ति । नच प्रतिशाखं विज्ञानमानन्दं ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्मेति वचनभेदात् सर्वशाखानैकाधिकारिविषयाः इति वाच्यम् । एकस्यामेव शाखायां आत्मेत्येवोपासीत कं ब्रह्म खं ब्रह्म इति भेदनिर्देशस्येवोपपत्तेः । स्वाध्यायोऽध्येतव्यः इति सर्ववेदानां सर्ववेदान्तानां चाध्ययनस्य विधानम् । सर्ववेदोक्तकर्माचरण इव सर्ववेदान्तोक्तात्मो-

पासनायामपि सर्वेषामधिकारसंभवात्। सर्ववेदाध्ययनस्य शक्त्यभावात् हि एकवेदाध्ययनम्। अथापि यथाशक्ति स्वस्वाधीतवेदनिर्णयजन्यज्ञानवतामपि ब्रह्मोपास्यं भवति।

यथा शक्त्यखिलान् वेदान् विज्ञायोपासनं भवेत्।
तत्राखिलस्य विज्ञप्तिः संयक्ब्रह्मण एव हि॥
तदन्येषां यथायोग्यं अखिलज्ञप्तिरिष्यते।
तावतोपासने योग्यः भवेदेवाखिलः पुमान्॥

**3-3-2 उपसंहाराधिकरणं**—यथांगभूतानां स्नानाचमनप्रयाजादीनां यागादिविधौ उपसंहारः तथा सर्ववेदोक्तगुणानां उपसंहारपूर्वकं विष्णुः उपास्यः, न तु सोऽरोदीत् इत्युक्तदोषाणाम्। एते गुणा नोपास्याः इति विशेषवचनाभावात्। आत्मेत्येवोपासीत इत्यत्र एवकारः अनात्मत्वनिवृत्त्यर्थः न गुणनिवृत्त्यर्थः। तस्मादेकः सर्वगुणैः विचिन्त्यः इति श्रुतेः।

**3-3-3 प्राप्त्यधिकरणं**—अत्र चतुर्मुखस्यैव सर्वगुणविशिष्टब्रह्मोपासनम्। अन्येषां यथासंभवम्। अधिकारिभेदेन गुणोपसंहारानुपसंहारयोः प्राप्तिसंभवात्।

**3-3-4 सर्वाभेदाधिकरणं**—चतुर्मुखादीनां विष्णुध्याने बहुगुणोपसंहारः अधिकफलवत्वदर्शनात्। अल्पशक्तिकानां यथासंभवम्।

**3-3-5 आनन्दाद्यधिकरणं**—प्रधानफले मोक्षे रुचिमान् विष्णुं आनन्दो ज्ञानं सदात्मा इत्युपासीत।

**3-3-6 प्रियशिरस्त्वाद्यधिकरणं**—फलान्तरार्थी प्रियशिरस्त्वादीन् गुणान्नोपासीत। यतस्तेषां अगुणत्वम्।

**3-3-7 इतराधिकरणं**—सत् चित् आनन्दः आत्मा। एतद्व्यतिरिक्ताः गुणाः फलसाम्यलाभाय देवादिभिरुपास्याः।

**3-3-8 आध्यानाधिकरणं**—ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणा। ज्ञातव्याश्चैव ध्यातव्याः गुणास्सर्वेऽप्यतो हरेः। नान्यत्प्रयोजनं ज्ञानात् ध्यानात् कर्मकृतैरपि इति सर्वगुणानां ध्यातव्यत्वमुक्तम्।

फलं तु ज्ञानलाभ एव । न तु साक्षान्मोक्षः । [आत्मेत्येवोपासीत, इति गुणानुपसंहारेण उपासनोक्तेः ।

**3-3-9 आत्मगृहीत्यधिकरणं**—आत्मेत्येवोपासीत इति गुणाननुपसंहृत्य केवलात्मोपासनं विहितम् । एवं च सच्चिदादिगुणानामपि अनुपसंहारः स्यात् । मैवं-तेषां गुणानामात्मशब्देनैव ग्रहणात् । अत्र ह्येते सर्वे एकीभवन्तीत्युत्तरवाक्यात् ।

**3-3-10 अन्वयाधिकरणं**—यदि आनन्दादिसर्वगुणानां आत्मनि समन्वयः तर्हि आत्मशब्दाच्च इति पूर्वसूत्रविरोधः । तत्र हि आनन्दादि गुणानन्वय एव ह्युक्तः? मैवं-तत्र हि सर्वगुणानामुपसंहाररूपान्वयस्यैव विरोधः उक्तः न तु सच्चिदादिगुणानाम् ।

**3-3-11 कार्याख्यानाधिकरणं**—अलौकिकाः तस्य गुणा ह्युपास्याः अलौकिकं मुक्तिकार्यं यतोऽस्य । इति वेदोक्तानां विष्णुगुणानां मुमुक्षुभिः ध्येयत्वम् । वज्रहस्तः पुरन्दरः इति इन्द्रादिगुणानामिव विष्णुगुणानामपि वेदप्रतिपाद्यत्वेनालौकिकत्वसंभवः । कार्यस्य मोक्षस्याख्यानात् अपूर्वं—अलौकिकं गुणजातमुपसंहृत्य विष्णुः ध्येयः ।

**3-3-12 समानाधिकरणं**—त्रिविक्रमत्वादिगुणाः अलौकिका अपि कादाचित्काः । वाण्यपि त्रिविक्रमत्वादिगुणान्विहायैव उपास्ते । अतः चतुर्मुखव्यतिरिक्तैः स्वार्हालौकिगुणानामेवोपसंहारः कार्यः ।

**3-3-13 न वा विशेषाधिकरणं** — सर्वेषां आत्मशब्दे न विष्णूपासनं विहितम् । आत्मशब्दस्य सर्वगुणाभिधायित्वमस्ति । अतः सर्वगुणप्राप्तिः सर्वेषामविशिष्टेतिचेन्मैवम् । अधिकारितारतम्येन स्वस्वार्हसर्वगुणाभिधायकत्वमेवात्मशब्दस्येति अदोषात् ।

**3-3-14 संभृत्यधिकरणं**—उक्षा स द्यावापृथिवी सर्वेषु लोकेषु भाति । इति श्रुत्युक्तसंभृतिद्युव्याप्तिरूपगुणौ देवादिभिरेवोपास्यौ । देवादीनामुपास्यास्तु भृतिव्याप्त्यादयो गुणाः आनन्दाद्यास्तु सर्वेषां अन्यथाऽनर्थकृद्भवेत् । संयक्भरणं संभृतिः । द्युव्याप्तिः दिवा कान्त्या व्याप्तिः । दिवु-क्रीडा विजिगीषा व्यवहार द्युति स्तुति मोद मद स्वप्न कान्ति गतिषु इति पाठात् कान्त्यर्थकत्वम् ।

कामभक्त्याऽप्सरस्त्रीणां अन्येषां नैव कामतः ।
उपास्यः श्वशुरत्वेन देवस्त्रीणां जनार्दनः ।।
जारत्वेनाप्सरस्त्रीणां कासांचिदिति योग्यता ।
योग्योपासां विना नैव मुक्तिः कस्यापि सेत्स्यति ।।
अयोग्योपासनाकर्तुः अनर्थश्च भविष्यति ।
तस्मात्तु योग्यतां ज्ञात्वा हरेःकार्यमुपासनम् ।।
पतित्वेन श्रियोपास्यः ब्रह्मणा मे पितेति च ।
पितामहतयाऽन्येषां त्रिदशानां जनार्दनः ।।
प्रपितामहो मे भगवान् इति जर्वजनस्य तु ।

**3-3-15 पुरुषविद्याधिकरणं**—पुरुषसूक्तविद्या उत्तमविद्या । तत्र केषांचिदेव गुणाः आम्नाताः । अपेक्षितेतरगुणाः अपठिता अपि उपसंहार्याः ।

**3-3-16 वेधाद्यधिकरणं**—भिन्धि विद्धि श्रृणीहीति फलभेदेन सर्वशः । यत्यादीनां तेष्वयोगात् नाधिकारैकता भवेत् । अयोग्योपासनादीयुः अनर्थं चार्थनाशनम् । अतः अग्ने त्वं च यातुधानस्य भिन्द्धि इत्यादि गुणाः ब्रह्मनिष्ठैः अनुपसंहार्याः ।

**3-3-17 हान्यधिकरणं**—मुक्तस्यापि उपासना स्वेच्छया भवत्येव । एतत्साम गायन्नास्ते इत्युक्तेः । मुक्ता अपि हि कुर्वन्ति स्वेच्छयोपासनं हरेः । नियमानन्तरं विप्राः कुशाद्यैरप्यधीयते । फलस्य निष्पन्नत्वेपि आनन्दरूपफलार्थं कर्तुं शक्या उपासना । न प्रत्यवायश्चाकरणे ।

**3-3-18 छन्दाधिकरणं**—प्राप्तमोक्षस्य विदुषः भक्तिः कर्म च छन्दतः इष्टतो भवति । करणे अकरणे च विधि प्रत्यवाययोरभावात् । विष्णु क्रमान् क्रमते इति यागांगतया विष्णुक्रमो विहितः, तस्य यागस्य चानुष्ठानानन्तरं विष्णुक्रमादिकं इच्छया कुर्वन्ति न कुर्वन्ति च ।

**3-3-19 अनियमाधिकरणं** – ब्रह्मापासननिष्ठानां सर्वेषामपि मोक्षः । न कश्चित् ब्रह्मवित् सृतिमनुभवति । मुक्तो ह्येव भवति इत्यादिप्रमाणात् ।

**3-3-20 यावदधिकरणं**–स्वयोग्यतानुसारेण मुक्तौ आनन्दतारतम्यम् । ज्ञानं चोपासनं चैव मुक्तावानन्द एव च । यथाधिकारं देवानां भवत्येवोत्तरोत्तरम् ॥ आचारे तारतम्याच्च आनन्दे तारतम्यता । मुक्ति ज्ञात्वापि विष्णुं स्यात् शास्त्रं श्रुत्वा ततोऽधिकम् ॥ मुक्तौ सुखं तत्फलतः ततोऽप्यधिकमिष्यते । व्याख्यातुस्तु समं मुक्तौ सुखं नान्यस्य कस्यचित् । ततोऽधिकं तु देवानां मुख्या व्याख्याकृतो यतः । अक्षण्वन्तः कर्णवन्तः सखायः मनोजवेष्वसमा बभुवुः । न समो ब्रह्मणः कश्चित् मुक्तावपि कथञ्चन ।

**3-3-21 इयदामननाधिकरणं**—छान्दोग्ये नामादिभ्यः प्राणस्य उत्तमत्वं प्रतिपाद्यते । प्राणशब्दवाच्यः चतुर्मुखः तदधिकस्यानुक्तत्वेपि तज्जनकः विष्णुरस्ति । अतः श्रियं विष्णुं विना सर्वाधिकारिभ्यः उत्तमत्वम् ।

**3-3-22 व्यतिहाराधिकरणं**–यस्सत्येनातिवदति इत्युक्त्या प्राणादपि हरेः उत्तमत्वं उक्तम् ।

**3-3-23 सत्याधिकरणं**–कृतिस्त्वेव विजिज्ञासितव्या इत्युक्ताः कृत्यादयः परदेवतायाः स्वरूपभूताः गुणाः ।

**3 3-24 कामाद्यधिकरणं**—प्राणादुपरि, लक्ष्म्याः उत्कृष्टत्वात् कथं पाठाभावः, जन्मादिश्रवणं च कथम् ? उच्यते-संसारयोग्यानामेव अत्र पाठः । लक्ष्मीस्तु प्रकृतिशब्दवाच्या नित्यमुक्ता । अधिकप्रीत्या तत्समीपस्था विष्णौ अधिकं उपास्तिं करोति । राघवत्वेऽभवत् सीता इति रीत्या अवतारांश्च करोति ।

**3-3-25 तन्निर्धारणाधिकरणं** – ब्रह्मापरोक्ष्यज्ञानप्रतिबन्धकनिवृत्यर्थं श्रवणं मननं ध्यानं च कार्यम् । अज्ञानविपर्ययादि दर्शन प्रतिबन्धनिवृत्तिः श्रवणमननयोः फलम् ।

**3-3-26 प्रदानाधिकरणं**–केवलश्रवणादीनां न ब्रह्मज्ञानकारणत्वम् । गुरूपदिष्टज्ञानसहितश्रवणादीनामेव ।

**3-3-27 लिङ्गभूयस्त्वाधिकरणं**--गुरुप्रसादस्यैव विद्यासाधनत्वम्। गुरुप्रसादो बलवान् न तस्मात् बलवत्तरम् । तथापि श्रवणादिश्च

कर्तव्यो मोक्षसिद्धये । सत्यकामो जाबालः जबालां स्वमातरमामन्त्र्य गौतमस्याचार्यस्य समीपमगात्। तेन चोपनीतः तन्नियमनेन 'नासहस्रेणावर्तय' इति निर्दिष्टः चतुश्शताः गाः अरक्षणत् । वर्षसहस्रपूर्त्यनन्तरं ऋषभ, अग्नि हंस मुद्गुभिः प्रसन्नैः ब्रह्मविद्योपदेशं प्राप्तः । ततः आगत्याचार्यं ननाम । ब्रह्मविदिव त्वं भासि । तुभ्यं कः उपदिदेश इत्याचार्येण पृष्टः, मनुष्या एव नत्वन्ये इत्याह । आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत् इति हेतोः पुनः उपदेशं कुरु इति प्रार्थनया पुनरपि गौतमेनोपदिष्टब्रह्मविद्य आसीदिति कथा ।

3-3-28 **पूर्वविकल्पाधिकरणं**–गुरुपदेशं प्राप्तेनापि पुनः उत्तमगुरुप्राप्तौ तस्मादपि उपेदशः स्वीकार्यः ।

3-3-29 **विद्याधिकरणं**–तमेतं विदित्वा इति विद्याया एव मोक्ष साधनता । न कर्मणः । सर्वान् परो माययाऽयं सिनीते दृष्ट्वैतं मुच्यते नापरेण इति प्रमाणात् । आपरोक्ष्यज्ञानस्यैव मोक्षसाधनत्वम् । न केवलविद्यायाः ।

3-3-30 **श्रुत्यधिकरणं**–कर्मणैव हि संसिद्धि इति स्मृतिः । तमेव विदित्वा इति श्रुतिः । उभयत्रावधारणं चास्ति । अथापि श्रुतेरेवप्रावल्यम्। कर्मणा बध्यते जन्तुः विद्ययैव विमुच्यते इति च। विशेषण विशेष्याभ्यां क्रियया च समन्वितः । अयोगं योगमपरैः अत्यन्तायोगमेव च । व्यवच्छिनत्ति धर्मस्य निपातो व्यतिरेकतः इति एवकारस्य त्रिविधार्थकत्वात् कर्मणैवेति एवकारः स्वायोगरूपकर्मसंबन्धभावव्यवच्छेदकः ।

3-3-31 **अनुबन्धाधिकरणं** — ब्रह्मापरोक्ष्यज्ञानस्य शमादिरपि हेतुः ।

3-3-32 **प्राज्ञाधिकरणं**–उपासनातारतम्यात् उपास्यब्रह्मदर्शनेपि तारतम्यम् ।

3-3-33 **न सामान्यधिकरणं** – रामादिदर्शनमात्रेण मुक्तिः । स्वात्मार्हदर्शनादेव मुक्तिः । महर्लोकादिप्राप्तिमात्रमपि न मुक्तिः ।

3-3-34 **परेणाधिकरणं**–परमात्मनो मुख्यत्वं साधनत्वम् । भक्ते-रवान्तरसाधनत्वमेव ।

3-3-35 **एकाधिकरणं** – सुग्रीवार्जुनादीनां सूर्येन्द्राद्यंशत्वात् अंशानामुपासने अनादियोग्यता नास्तीति पूर्वपक्षनिरासनपरम् । अंशिनस्तु प्रथक् जाताः अंशास्तस्यैव कर्मणा पुनरैक्यं प्रपद्यन्ते नात्र कार्या विचारणा ।

3-3-36 **अङ्गावबद्धाधिकरणं** — अङ्गभुताधमदेवतागुणानां उत्तमदेवोपासने उपसंहारः शते पञ्चाशन्न्यायात् । न तु विपर्ययः ।

3-3-37 **भूमज्यायस्त्वाधिकरणं** – वैश्वानरोपासनं समस्तस्यैव ।

3-3 38 **नानाशब्दाधिकरणं**—भूमगुणविशिष्टोपासनं नाना । तारतम्यस्य यथायोग्यं प्रतीतेः ।

3-3-39 **विकल्पाधिकरणं**–नृसिंहरामादि बिम्बोपासने व्यवस्थितविकल्पः । बिशिष्टफलत्वात् दुरितादिनिवृत्तिरूपविशेषफलवत्वात् ।

3-3-40 **काम्याधिकरणं** – काम्यफलसाधनभूता गुणाः अकामैः मुमुक्षुभिः नोपास्याः । फलाभिलाषिविषये तूपास्याः । केवलभगवत् प्रीत्यर्थं मुमुक्षुविषयेप्युपास्यता ।

3-3-41 **अङ्गाधिकरणं**—चक्षोस्सूर्यो अजायत इति प्रतिपन्नाः विष्णवङ्गभूताः सूर्यादिदेवताः परमेश्वराङ्गत्वेनोपास्याः ।

3-3-42 **न वाधिकरणं**–देवतेतरैः मुमुक्षुभिः अङ्गदेवतोपसंहारः कार्यो न भवति ।

## चतुर्थः पादः

**3-4-1 पुरुषार्थाधिकरण**–ज्ञानादेव पुरुषार्थावाप्तिः । ज्ञानादेव स्वर्गः । ज्ञानादेवापवर्गः । ज्ञानिन एव कर्माचरणे अधिकं फलम् । धर्मपुत्रादयो हि ज्ञानाधिकाः कर्म कुर्वाणाः अधिकं फलं लभन्ते स्म ।

**3-4-2 असार्वत्रकाधिकरणं**–ज्ञाने च सर्वेषामधिकारः । वैष्णवस्यैव ज्ञानेऽधिकारः । यथा नवकोटिदेवमध्ये शतसंख्याकदेवगणस्यैव सोमयागेऽधिकारः ।

3-4-3 **नाविशेषाधिकरणं**–अर्थे मनुष्याणां धर्मे ऋषीणां विज्ञाने देवावामधिकारः । सर्वत्रतारतम्यनत्वात् ।

3-4-4 स्तुत्यधिकरणं–ज्ञानिनः यथेष्टाचरणं तस्य स्तुत्यर्थम् । अनुमतिमात्रं वा भवेत् । कामचाराणां ज्ञाने नाधिकार एव । जैमिनिस्तु कामाचरणं मन्यते ।

3-4-5 **उभयलिङ्गाधिकरणं**–ज्ञानयोग्या एव ज्ञानं प्राप्नुवन्ति । देशकालगुरुपसदनाद्यङ्गोपेत श्रवणमननादिप्रयत्नः विपरीतफलक एवा योग्यानाम् । इन्द्रस्य विरोचनस्य च चतुर्मुखोपदेशस्समः संयग्ज्ञानं इन्द्र एव प्राप्तः विरोचनस्तु विपरीत ज्ञानमाप । देवानामेव-दैवीसंपत्तिप्राप्तिः असुराणामासुरोसंपत्तिप्राप्तिरेव ।

3-4-6 **आधिकारिकाधिकरणं**–ब्रह्माद्यैश्वर्यं प्राप्तिः परमात्मैश्वर्यं प्राप्तिश्च ज्ञानिभिरपि नाशासनोया । तथा चेत् पतेयुः। न देवपदमन्विच्छेत् कुत एव हरेर्गुणान्। इच्छन्पतति पूर्वस्मात् अधस्तात्यत्र नोत्स्थितिः। स्वकीयमच्छिमात्रं तु राजाद्याः पातयन्ति हि । एवमेव सुराद्याश्च हरिश्च स्वपदेच्छुकम् । अन्यत्र शुभमाकांक्षन् न पतेदविरोधतः इति ।

3-4-7 **फलश्रुत्यधिकरणं**–देवानामेव ब्रह्मवित्वं ब्रह्मप्राप्तिः ज्ञानवत्वं च इत्यात्रेयमतम् । सन्त्रयागेषु सर्वे यजमानाः सर्वे ऋत्विजः इति न्यायात् प्रजानामपि ज्ञानसत्वात् ब्रह्मप्राप्तिरिति औडुलोमिः ।

3-4 8 **कृत्स्नभावाधिकरणं**–गृहस्थानामेव मुक्तिरिति छन्दोग्ये । अत्र मुक्त्युपसंहारः कृत्स्नगृहस्थान् देवानपेक्ष्यैव । कृत्स्ना ह्येते गृहिणो देवाः कृत्स्ना ह्येते यतयोत, एतेषां न पुत्रादायमुपयन्ति नचैते विसृजन्तीति श्रुतेः । गृहस्थानां यतीनामेवात्र श्रवणात् नान्याश्रमनिष्ठानां इति चेत् ? देवेषु सर्वाश्रमश्रुतेः सर्वाश्रमिणामेव । देवा एव ब्रह्मचारिणः देवा एव गृहस्थाः देवा एव वनस्थाः इत्यादिश्रुतिः ।

3-4-9 **अनाविष्कराधिकरणं**–सच्छिष्यायैव रहसि ब्रह्मोपदेशः कार्यः । सभायां चत्वरादिस्थानेषु गोप्यः । विद्या हवे ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि । अनार्यकायानृजवे शठाय । नमां ब्रयाः, ऋजवे ब्रूहि नित्यम् ।

**3-4-10 ऐहिकाधिकरणं** —आत्मा वा अरे द्रष्टव्यः इति ब्रह्म दर्शनं प्रारब्धप्रतिबन्धाभावे इहैव जन्मनि। तत्सत्वे जन्मान्तरेपि वा श्रुत्वात्मानं मतिपूर्वं ह्युपास्य इहैव दृष्टिं परमस्य विन्देत्। यद्यारब्धं कर्व निबन्धकं स्यात् प्रेत्यैव पश्येद्योगमेवान्ववेक्ष्य।

**3-4-11 मुक्तिफलाधिकरणं**–मुक्तिरूपफलमपि प्रारब्धकर्माभावे शरीरपातानन्तरमेव भवति। तत्सत्वे जन्मान्तरेषु इत्यनियमः।

ब्रह्मचर्मशिरः पट्टी दिक्पालोऽध्वांगभूषणः।
द्वादशार्कशिरोदामा रुद्रशीर्षैकनूपुरः॥
नृसिंहरूपी सर्वेषां भित्वा ताभिरलंकृतः।
नृत्यते प्रलये देवः स्वयं कृष्णादिरूपवान्॥
अदग्ध्वैव तनुं याति नित्यानन्दस्वरूपतः।
लक्ष्मीकान्त समन्ततोपि कलयन् नैवेशितुस्ते समम्।
पश्याम्युत्तमवस्तु दूरतरतोपास्तं रसोऽयोऽष्टमः॥
यद्रोषोत्कर दक्षनेत्रकुटिलप्रान्तोत्थिताग्निस्फुरन्-
खद्योतोपम विष्पुलिङ्गभसिता ब्रह्मेशशक्रोत्कराः।

इत्याचार्यवचनम्। पौण्ड्रकवासुदेववत् तन्नामधारिण असुरा एव ते। अत एव श्रीनृसिंहरोषाग्निना दग्धाः। इति।

## चतुर्थाध्यायः

**4-1-1 आवृत्यधिकरणं** – श्रोतव्य इत्यादिना विहितस्य श्रवणादेः ध्यानावृत्तिः कार्या। ऐतदात्म्यं इत्यसकृदुपदेशात् भृगुर्वै वारुणिः इति पुनः पुनः गुरूपसत्त्या श्रवणावृत्तिदर्शनात्। नित्यशः श्रवणं चैव मननं ध्यानमेव च। कर्तव्यमेव पुरुषैः ब्रह्मदर्शनमिच्छुभिः इति प्रमाणाच्च।

**4-1-2 आत्माधिकरणं**–उपासकैः आत्मा विष्णुः इति ध्येयः मम स्वामी।

**4-1-3 न प्रतीकाधिकरणं** — नामादिप्रतीके ब्रह्मदृष्टिः न कार्या। तत्र ब्रह्म वर्तते इति ध्येयम्। नामादिप्राणपर्यन्तं उभयोः

प्रथमात्वतः ऐक्यदृष्टिरिति भ्रान्तिः अबुधानां भविष्यति। नामादि-स्थितिरेवात्र ब्रह्मणो हि विधीयते। सर्वथा प्रथमा यस्मात् सप्त-म्यर्था ततो मता।

**4-1-4 ब्रह्मदृष्ट्यधिकरणं**–सर्वैः विष्णावेव ब्रह्मदृष्टिः कार्या।

**4-1-5 आदित्याधिकरणं**–आदित्यादिदेवानां विष्णवङ्गभूतचक्षु-रादौ आदित्यादिमतयः कार्याः। यस्य यत उत्पत्तिः तस्य तत्र लयः चक्षोस्सूर्यो अजायत इत्यादि।

**4-1-6 आसीनाधिकरणं**—उपासनं आसीन एव कुर्यात्।

**4-1-7 आप्रयाणाधिकरणं**–मुक्तिपर्यन्तं विष्णूपासनं कर्तव्यम्।

**4-1-8 तदधिगमाधिकरणं**—उपासकस्य ब्रह्मदर्शने उत्तरपापा-श्लेषः पूर्वपापविनाशश्च। भोगेन प्रारब्धं कर्म क्षपयित्वा अवसाने स्वस्वयोग्यां मुक्तिमाप्नुवन्ति ज्ञानिनः।

**द्वितीयः पादः**

**4-2-1 वागधिकरणं** – वागभिमान्युमादेवता मनोभिमानिरुद्रे-विलीयते। वाचो मनोवशत्वदर्शनात्।

**4-2-2 मनःप्राणाधिकरणं**—मनोभिमानी रुद्रः वायौ वायोर्वावि रुद्रः उदेति वायौ विलीयते तस्मादाहुः वायुर्देवानां श्रेष्ठः इति।

**4-2-3 अध्यक्षाधिकरणं**–प्राणः अध्यक्षे परमात्मनि लीयते। सर्वे प्राणमुपगच्छन्ति प्राणः परमुपगच्छति। इति श्रुतेः।

**4-2-4 भूताधिकरणं**—भूतेषु देवा विलीयन्ते इति प्रमाणात् अन्येषां देवानां भूतेषु लयः।

**4-2-5 नैकस्मिन्नधिकरणं**–सर्वेषां देवानां नैकस्मिन् भूते लयः पृथिव्यां ऋषयो लीयन्ते वरुणेऽश्विनौ इत्यादि श्रुतिः।

**4-2-6 समानाधिकरणं**—लक्ष्मीः विष्णुना समाना देशकाल-व्याप्तेः। संसाराभावाच्च। असमो वा एष भवति इति लक्ष्म्याः साम्यनिषेधो नास्ति। जीवस्यैव विष्णुना साम्यनिषेधः। सर्वे ह्येते अणवो जायन्ते म्रियन्ते च छिद्रा ह्येते भवन्ति इति श्रुतिः।

4-2-7 **तानि पराधिकरणं**—भूतेषु लीयन्ते इत्युक्ता देवाः चतुर्मुखद्वारा विष्णौ संपद्यन्ते ।

4-2-8 **अविभागाधिकरणं**—मुक्तौ जीवस्य सत्यकामत्वादयः श्रुताः विष्णिवच्छानुगुण्येन भवन्ति ।

4-2-9 **तदेकोधिकरणं**—उत्क्रान्तिकाले विष्णुप्रकाशितद्वारः ब्रह्म रन्ध्रेण निष्क्रामति । रात्रावपि रश्मिसंबन्धो विद्यते । दक्षिणायनमृतानामपि विष्णुप्राप्तिः ।

4-2-10 **योग्यधिकरणं**-ज्ञानयोगी गत्यनुस्मरणात् ब्रह्म गच्छति कर्मयोगी गत्यनुस्मरणात् चन्द्रम् । ज्ञानयोगिनां कर्मय्रोगिनां च गत्यनुस्मरणे जन्मान्तरे स्मरणं प्राप्थ ।

## तृतीयः पादः

4-3-1 **अर्चिराधिकरणं**—ज्ञानी अर्चिरादिना मार्गेण । कर्मी धूमादिना । वायुस्तु आतिवाहकः । न मार्गः ।

4-3-2 **वायुशब्दाधिकरणं** — देहादुत्क्रान्तस्य ज्ञानिनः अर्चिः प्राप्त्यनन्तरं वायुप्राप्तिः । अर्चिषो वायुं गच्छति इति श्रुतेः ।

4-3-3 **तटिदधिकरणं**—मासेभ्यः संवत्सरं संवत्सरात् वरुणलोकं इति कौण्डिन्य श्रुतौ पाठक्रमः । संवत्सरात् तटितमागच्छति तटितः प्रजापतिलोकं गौपवनश्रुतौ संवत्सरात् तटितः पाठः । ततः परं प्रजापतिलोकस्य । एवं विरोधेपि तटित उपरि वरुणः । तयोरेव संबन्धात् ।

4-3-4 **आतिवाहिकाधिकरणं**—स वायुमागच्छति इति द्वितीयप्राप्यः आतिवाहिको वायुः उक्तः । विद्युत् तत्पतिं वायुमुपगम्य तेनैव ब्रह्म गच्छति इति अन्तेपि वायुरुक्तः । पूर्वोक्त एवायमपि आतिवाहिको वायुः ।

4-3-5 **वैद्युताधिकरणं** – विद्युत्पतिना वायुनैव ज्ञानिनां ब्रह्म समीपप्रापणम् ।

4-3 6 **कार्याधिकरणं** — विद्युत्पतिः कार्यं ब्रह्म गमयतीति बादरिमतं कार्यं ब्रह्मेति जैमिनिमतम् । अप्रतीकालम्बनान् परं नयतीति बादरायणमतम् ।

**चतुर्थः पादः**

4-4-1 **संपद्याधिकरणं**—मुक्तः संसारनदीं तीर्त्वा ब्रह्म संपद्य अविहाय स्वस्वयोग्यानन्दान् अनुभवति ।

4-4-2 **मुक्ताधिकरणं**—स तत्र पर्येति इत्यत्र तच्छब्दस्य मुक्तपरत्वात् स एव कामाननुभवति ।

4-4-3 **आत्माधिकरणं** – परं ज्योतिरुपसंपद्य इत्यत्र ज्योतिश्शब्दार्थो विष्णुः । नत्वग्निसूर्यादयः । परं ज्योतिः परं ब्रह्म परमात्मात्मका गिरः । सर्वत्र हरिमेवैकं ब्रूयुः नान्यं कथञ्चन ।

4-4-4 **अविभागाधिकरणं** – मुक्तः विष्णुना सह तत्रत्यान् भोगाननुभवति । ये भोगाः परमात्मना भुज्यन्ते ते भोगाः मुक्तानामपि ।

4-4-5 **ब्राह्माधिकरणं**—मुक्तः कर्मप्राप्तदेहं परित्यज्य ब्रह्मशरीरान्तर्गतस्सन् ब्रह्मणा सह भोगान् भुङ्क्ते इति जैमिनिः । चिन्मात्र एव एष भवति इति औडुलोमिमतम् । बादरायणः उभयमपि ब्रवीति ।

4-4-6 **सङ्कल्पाधिकरणं**—पित्रादिभोगप्राप्तौ मुक्तानां निमित्तान्तरापेक्षा न विद्यते ।

4-4-7 **अनन्याधिपत्यधिकरणं**—मुक्तः स्वोत्तमाचार्यादीन् विहाय अनन्याधिपतिः । आचार्यादिभ्यः अन्यः अस्य पति र्न भवति ।

4-4-8 **अभावाधिकरणं**—मुक्तः शरीरं परिगृह्य सुखादिकमनुभवति शरीरं च त्यजति दुःखं तु नानुभवति । यथा दीपः दीपिकादिषु प्रविष्टः दीपिकास्थं तैलं गृह्णाति तैलादिगत काष्ण्यादि न तथा ।

4-4-9 **जगद्व्यापारवर्जाधिकरणं**—मुक्तः सर्वान्कामानवाप्नोति अमृतश्च । तथापि सृष्ट्यादिव्यापारव्यतिरिक्तभोगानेवानुभवति ।

4-4-10 **स्थित्यधिकरणं**—मुक्तस्य आनन्दादीनां वृद्धिः ह्रासश्च न विद्यते ।

4·4-11 अनावृत्यधिकरणं—न च पुनरावर्तते न च पुनरावर्तते सर्वान् कामानाप्त्वा अमृतस्समभवत् इति श्रुतिः । स्वाभिमानि देवता परंपराद्वारा चतुर्मुखं प्राप्य तदुपदेशेन ज्ञानाधिकस्सन् तेन सह विष्णुं प्राप्य नित्यामृतः आनन्दी भवति । पुनस्संसारं नाप्नोति ।

मुक्तिर्ज्ञात्वापि विष्णुं स्यात् शास्त्रं श्रुत्वा ततोधिकम् ।
मुक्तौ सुखं तत्पठतः ततोऽप्यधिकमिष्यते ।।
व्याख्यातुस्तु समं मुक्तौ सुखं नान्यस्य कस्यचित् ।
ततोऽधिकं तु देवानां मुख्या व्याख्याकृतोयतः इति मनुष्याणां मुक्तौ तारतम्यमुक्तमिति ।

## 49. विशिष्टाद्वैतमतानुयायि सूत्रजातम् ।

भगवान् बादरायणः विशिष्टाद्वैतमतमनुसृत्यैव सर्वमपि सूत्रमतनोत् इति सूत्रपरामर्शे निश्चीयते । स्वस्वमतमवलम्ब्यैव सूत्रात्मकरोदिति तत्तन्मतस्थाः हठादेव वदेयुः । न तत् श्रद्धेयं वचनम् । यतः सूत्रेषु तत्तन्मतखण्डनप्रकारा एव बहुत्र दृश्यन्ते । अतो वेदोपबृंहणार्थं पुराणादीनिव वेदान्तविचारात्मकं न्यायनिबन्धनरूपं सूत्रजातं विशिष्टाद्वैतमतमवलम्ब्यैव प्रणिनायेति विशिष्टाद्वैतमतानुयायी व्यासः इति सुदृढं वक्तुं शक्यते ।

विशिष्टाद्वैतमते इमे अर्थविशेषाः प्रधानभूताः ।

1 जगद्ब्रह्मणोः शरीरात्मभावः, 2 ईश्वरचेतनाचेतनरूपतत्त्वत्रयं, 3 प्राप्यस्य ब्रह्मणोरूपमित्याद्युक्तार्थपंचकम् । 4 ईश्वरजीवभेदः, 5 शेषशेषिभावः अत्रन्याधिपतिः । 6 शेषभूतस्य मोक्षे पृथक्स्थित्या कैंकर्यकारणम् । 7 जीवब्रह्मणोः विशिष्ट वेषेणैवैक्य ब्रह्मणः सगुणात्वमित्यादीनि । एतानि सर्वाण्यपि सूत्रे संयगेत्रोपपादितानीति बादरायण कृतं सर्वमपि सूत्रं विशिष्टाद्वैतमतस्थापनव्यग्रमेव । एवमभिन्ननिमित्तोपादानत्वमपि सूत्रारूढम् ।

1 तथा हि—एकैकस्मिन्नपि तन्त्रे स्वैरङ्गीकृताः इतरसिद्धान्तिभिरनङ्गीकृताः बहवोऽर्थ विशेषाः विद्यन्ते । एतेषां प्रतितन्त्रमितिनाम।

तत्र विशिष्टाद्वैतमते जगद्ब्रह्मणोः शरीरात्मभावः इति यदुच्यते तदिदं न सर्वैः सिद्धान्तिभिः अङ्गीकृतम्। केवलं विशिष्टाद्वैतमतस्थैरेव। एवं बहवः अर्थाः एतत्सिद्धान्ते विद्यन्ते। तत्रापि अयमंशः प्रधानभूत इति प्रधानप्रतितन्त्रशब्देन व्यपदिश्यते। एतदेव मनसि कृत्य श्रीमद्वेङ्कटनाथाः रहस्यत्रयसारे प्रधानप्रतितन्त्राधिकारे—आधेयत्वप्रभृतिनियमैरादिकर्तुः शरीरं इति पद्यं रचयामासुः।

इदमेव शरीरात्मभावं प्रधानप्रतितन्त्रमुपजीव्य सर्वमतमपि खण्डयन्ति इति इतरमतखण्डने प्रधानहेतुभूतं च। सर्व श्रुत्यानुगुण्य संपादने प्रधानभूतं च। जीवब्रह्मणोः भेदाभेदबोधक श्रुतीनां परस्परविरोधोपि एतदुपजीव्यैव परिह्रियते। अतः ब्रह्मजगतोः शरीरात्मभावरूपप्रधानप्रतितन्त्रमेकमेव सर्वमतमपि वैदिकं अवैदिकं वा सर्वात्मना नाशयितुं प्रभवतीति। अत एवोक्तं श्रीमद्भिः वेङ्कटनाथैस्तत्रैव यद्येतं यतिसार्वभौमकथितं—इत्यादि।

इदं चैतन्मतस्थैः न स्वबुध्या कल्पितं, नापि श्रुत्यन्यथानुपपत्त्या ऊहितं, परंतु स्पष्टतर बहुविधश्रुतिप्रमाणसिद्धमित्यङ्गीकृतम्। यः पृथिव्यां तिष्ठन् यः पृथिव्या अन्तरः यं पृथिवी न वेद यस्य पृथिवी शरीरं इत्यादिषु प्रतिवस्तु निर्दिश्य सर्ववस्तूनामपि चेतनाचेतनानां ब्रह्मशरीरत्वं प्रतिपादितं ह्यस्ति। अत्र प्रतिपर्यायं शरीरं शरीरं इति निर्देशादभ्याससिध्या सर्ववस्तूनां ब्रह्मशरीरत्वबोधने श्रुतोनामादरातिशयोपिसूच्यते।

अत्र लोकव्युत्पत्तिमुपेक्ष्य शरीरशब्दस्य गौणार्थकत्वं योगबलेन अन्यार्थकत्वं च न कल्पनार्हम्। एतदुपबृंहणस्मृत्यादिषु गौणमर्थमनुक्त्वा साक्षात् शरीरस्यैव बोधनात्। यदम्बुवैष्णवः कायः तत्सर्वं वै हरेस्तनुः इत्यदिभिः शरीररूपार्थबोधककायोतनुप्रभृतिशब्दैः प्रतिपादनाच्च। अतो लोके मनुष्यशरीरं देवशरीरं इत्यादौ शरीरशब्दः यदर्थवाचकः तदर्थविशेषमुपजीव्यैव वेदेपि शरीरशब्दः प्रयुक्तः इति निश्चीयते। एतादृशशरीरबोधक श्रुतिरेव घटकश्रुतिरित्यप्यभिधीयते।

जोवपरयोः भेदाभेदबोधक श्रुतीनां परस्परविरोधपरिहारमुखेन सामञ्जस्यतया बोधनात् ।

एतादृशः जगद्ब्रह्मणोः शरीरात्मभावः अंशो नाना व्यपदेशादित्यादि सूत्रयता बादरायणेन स्पष्टमेव प्रतिपादितः जगतो ब्रह्मांशत्ववादिना । अत्रांशत्वं शरीरात्मभावरूपं इत्येतत् नानाव्यपदेशादन्यथाचापि दाशकितवादित्वमधीयते इति सूत्रखण्डेनैव स्पष्टं प्रतिपादितं भवति । तत्र यया सरण्या अंशत्वोपपादने भेदाभेदविरोधः परिहृतो भवति तामेव सरणि माश्रित्यांशत्वमुपपादनीयम् । साच सरणिः शरीरात्मभावरूपा । अशत्वं रामकृष्णा...दित्यादि सारावल्यां स्पष्टमिदं प्रत्यपादि ।

अपीतौ तद्वत्प्रसङ्गादसमञ्जसं न तु दृष्टान्तभावादित्यादावपि शरीरात्मभावः अङ्गीकृतः । ननु जगद्ब्रह्मणोः अत्यन्त विलक्षणयोः सारूप्याभावात्कार्यकारणभाव अनुपपन्नः इत्याशंक्य विलक्षणयोरपि कृमिमाक्षिकयोः कार्यकारणभावदर्शनात् अत्राप्युपपन्नमित्युक्तम् । एवं चेत् कार्यभूतकुण्डलादिदोषाणां कारणसुवर्णे इव जगद्गतदोषाणां कारणब्रह्मणि प्रसक्तिः इति शंका आपतिता । तत्परिहाराय न तु दृष्टान्तभावात् इति सूत्रं प्रवृत्तम्। अनुपपत्तेस्तु न शारीरः इति स्वसूत्रे एव शारीरनिर्देशात् स एव शारीरो जीवदृष्टान्तत्वेन विवक्षित इति ज्ञायते । एवं च देवमनुष्यादि शरीरविशिष्टजीवे शरीरगतदोषाणां यथा न प्रसक्तिः तथा अत्रापि इत्युक्तौ दृष्टान्तस्वारस्यात् जगच्छरीरकब्रह्मणोऽपि जगद्गतापुरुषार्था गमत्वासंभवः इति ज्ञायते । अनेन जगतः ब्रह्मशरीरत्वं स्पष्टमेव प्रतिपादितं भवतीति ।

अन्तर्याम्यधिदैव...इति सूत्रं प्रकुर्वाणो बादरायणः स्पष्टमेव जगतः ब्रह्मशरीरत्वं उक्तवान् । अत्र अधिदैवाधिलोकादिषु इति पदस्वारस्येन तच्छिन्हितवाक्यानां परामशात् तेषु सर्वजगतां ब्रह्मशरीरत्वप्रतिपादनध्रौव्यादिति ।

तदनन्यत्वमारंभणशब्दादिभ्यः इतीदमपि सूत्रं शरीरात्मभावसाधकं भवति । अत्र पटवच्च इति सूत्रं सर्वात्मना शरीरत्वसूचकम् ।

एवं चराचरव्यपाश्रयस्तु...इति सूत्रेपि अयमर्थः स्पष्टः। अत्र हि सर्वशब्दानामपर्यवसानवृत्या ब्रह्मवाचकत्वं ब्रह्मण्येव मुख्यत्वं च प्रतिपादितम्। लोके शरीरातिरिक्तजीवस्य यावता न प्रतिपत्तिः तावत् देवादिशब्दाः शरीरमात्रविश्रान्ताः। अतिरिक्तजीवप्रतिपत्तौ तु त एव शब्दाः देवादिशरीरविशिष्टजीववाचकाः। जीवातिरिक्तपरमात्मनोपि प्रतिपत्तौ त एव शब्दाः देवशरीरकजीवशरीरकपरमात्मपराः इति। अतः देवशरीरस्य जीवस्य च यः संबन्धः स एव संबन्धः जीवस्य परमात्मनोपि इति परमात्मशरीरत्वमवर्जनीयम्। अत एव हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति श्रुतिरुपपद्यते। एवमन्यानि बहूनि सूत्राणि शरीरात्मभावबोधकानि समुल्लसन्ति। विस्तरभयान्नेह प्रस्तूयन्ते। विस्तरस्त्वन्यत्र द्रष्टव्यः।

2. तत्त्वत्रयं—ईश्वरः जीवः अचेतनमिति तत्त्वत्रयं विशिष्टाद्वैतिनः अङ्गीकुर्वन्ति। भोक्ता भोग्यं प्रेरितारं च मत्वा इति श्रुतिः इदं तत्त्वत्रयं विभज्य प्रदर्शयति। प्रधान, क्षेत्रज्ञ पतिर्गुणेशः इत्यादि श्रुतिवाक्यान्यपि तत्त्वत्रयविभागे प्रमाणानि भवन्ति। अस्य तत्त्वत्रयस्य विभज्य ज्ञाने एवामृतत्वप्राप्तिः इत्यपि ता एव श्रुतयो वदन्ति। पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति इत्याद्याः श्रुतयोपि। एवं तत्त्वत्रयविभागकरणात् तत्त्वानां परस्परसांकर्यमनुपपन्नं इति निश्चप्रचम्। परस्परासमीकीर्णधर्मवत्पदार्थप्रदर्शनं हि विभागः। अतो जीवस्य ईश्वरस्य प्रधानस्याचेतनस्य च लक्षणं पृथग्पृथग्भवति। तेन तेन लक्षणेन प्रयोजनविशेषोपि सिध्यति। तदुक्तम्—

प्रकृत्यात्मभ्रान्तिर्गलति... ... ...इति।

अचेतना परार्था च नित्या सततविक्रिया। त्रिगुणा कर्मिणां क्षेत्रं प्रकृतेः रूपमुच्यते इति प्रकृतिलक्षणमुक्तम्। अणुत्वेसति चेतनत्वं, स्वतः शेषत्वे सति चेतनत्वं जीवलक्षणं, विभुत्वे सति चेतनत्वं ईश्वरलक्षणं इति लक्षणमनुसन्धेयम्। एवं लक्षणप्रतिपन्नानां

त्रयाणां वस्तूनां परस्परं भिन्नत्वात् एतेषामैक्यं न प्रदर्शयितुं शक्यते। प्रमाणविरुद्धमपि।

अतः ब्रह्मैकमेव सत्यं तदतिरेकि चेतनाचेतनं सर्वं तस्मिन्परिकल्पितं तदेकतापन्नमिति वचनमितरेषां दुरुपपादम्। सूत्रकारोपि—अधिकं तु भेदनिर्देशात्, अश्मादिवच्च तदनुपपत्तिः इति सूत्रद्वयेन अर्थमिमं स्पष्टमेव प्रदर्शयामास। ज्ञाज्ञौ द्वावजावीशनीशौ, द्वासुपर्णा-इति सर्वज्ञत्व, अल्पज्ञत्व, सुखदुःखादिकर्मफलभोक्तृत्व तदभोक्तृत्वादिपरस्पर-भेदकविरुद्धधर्माणामुभयोः प्रतिपादनात् भेदः स्फुटप्रतिपन्न एव। तत्वमसीति सामानाधिकरण्यनिर्देशस्तु ऐतदात्म्यमिदं सर्वं इत्यादि सामानाधिकरण्यनिर्देशवदन्यपर एव। तत्र हि, इदं सर्वं इति सर्वपदोक्तानां काष्ठलोष्ठपाषाणादीनां ऐतदात्म्यं इति श्रुतं ब्रह्मतादात्म्यं स्वरूपैक्य रूपं नोपपद्यते जडाजडयोः स्वरूपैक्यायोगात्। अतः स आत्मा इत्यनन्तरवाक्यश्रुत शरीरात्मभावरूपमेव तादात्म्यं तदिति वक्तव्यम्। एवं रूपमेव तत्त्वमसीति श्रुततादात्म्यमपि हेयसंबन्धार्हं तदनर्हं जीव-ब्रह्मणोः स्वरूपतः ऐक्यासंभवात्। अतः जीवब्रह्मणोः स्वरूपैक्यं अचेतन ब्रह्मणोरिव न प्रामाणिकं भवितुमर्हति। एवमत्र सूत्रकारः स्पष्टमेव तत्त्वत्रयविभागं प्रतिपादयामास।

अथातो ब्रह्मजिज्ञासा इति प्रथममेव सूत्रप्रणेता तापत्रयातुरैरमृतत्वाय ब्रह्मणोजिज्ञासारूपत्वं ब्रुवन् उपासकोपास्ययोः ब्रह्मजीवयोः भेदं स्फुटं प्रकटीचकार। कर्मकर्तृव्यपदेशाच्च इत्येकमेव सूत्रमत्र पर्याप्तं भवति। आकाशस्तल्लिङ्गात् अत एव प्राणः ईक्षतेर्नाशब्दं कारणत्वेनचाकाशादिषु आकाशोऽर्थान्तरत्वादिव्यपदेशात् अनुपपत्तेस्तु न शारीरः नानुमानमतच्छब्दात् प्राणभृच्च इत्यादिभिः जगत्कारणस्य परमात्मनः चेतनाचेतनविलक्षणत्वं ब्रुवता बादरायणेन तत्त्वत्रय-विभागः सम्यगेव प्रादर्शि॥

यद्यपि नेह नानास्ति किंचन, एकधैवानुद्रष्टव्यम् इतिवाक्यम्। अत्रापाततो दर्शने ब्रह्मातिरिक्तवस्त्वभावस्य, सर्ववस्तूनां ब्रह्मैक्यस्य च

प्रतिपत्ति र्भवतीव । अथापि एतद्वाक्यानन्तरं सर्वस्याधिपतिः स न साधुना कर्मणा भूयान् नो एवासाधुना कर्मणा कनीयान् एष सर्वेश्वरः एष भूताधिपतिः एष भूतपालः एष सेतुर्विधरणः एषां लोकानामसंभेदाय इति श्रवणात् तैः सर्वलोकपतित्वप्रतिपादनाच्च, सर्ववस्तुसद्भावस्य ब्रह्मणः तदतिरिक्तत्वस्य प्रतीतिरवर्जनीया । अतः अब्रह्मात्मकवस्तुनिषेधपरैव पूर्वोदाहृतश्रुतिरित्यवसेयम् । एतत्सर्वमभिप्रेत्य पत्यादिशब्देभ्यः इत्यसूत्रयत् बादरायणः । अनेन मुक्तजीवापेक्षयापि परमात्मनो भेदः साधितः ।

भेदव्यपदेशाच्चान्यः इत्यन्यशब्दं प्रयुञ्जानः सूत्रकारः जीवेश्वरभेदं स्वाभिमतं विशदमेव प्रकटयामास । नेतरोऽनुपपत्तेः इति मुक्तभेदमपि कण्ठत एव प्रोवाच ।

गुहां प्रविष्टात्मानौ हि इति सूत्रयन् द्विवचननिर्देशेन जीवपरयोः भेदं स्वाभिमतमाविष्करोति स्म । जीवपरयोः ऐक्यवादी कथमिव शास्त्रसरणिं सूत्रशैलींचापरित्यजन् सूत्रमिदं स्वाभिमतपरं व्याकुर्यात् । इदमेकमेव पर्याप्तं मतान्तरखण्डने । व्यावहारिकसत्यत्वमवलम्ब्यैव सर्वेषामेतेषां सूत्राणां प्रवृत्तिरिति कथनं अत्यन्तसाहसमेव । तथा सति स्वाभिमतस्थापनार्थतया तैरुदाहृत सूत्राणामपि तथात्वेन स्वेष्टार्थासिद्धेः । अतो जीवेश्वरभेदः तत्त्वत्रयविभागश्च सूत्रकारेण संयक्प्रदर्शित इति विशिष्टाद्वैतमतानुगुण्यं सूत्राणाम् ।

3. अर्थपञ्चकं-प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः प्राप्त्युपायं फलं चैव तथा प्राप्तिविरोधि च । वदन्ति सकला वेदाः सेतिहासपुराणकाः इति सर्ववेदेतिहासपुराणानामपि पर्यवसानभूमिः अर्थपञ्चकमेव । एतदर्थपञ्चकमनुसन्दधत एव मोक्षेच्छा तदुपायादिप्रवृत्तिरिति सर्वसंमतम् । श्रीवैष्णवप्रधानभूतेषु मूलमन्त्रद्वयचरमश्लोकेषु एतदर्थपंचक बोधकशब्दाः अन्तर्गताः इति श्रीमद्भिः वेदान्तगुरुभिरुक्तं-आदौ प्राप्यं परमसनघं......सम्मतस्सर्ववेदी इति ।

लक्ष्मीसहायतया अपरिमितज्ञानानन्दरूपतया हेयप्रत्यनीकतया ज्ञानशक्त्याद्यनन्तमङ्गलगुणविशिष्टतया दिव्यमङ्गलविग्रहोपेततया

शरीरभूतविभूतिद्वययुक्ततया जगत्सृष्ट्यादिव्यपारलीलावत्तया च प्राप्यं ब्रह्मानुसन्धेयम् । एवंरूपस्य प्राप्यस्य ब्रह्मणः प्रतिपादनं सूत्रकारेणात्र कृतमस्ति । तदत्रसंग्रहेण प्रदर्शयामः—

लिङ्गभूयस्त्वाधिकरणे प्राप्यस्य परस्य लक्ष्मीसहायत्वमुक्तम् । अत्र नारायणानुवाकस्य पूर्वप्रकृत दहरविद्याशेषत्वेन दहरविद्योपास्यनिर्धारणार्थत्वं, उत सर्वपरविद्योपास्यनिर्धारणार्थत्वमिति सन्दिह्य उत्तरपक्षः स्थापितः । अत्र नारायणानुवाके नीलतोयदमध्यस्था इत्युक्तेः विद्युल्लक्ष्मीसहायत्वं उक्तं भवति ।

प्रसङ्गादेव किंचित् ब्रूमः—ननु किमर्थमिदमधिकरणं? दहरविद्यामात्रोपास्यविशेषनिर्धारणार्थत्वनिराकरणेन सर्वविद्योपास्य निर्धारणार्थमिति चेत् पूर्वप्रकृतदहरविद्याशेषत्वमात्रमङ्गीकृत्य तन्मात्रोपास्यनिर्धारणे किं बाधकम् । अतिरिक्तपरविद्यासु शंभुचतुर्मुखवासवादीनां उपास्यत्वं स्यात् इति चेत्–न–दहरविद्यायां नारायणस्यैवोपास्यत्वसिद्धौ सर्वासु परविद्यासु नारायणस्यैवोपास्यत्वसिद्धेः सर्वासां परविद्यानां विकल्पोऽविशिष्टफलत्वादिति अविशिष्टमोक्षरूपफलसाधनत्वोक्तेः उपास्यभेदासंभवात् । नचोपास्यभेदेपि-अविशिष्टफलकत्वं शास्त्रबलादङ्गीक्रियते इति इतरपरविद्यासु अन्येषामुपास्यत्वं भवत्विति वाच्यं, तथापि कारणं तु ध्येयः इति जगत्कारणवस्तुन एव ध्येयत्वोक्तेः दहरविद्यायां नारायणस्य ध्येयत्वसिद्धौ तस्यैव जगत्कारणत्वसिद्धेः सर्वपरविद्यासु तस्यैव नारायणस्य-ध्येयत्वसिद्धेरपलापासंभवात् । अन्यथा कारणद्वित्वप्रसङ्गात् । प्रथमाध्याये हि चेतनाचेतनविलक्षणस्य चतुर्मुखशम्भुसुत्रामादिव्यतिरिक्तस्य एकस्य एको हवै नारायण आसीत् इत्यादिभिः कारणत्वं प्रतिपादितमितिचेत् सत्यम् । न्यायनिरूपणमन्तरा श्रुत्यैव सर्वपरविद्यावेद्यानिर्धारणं संभवतीति एतावन्मात्रप्रदर्शनफलकत्वादस्याधिकरणस्य ॥

अत्र नारायणानुवाके नारायणपरं ब्रह्म इत्यादौ नारायणात्परं नारायणपरं इति पञ्चमीतत्पुरुषमाश्रित्य ब्रह्मनारायणादुत्कृष्टं इत्यर्थमपि केचिद्वर्णयन्ति । इदमुत्तरवाक्यस्वारस्यविरुद्धम् । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः इत्युत्तरवाक्ये नारायणव्यतिरिक्तेषु सर्वेषु

नारायणस्यान्तः प्रवेशः नियन्तृत्वं चोक्तम् । अन्तर्व्याप्तेः यः पृथिवी-मन्तरो यमयति यः आत्मानमन्तरो यमयतीति नियमनार्थत्वात् नारा-यणस्य सर्वनियन्तृत्वं सर्वस्य नारायणनियाम्यत्वं चोक्तं भवति । एवं च नास्वनियाम्यस्य स्वस्मादुत्कृष्टत्वासंभवात् कथमन्यस्य नारायणा दुत्कृष्टत्वम् । अतः नारायण परं ब्रह्म : इत्यत्र नारायणपदोत्तरं सुपां सुलुक् इति सूत्रेण सुविभक्तेर्लोपः इति नारायण एव परं ब्रह्म इत्युक्तं भवतीति ।

अपरिमितज्ञानानन्दादिरूपत्वं आनन्दादयः प्रधानस्य, अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तं इत्याद्यधिकरणेषूक्तम् । सत्यत्व, ज्ञानत्व अनन्तत्व आनन्दत्व अमलत्वानि ब्रह्मस्वरूपनिरूपक-धर्मभूतानि । गाम्भीर्यंदयापराक्रमैश्वर्यादीनि निरूपितस्वरूपविशेष-णानि, यथा गोः सास्नादिमत्वं गोस्वरूपनिरूपकधर्मभूतं, तद्गतनील-त्वादीनि चनिरूपितस्वरूपविशेषणानि । यैः धर्मैर्विना स्वरूपप्रतिपत्तिः न संभवति ते धर्माः स्वरूपनिरूपकधर्माः । स्वरूपप्रतिपत्ति विषयता-व्यापकविषयताकत्वं स्वरूपनिरूपकधर्मत्वम् । एतैर्धर्मैः स्वरूपे निरूपिते संबद्धानि निरूपितस्वरूपविशेणानि । तत्र पूर्वोक्ताः धर्माः स्वरूप-निरूपकधर्मभूताः तैर्विना ब्रह्मप्रतिपत्यसंभवात् । सत्यं ज्ञानमनन्तं ब्रह्म आनन्दो ब्रह्म अमलं ब्रह्म इत्यादि श्रुतिभिः इमे धर्मा उक्ताः ।

अत्र श्रुतप्रकाशिका भाष्यटीका चन्द्रिकादि द्रष्टव्यम्। वादावलिः न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि इत्यादिषु हेयप्रत्यनीकत्वं अनन्तकल्याणगुणविशिष्टत्वं च ब्रह्मणः सुविशदमुक्तम् । अर्भकौक-स्त्वात् तद्व्यपदेशाच्चनेति...इत्यत्र, परमात्मनः उपासकहृदये वर्तमान-त्वात् उपासकस्य जीवस्येव तत्स्थत्वमात्रेण सुखदुःखभोक्तृत्वं स्यादि-त्याशंक्य. यथा गृहस्वामिनः तद्गृहप्रयुक्तसुखदुःखभोक्तृत्वेपि गृहं प्रत्यागतस्य तत्सुहृदः तद्भोक्तृत्वं न संभवति, तथा शरीरस्वामिनो जोवस्यैव, नतु तदन्तर्वर्तिनिः परमात्मनोपि इति परिहृतम् । एवमपि सर्वस्य परमात्मशरीरत्वात् शरीरस्वामिप्रयुक्तमेव जीवस्येव सुखदुःख-भोक्तृत्वं भवतु इत्याशंक्य सुखदुःखहेतुभूतकर्मणामभावात् नापादयितुं

शक्यमिति भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् इति सूत्रे परिहृतम् । ननु वस्तुतो यत् वस्तु हेयं तत्र संबन्धो हेयावहः खलु । कर्माधीन तत्सम्बन्ध एव दुःखजनकं न तु स्वेच्छाकारितोपि इति न वाच्यम् । राज्ञा स्वेच्छया पूयशोणितादिमज्जनेपि तस्य हेयावहत्वात् । यो रेतसि तिष्ठन् इत्यादिभिः भगवतो हेयवस्तु संबन्धोक्तेः । अतः हेयप्रत्यनीकत्वं न भगवतः इत्याशंका अत्राधिकरणे परिह्रियते सर्वस्य भगवद्विभूतित्वेन हेयत्वाभावात् इति । कर्मकृतैव हेयत्वबुद्धिः सर्वत्र । एकमेव वस्तु सुखजनकं दुःखजनकं च कालभेदेन देशभेदेन पुरुषभेदेन च । अतो न वस्तुनः तत्वं तात्विकम् । पुण्यपापरूपकर्मानुगुण्येन तत्तत्र तथा तथा बुद्धिः सर्वेषां तदेव प्रीतये भूत्वा इत्यादि । भगवतश्च कर्मसंबन्धाभावात् भगवन्तं प्रति वस्तूनां न हेयत्वमिति ।

अन्तस्तद्धर्मोपदेशात् इत्यत्र दिव्यमङ्गलविग्रहः उक्तः । य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते इत्यादिकं हि विषयवाक्यम् । न तस्य प्राकृता मूर्तिः मांसमेदोऽस्थिसंभवा इति । अप्राकृतविलक्षणदिव्यमङ्गलविग्रहवत्तातत्रोच्यते । एवं ज्योतिरधिकरणादावपि । ज्योतिश्शब्दस्तु रूढ्या प्रथयति पुरुषं दिव्यतेजोविशिष्टम् इति सारावलिः ।

एवं विभूतिद्वयमपि उक्तम् । प्रकृतिमण्डलमेका विभूतिः श्रीवैकुण्ठलोकः अपरा विभूतिः। प्रथमा लीलाविभूतिशब्देनोच्यते, द्वितीया तु भोगविभूतिशब्देन । तत्र चेतनाचेतनरूपवस्तुद्वयमपि भगवतो लीलार्थं भोगार्थमपि भवति । उभयत्रानुकूल्यसाम्येपि रसवैषम्यात् लीलाभोगविभागः यथालोकमनुसन्धेयः । तत्र लोकवत्तु लीलाकैवल्यं इत्युक्तेः लीलाविभूतिरुक्ता । भोगमात्रसाम्यलिङ्गाच्च इत्यत्र भोगविभूतिश्च ।

जन्माद्यस्य यतः लीला कैवल्यं इत्यादिना जगत्सृष्ट्यादिव्यापारलीलावत्ता प्रतिपादिता । एवं प्राप्यस्वरूपमुक्तम् । परमतस्सेतून्मान संबन्धभेदव्यपदेशेभ्यः इत्यनेन जगत्कारणाद् ब्रह्मणोऽन्यस्य प्राप्यत्वमाशंक्य सामान्यात्तु इत्यादिभिः अस्यैव प्राप्यत्वं स्थापितम् । अतः प्राप्यं ब्रह्मस्वरूपं सूत्रकारः स्वसूत्रेषु संयक् प्रतिपादयामास ।।

एतादृशस्य प्राप्यस्य ब्रह्मणः प्राप्ता जीवः। स च बद्धमुक्तनित्य भेदेन त्रिविधः। तत्रानादिकर्मप्रवाहेणानुवृत्तसंसारः बद्धः। न कर्माविभागादिति चेत् नानादित्वादुपपद्यते चाप्युपलभ्यते च इति सूत्रेण कर्मणां तद्वतां चानादित्वोक्तेः बद्धसंसारी सूत्रकारेण स्पष्टमेवोक्तः। तदनन्तरप्रतिपत्ति सन्ध्याधिकरणादिषु जाग्रदादिसर्वावस्थासु दोषोद्भावनेन बन्धप्रकारश्च बहुप्रकारः प्रतिपादितः। शास्त्रचोदितोपायविशेषानुष्ठानजनितभगवत्प्रसादेनात्यन्तनिवृत्तसंसाराः सङ्कोचरहितभगवदनुभवेन निरतिशयानन्दयुक्ता मुक्ताः। संपद्याविर्भावः...मुक्तः प्रतिज्ञानात् ब्राह्मेण जैमिनिः सङ्कल्पादेव तत् श्रुतेः इत्याद्यधिकरणेषु मुक्ततत्स्वभावाः उक्ताः। पराभिध्यानात्तु...बन्धविपर्ययौ इति सूत्रयतः बद्धमुक्तौ विवक्षितौ इति च ज्ञायते।

कदाचिदप्यस्पृष्टसंसाराः ईश्वर इव ज्ञानसङ्कोचरहिताः नित्यकैंकर्यकारिणः अनन्तगरुडविष्वक्सेनादयः नित्यजीवाः। सदा पश्यन्ति सूरयः इति श्रुतिप्रतिपन्नाः इमे। अत्र सूत्राणि उन्नेयानि—

4. एवं जीवेश्वरविभागं जीवानां परस्परविभागं च ब्रुवन् सूत्रकारः विशिष्टाद्वैतमतमेव स्वमतं प्रकाशयामास।

5. प्राप्त्युपायः साधनाध्याये प्रतिपन्नः। फलं च फलाध्याये इति। प्राप्तिविरोधिः अविद्याकर्मवासनादिरूपः मोक्षप्रतिबन्धकवर्गः। आज्ञातिलङ्घनरूपकर्मप्रवाहः भगवन्निग्रहमुत्पाद्य मोक्षं प्रतिबध्नाति। निग्रहनिवृत्तौ च मोक्षं अनन्तरं स भगवान् ददाति। ततोह्यस्य बन्धविपर्ययौ इति सूत्रकारवचनात् भगवन्निग्रहसङ्कल्परूपाभिध्यानात् स्वस्वरूपभगवत्स्वरूपतिरोधानरूपबन्धः तन्निवृत्तौ मोक्षश्च इत्युक्तं भवति।

उत्तरपूर्वाघयोरश्लेषविनाशौ अनारब्धकार्ये एव तु...इत्यादिभिः प्राप्तिविरोधिपापं संयक् सूत्रकारः प्रतिपादयामास। एवं इतिहासपुराणादिषु सुप्रसिद्धं विशिष्टाद्वैतिमतसिद्धं अर्थपञ्चकं सूत्रकारो बादरायणः स्वकृतेषु न्यायनिबन्धनात्मकेषु सूत्रेषु तत्तत्स्थले निपुणं प्रदर्श

यामास इत्यब्रूमहि । जीवेश्वरभेदोपि एतावतैव स्फुट इति न तत्र पृथक् यत्नं कुर्मः

6· शेषशेषिभावः — जीवपरमात्मनोः शेषशेषिभावसंबन्धोपि कश्चिदिष्यते विशिष्टाद्वैतवादिभिः । अयं संबन्धः श्रुतिस्मृतीतिहासपुराणादिप्रसिद्धः । पतिं विश्वस्य क्षेत्रज्ञपतिः दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः, स्वत्वमात्मनि संजातं स्वामित्वं ब्रह्मणि स्थितम् इत्यादिप्रमाणानि ब्रह्मणः शेषित्वं जीवस्य शेषत्वं च वदन्ति । परमात्मनः चेतनाचेतनरूपवस्तुद्वयनिरूपितशेषित्वस्य सामान्यत्वात् चेतननिरूपितशेषित्वं स्वामित्वरूपं, चेतनगतशेषत्वं च दासत्वरूपमित्यनुसन्धेयम् । परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपं सः शेषः परश्शेषी इति शेषशेषिलक्षणं वेदार्थसंग्रहे उक्तम् । अयं च शेषशेषिभावः शरीरात्मभावबोधकसूत्रसमूहैः सिद्धप्रायः । यस्य चेतनस्य यत् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यं शेषतैकस्वरूपं च तत् तस्य शरीरमिति शरीरलक्षणत्रये शेषतैकस्वरूपत्वस्यापि एकलक्षणत्वात् । अपि च पत्यादिशब्देभ्यः इति सूत्रयन् बादरायणः परस्य पतित्वरूपं शेषित्वं अवरस्य जीवस्य शेषत्वं च व्यनक्ति स्म । आवृत्तिरसकृत् ध्यानाच्च इति ब्रह्मध्यानस्य मोक्षसाधनत्वं ब्रुवाणः सूत्रकारः उपास्यब्रह्मणः उपासकजीवात् शेषित्वं वदतीव । उत्कृष्टवस्तुविषयकासकृदावृत्तध्यानस्यैवोपासनरूपत्वात् ।

अत एवचानन्याधिपतिः इति सूत्रं मोक्षावस्थायामपि जीवब्रह्मणोः शेषशेषिभावं बोधयति । तत एव भेदं च । अत्र अनधिपतिः इत्यनुक्त्वा अनन्याधिपतिः इति सूत्रयामास । संसारदशायां जीवस्य कर्माधिपतिकत्वमप्यासीत् । मुक्तदशायां तु निश्शेषकर्मणां क्षयात् अस्याकर्मवश्यत्वमेव नतु पूर्ववत्कर्मवश्यता, परमात्मवश्यता तु सर्वदा अस्तीति भगवद्व्यतिरिक्तनिरूपितदासत्वं न तदा इति सूत्राभिप्रायः ।

पारतन्त्र्यं परे पुंसि प्राप्य निर्गतबन्धनः स्वातन्त्र्यमतुलं प्राप्य तेनैव सह मोदते इति चोक्तम् ।

सशरीरः अशरीरश्च सन् सर्वकैकर्योक्त्या भगवतः शेषित्वं जीवस्य शेषत्वं च स्फुटम् । इदं फलाध्याय सुलभगम्यम् ।

7. शेषभूतस्य मोक्षे पृथक्स्थित्या कैंकर्यकरणम् । जीवपरयोः सार्वकालिको भेदः इति विशिष्टाद्वैतमतसिद्धोऽर्थः । संसारदशायां भेदः मुक्तौचैक्यं इति न वदन्ति इमे । सूत्रकारोपि मोक्षदशायामपि जीवपरयोः भेदमेव ब्रूते स्म । यतः मुक्तविलक्षणत्वं ब्रह्मणः बहुस्थलेषु वदति । जगत्कारणवादिवाक्यप्रतिपन्नस्य ब्रह्मणः मुक्तादन्यत्वं वदतः मुक्तपरयोः भेदसिद्धिरभिप्रेता इति निश्चप्रचं हि । जगद्व्यापारवर्ज-मिति मुक्तात्मनः जगत्कारणतां निषेधन् मुक्तपरयोः भेदमभिप्रैत्येव । अतः आधिकारिकमण्डलस्थोक्तेः इति सर्वविधकैंकर्यमपि भिन्न एव करोति । स्वशरीरित्वेन परमात्मानं पृथग् अननुभवन्नपि । नेतरोऽनुपपत्तेः इत्यपि ।

8. जीवब्रह्मणोः विशिष्टवेषेणैक्यम्—ज्ञाज्ञौ द्वौ अजावीशनीशौ इत्यादीनि जीवात्मपरमात्मनोः ईशत्वानीशत्वादिना भेदं व्यपदिशन्ति तत्त्वमसीत्यादीनि तयोरभेदम् । तत्र तयोरत्यन्तभेदस्वीकारे अभेदश्रुतीनां, स्वरूपैक्याङ्गीकारे भेदश्रुतीनां च अमुख्यत्वप्रसङ्गः । अभेदश्रुतीनां भेदोपचारेण स्तुतिपरतया निर्वाहो प्यनुपपन्नः । निकृष्टैः दाशादिभिस्समम्प्यभेदोक्तेः स्तुतिरूपत्वासंभवात् । राजपुरो...अतः उभयविधव्यवहारमुख्यत्वोपपत्तये जीवब्रह्मणोः विशिष्टवेषणैक्यमुपपादनीयम् । वस्तुतो भिन्नयोरपि विशिष्टवेषेणैक्यमन्यत्राभ्युपगतं च । इदं अपृथक्सिद्धविशेषणत्वपर्यवसितं विशिष्टवस्त्वेकदेशत्वं अपृथक् सिद्धविशेषणभूतगोत्वादिवाचिनां शब्दानां गवादिव्यक्तिपर्यन्तवाचित्ववत् परमात्मापृथक्सिद्धविशेषणभूतजीवात्मवाचिनां त्वमादिशब्दानां विशेष्यभूतपरमात्मपर्यन्तवाचकतायाः आकृत्यधिकरणन्यायसिद्धत्वात् उपपद्यते । अतः तत्त्वमसीत्याद्यभेदश्रुतीनां च मुख्यत्वेन निर्वाहः सूपपादः।

असत्त्वावस्थापन्नं ब्रह्म जीवः उपाध्युपहितं ब्रह्म जीव इति पक्षद्वयं तु सूत्रकारेणैव निरस्तम् । उभयव्यपदेशादहिकुण्डलवत् प्रकाशाश्रयवत्तातेजस्त्वात् , पूर्ववद्वा इत्यादि सूत्रसिद्धाः इमे अंशाः ।

इदं च पक्षद्वयं श्रीभाष्यादिषु बहुधा बहुस्थलेषु दूषितमिति नेह प्रपञ्च्यते—व्यामैकं स्यात् मायोदन्वत्यपारे-सन्मात्रं ब्रह्म—

9. ब्रह्मणः सगुणत्वं—विशिष्टाद्वैतिनः ब्रह्म सगुणं इति स्वीकुर्वन्ति । मनोमयः यस्सर्वज्ञः सत्यकामः इत्यादीनि गुणबोधकानि श्रुतिवाक्यानि ब्रह्मणः गुणवत्वं बोधयन्ति । यद्यपि निर्गुणं निष्क्रियं इत्यादीनि गुणनिषेधकान्यपि वाक्यानि सन्ति । अथापि उभयोरपि श्रुतिवाक्यत्वाविशेषात् उभयोरपि प्रमाण्यमेष्टव्यं, नत्वन्यतरबाधेनान्यतरप्रामाण्यम् । अतः अपहतपाप्मा विजरः, इत्यादि हेयगुणनिषेधकवाक्यश्रवणेन गुणनिषेधबोधकानां वाक्यानां हेयगुणनिषेधपरत्व तात्पर्यकत्वं निश्चीयते इत्यविरोधः ।

दूरे गुणास्तव तु सत्वरजस्तमांसि तेन त्रयी प्रथयति त्वयि निर्गुणत्वं इत्यपि कश्चन निर्वाहप्रकारः इत्यलम् । मोक्षरूपपुरुषार्थसाधनभक्तियोगविचारपरसाधनाध्याये तृतीयपादे गुणोपसंहारबोधनात् सगुणब्रह्मोपासनस्यैव मोक्षजनकत्वं सूत्रमतमिति ज्ञायते । अन्यथा सूत्रैः गुणोपसंहारबोधनस्यायुक्तत्वात् । नहि निर्गुणब्रह्मोपासनस्य कुत्रचित् सूत्रे मोक्षकारणत्वं प्रतिपादितमस्ति ।

तल्लिङ्गात् तद्धर्मोपदेशात् विवक्षितगुणोपपत्तेश्च अदृश्यत्वादिगुणकः इत्यादीनि सूत्राणि हि स्पष्टमेव ब्रह्मणः गुणवत्तां बोधयन्ति । ब्राह्मेण जैमिनिः, एवमप्युपन्यासात् इत्यादिभिश्च ब्रह्मणः सगुणत्वं स्फुटप्रविपन्नं च । उभयलिङ्गं सर्वत्र हि इतीदमपि कण्ठ गडु निर्गुणत्ववादिनाम् । जन्माद्यस्य यतः इत्यादिना यत् ब्रह्मलक्षणमुक्तं तेनैव गुणवत्ता ब्रह्मणः सिद्धयतीत्येवं रूपाणि बहूनि सूत्राणि निर्गुणत्वप्रतिक्षेपपराणि ।

नैर्गुण्यं निर्गुणोक्तेः गुणवचनमिहाविद्यधमर्थिवादः
नैर्दोष्यं वस्तुवृत्त्या तदितरदखिलं स्वाप्नभोगादितुल्यम् ।
इत्थं जीवेशभूमापहरणकुहनावादमोमुह्यमानान्
क्षेप्तुं न स्थानतोपीत्यधिकरणमथारभ्यतेऽनेकशृंगम् ।।

इति सारावल्यां निर्गुणवादखण्डनं सगुणवचनस्य विद्याकल्पितधर्मवत्व-बोधनासंभवं च स्पष्टीकृत्य न स्थानतोपीत्याद्यधिकरणं परमते अपङ्गतं इति स्पष्टमभ्यधायि । अपि चास्मिन् शास्त्रं, अथातो ब्रह्म-जिज्ञासा, इत्यारभ्य, अनावृत्तिः शब्दात् इति आसमाप्ति निर्गुणो-पासनं वा तत्फलमपि वा नैव सूत्रकारेणोक्तं न च प्रकल्प्यमुच्छास्त्रं च तृतीयाध्यायतृतोयपादस्य गुणनियमनेन ख्यातिमत्वाच्चासङ्गतत्वमद्वै-तिनां इत्याद्यर्थः संयगेव निरणायि ।

तत्तद्भोगप्रतीतेः गुणघटितपरोपासना भोगहेतुः

मुक्तिश्च स्यात् क्रमादित्यसत् अगुणवचनस्यान्यपर्याभिधानात् ।
शास्त्रेऽस्मिन् आसमाप्तेः क्व फलमभिहितं निर्गुणोपास्तिसाध्यं
नोच्छास्त्रं च प्रकल्प्यं गुणनियमनतः ख्यातिमांश्चैष पादः ॥

आदरादलोपः प्रकृतैतावत्वं हि प्रतिषेधति ततो ब्रवीति च भूयः इत्यादिषु सूत्रेषु स्पष्टं गुणभूयस्त्वबोधकेषु जागरूकेषु सत्स्वपि पर-गुणासहिष्णवः असूयावन्तश्चाद्वैतिनः ब्रह्मणो निर्गुणत्वं ब्रुवन्तः तदुक्ता-विद्ययैव आच्छादिताः मूढाः आसन् । अहो ।

10. कर्मातिरिक्ताविद्या नाभ्युपगम्यते । न कर्माविभागादिति-चेन्न अनादित्वादुपपद्यते चाप्युपलभ्यते च । वैषम्यनैर्घृण्ये न सापे-क्षत्वात् तथा हि दर्शयति, अविद्यातिरिक्त कर्मण एवानादित्वमभ्युपगतं तेनैव वैषम्यनैर्घृण्यपरिहारश्च कृतः। अकृताभ्यागमकृतविप्रणाशादिभयेन अनादिजीवानां अनादिकर्मप्रवाहस्याभ्युपगमश्च प्रतिपादितः ।

विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथा परा ।
अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ।
यथा क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा ।
संसारतापानखिलान् अवाप्नोत्यतिसंततान् ।
तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ।
सर्वभूतेषु भूपाल तारतम्येन वर्तते ॥

इत्यादि पुराणवचनमप्यत्र प्रमाणम् ।

अतः विशिष्टाद्वैतमतसिद्धबह्वर्थप्रतिपादनं सूत्रेषु दृश्यते इति सूत्रं सर्वमपि तन्मतानुगुणं, तत्कर्ता तन्मतानुयायी इति सुदृढं वक्तुं प्रगल्भेम ।

अतः उपनिषदमृताब्धिमथनजनितं सारभूतमर्थं पाराशर्यप्रतिपादितं विशिष्टाद्वैतिमतसिद्धं यतिराजः श्रीभाष्यकारः स्वकीये श्रीभाष्ये अन्यूनानतिरिक्तं प्राचीकशत् । तदुक्तं—पाराशर्यः प्रभूतादुपनिषदमृतोदन्वतः इत्यादि ।

11. अभिन्नोपादानत्वमपि सूत्रकारसंमतं, प्रकृतिश्च परिणामात्, आत्मकृतेः इत्यादिसूत्रमत्र विषये स्पष्टम् । तथा हि—अभिन्ननिमित्तोपादानत्वं विशिष्टाद्वैतवादिनां सिद्धान्तः । एकमेव ब्रह्म जगत्प्रति निमित्तमुपादानं च । अत्र ऊर्णनाभिः दृष्टान्तः । यथोर्णनाभिः सृजते गृह्णते च इति श्रुतिरप्यत्र प्रमाणम् । यथा ऊर्णनाभि स्वनाभिगतोर्णायाः तन्तुमुत्पादयति यथा च सः उपादानं तथैव परमात्मापि स्वशरीरभूतप्रकृत्यादेरेव महदादि जगदुत्पादयति । अतः सः उपादानम् ।

ननुः ऊर्णनाभेः कथमुपादानत्वं स्वनाभिगतोर्णया हि तन्तुं सृजति। ऊर्णा हि तन्तुरूपेण परिणमते। अतः ऊर्णायाः उपादानत्वं स्यात्। नहि ऊर्णाशब्देन वा तन्तुशब्देन वा ऊर्णनाभिरुच्यते। किञ्चैतत् दृष्टान्तस्वारस्यात् स्वदेहभूतप्रकृतेः जगदुत्पादकत्वं ब्रह्मणः सिध्येदिति प्रकृतेरेवोपादनत्वसिद्धिः । अत ऊर्णनाभिरिव ब्रह्म निमित्तमात्रं स्यादिति चेत्? अत्र केचित्—प्रकृतेः ब्रह्मणश्च शरीरात्मभावसाधने एवायं दृष्टान्तः । न तु उपादानत्वेपि इति वदन्ति । वस्तुतः—ऊर्णनाभिदृष्टान्तस्वारस्यात् जगद्ब्रह्मणोः शरीरात्मभावसिद्धौ शरीरवाचकानां शरीरिवाचकत्वावश्यंभावेन सर्वशब्दानां ब्रह्मवाचकत्वात् ब्रह्मणः उपादानत्वादिस्वतः सिध्यति । अतः सृष्टयादिप्रकरणे कारणवाचकाः प्रकृत्यादिशब्दाः ब्रह्मपराः । दृष्टान्ते ऊर्णाशब्दः तन्तुशब्दश्च न ऊर्णनाभिवाचकः तयोः निष्कर्षकशब्दत्वात् । शरीरशब्दोपि हि निष्कर्षकशब्दः।

अतो नैव शरीरिणं वदति । ऊर्णनाभि दृष्टान्तस्वारस्यात् परस्या-चेतनशरीरकत्वं, पृथिवीदृष्टान्तस्वारस्यात् ब्रह्मणः उपादानत्वं च साक्षात् सिध्यति । पृथिव्या एवौषधिरूपेण परिणामात् इति ज्ञेयम् ।

एवमभिन्ननिमित्तोपादानत्वे सौभरिदृष्टान्तोपि ज्ञेयः । तत्र हि स्वेनोढानां राजकन्यकानामेकदैव भोगोत्पादार्था अहं बहुः स्यामिति सङ्कल्प्य नानाशरीरभाक् अभवत् । अहं बहु स्यामित्युक्तं बहुत्वं हि न शरीरमात्रे देहविशिष्टात्मनि । अहं बहु शरीरको भवामीति हि शब्द स्वरससिद्धोऽर्थः । एकशरीरकत्वप्रहाणेन बहुशरीरकत्वं हि अत्र बोध्यते । बाल्यविशिष्टशरीरविशिष्टात्मनो यथा यौवनविशिष्टशरीर विशिष्टात्मानं प्रति कारणत्वम् ।

अत्र तर्किकाः–एकं कार्यं प्रति समवाय्यसमवायिनिमित्तभेदेन कारणत्रितयं वाच्यम् । अवयवीति किञ्चिदतिरिक्तं द्रव्यमस्ति । अवयवेषु तत् जायते । एवं रूपादिगुणाः क्रियाश्च जायन्ते । अतः स्वगतद्रव्यरूपादिगुणकर्माणि प्रति द्रव्यं समवायिकारणम् । घटं प्रति कपालादि समवायि । घटगतरूपं प्रति घटः समवायिकारणम् । घटे पाकवशात् पूर्वरूपध्वंसः रूपान्तरं चोत्पद्यते । तदा घटे रूपध्वंसरूप-कार्यमपि जायते । तत्र रूपध्वंसंप्रति न घटः समवायिकारणम् । जायमानस्य रूपध्वंसरूपकर्यस्य घटे समवायसंबन्धानङ्गीकारात् । अत एव हि समवायिकारणमिति व्यवहारः । यत्समवेतं कार्यं उत्पद्यते तत्समवायिकारणमित्यपि लक्षणमुच्यते । अवयवद्वयसंयोगं विना कार्य-द्रव्योत्पत्तेरभावात् स एव संयोगः असमवायिकारणमित्युच्यते । यथा घटं प्रति कपालद्वयसंयोगः । एतदुभयभिन्नं कारणं निमित्तकारणम् । घटे प्रति बहूनि निमित्तकारणानि सन्ति । दण्ड चक्र कुलाल अदृष्ट ईश्वरादिः । प्रायशः कर्तर्येव निमित्तत्वव्यपदेशः । इति वेदान्ति-नस्तु असमवायिकारणं नेच्छन्ति । अवयविनः अतिरिक्तस्य द्रव्यस्या-नङ्गीकारात् । कपालद्वयसंयोगापेक्षयान्यस्य कार्यस्याभावात् । यत् समवायीत्युच्यते तदेवोपादानकारणम् । कारणस्यैव वस्तुनः कार्यरूपेण परिणामात् । उपदानकारणात् भिन्नं कारणं निमित्तकारणम् । अयं

भावः—घटगतरूपं प्रति घटस्येव दण्डगतरूपं प्रति दण्डस्य समवायिकारणत्वं वाच्यम् । इत्थं च दण्डस्य समवायिकारणत्वात् कथं प्रति तस्य निमित्तत्वम् । समवायिकारणभिन्नस्यैव निमित्तत्वोक्तेः । न च दण्डस्य स्वगतरूपं प्रति समवायित्वेपि न घटं प्रति समवायिकारणत्वम् । अनः कार्यभेदान्नैष दोषः इति वाच्यम्। एवमपि पटं प्रति तुरीतन्तुसंयोगस्य निमित्तत्वमभ्युपगच्छतः तस्य मते कथं निमित्तत्वोपपादनम् । तन्तुद्वयसंयोगस्य तैः असमवायिकारणत्वाभ्युपगमात् । तुरीतन्तुसंयोगस्य तद्भिन्नत्वाभावात् । अतस्तन्मतरीत्यैव एकस्यैव निमित्तत्वं उपादानत्वं च भवति । यदि च तुरीतन्तुसंयोगस्य तन्तुद्वयसंयोगस्य च परस्परवैलक्षण्यमङ्गीकृत्य निमित्तत्वं तस्योपपाद्यते तदापि—स्वज्ञानं प्रति जीवस्य उपादानत्वं निमित्तत्वं चेति पूर्वोक्तदोषापरिहार एव । जीवो हि स्वस्मिन् शास्त्रादिना ज्ञानोत्पादकः इति निमित्तम् । स्वस्मिन् समवायसंबन्धेन ज्ञानोत्पादात् समवायाच्च । एवं घटेश्वरसंयोगे ईश्वरस्योपादानत्वं निमित्तत्वं च । अत एकस्यैव उभयविधकरणत्वं संभवति । नचैकस्योभयविधकारणत्वेपि आकारभेदसत्वान्न दोषः । समवायिकारणता अन्या निमित्तकारणताचान्या । उपाधेय सांकर्येपि उपाधेरसङ्करवत् उपपादनसंभवः इति वाच्यम् । अत्रापि निमित्तत्वोपादानत्वरूपाकारभेदसत्वेन दोषाभावात्।

ननु घटः स्वगतरूपं प्रति चोपादानकारणम् । अत्र घटोऽन्यः रूपसङ्गादिश्चान्यः । अतः कार्यकारणयोरभेदाभावात् कथं घटस्य उपादानत्वम् । तार्किकमते तु समवायिकारणत्वं सूपपादं । वेदान्तिमते उपादानोपादेययोः अभेदाङ्गीकारादत्र च तदभावात् इति चेत् घटे रूपं जायते इत्यस्य घटो रूपी(रूपवान्)भवतीत्यर्थः। एवं रूपसंयोगः इत्यस्य च घटो रूपसंयुक्तः इत्यर्थः । इत्थं च घटरूपिणोः घट घटसंयुक्तयोश्चाभेदान् न हानिः ।

अपि च उपादानत्वं प्रकारद्वयेनोपपाद्यते । यत्र कार्यकारणयोरैक्यं यत्र च कार्यकारणयोः अपृथक्सिद्धिः तत्रोभयत्र कारणत्वावश्यक

तया तदनुसारेण परिष्कारात् । तादात्म्य अपृथक्सिद्धि अन्यतर-संबन्धावच्छिन्नकार्यतानिरूपित तादात्म्यसंबन्धावच्छिन्नकारणतावत्व-मुपादानत्वमिति । न चैवं सति मृदः घटं प्रतीव घटत्वावस्थां प्रत्यपि उपादानत्वापत्तिः । मृत्पिण्ड घटत्वावस्थयोः अपृथक्सिद्धिसत्वादिति वाच्यम् । इष्टापत्तेः । मनुष्यशरीरं प्रत्यपि जीवात्मनः उपादानत्वं स्वीक्रियते जीवं प्रत्यपि ईश्वरस्योपादानत्वमिष्यते । अपृथक्सिद्धेस्स-त्वात् । न चैवं सति विशिष्टस्योपादानत्वं विशिष्टस्योपादेयत्वं इति निर्बन्धोऽनावश्यकः। एवं शरीरवाचकशब्दानां शरीरिपर्यन्तत्वमित्यपि निर्बन्धः निर्निबन्धनः । जगत् ब्रह्मणोः अपृथक्सिद्धिसत्वेन तेनैव ब्रह्मणः उपादानत्वोपपादनसंभवात्। एतस्माज्जायते प्राणः आकाशात् वायुः इत्यादौ यथा श्रुतरीत्यैव निर्वाह संभवादिति वाच्यम् । वैयधि करण्येन सामानाधिकरण्येन च कार्यकारणभूतजगद्ब्रह्मणोः निर्देश-सत्वात् । तदनुसारेण उपादानत्वे प्रकारद्वयाश्रयणात् । यत्र कार्य-कारणयोः अभेदनिर्देशः तत्र विशिष्टयोः कार्यकारणत्वं शरीरवाच-कानां शरीरिपर्यन्तत्वं च । यत्र तु वैयधिकरण्येन तत्रापृथक्सिद्धि-संबन्धमादायेति न दोषः । किंच यत्र कार्यवस्तुनः कारणवस्तुनश्च तादात्म्यं तत्रोपादानत्वं उपादेयत्वं च सुलभसाध्यम् । विशिष्टमादायैव कार्यत्वकरणत्वयोरुपपादनात्। शरीरात्मभावः स्वतः सिद्ध एव । तस्य शरीरलक्षणत्वात् । अपृथक्सिद्धवस्तुनो हि शरीरत्वं स्वतस्सिद्धम् । शरीरवाचकशब्दानां शरीरिपर्यन्तत्वं च बालो युवा जातः इत्यादौ च स्फुटम् । अतो विशिष्टं उपादानं विशिष्टमुपादेयं इति सर्वत्र सिद्ध-मेवेति । रूपस्य घटापृथक्सिद्धत्वेपि द्रव्यत्वाभावात् न शरीरत्वमिति विवेकः ।

## 50. सर्वमतसिद्धान्तसंग्रहः ।

अथात्र शारीरकशास्त्रे विचारार्थं प्रवृत्ता ये ये विशिष्टाद्वैति अद्वैति द्वैति यादवभास्करादिमताचार्याः यंयमर्थं न्यरूपयन् तत्तदाचार्य-दर्शितं तमर्थं सुखग्रहणाय संग्रहेण प्रवक्ष्ये ।

1. अथातो ब्रह्मजिज्ञासा इत्यारभ्य अनावृत्तिः शब्दात् अनावृत्तिः शब्दात् इत्यन्तं ब्रह्ममीमांसा शास्त्रं चतुरध्ययात्मकं पृथक्शास्त्रमिति श्रीशङ्करभगवत्पादादिमतानुयायिनः ।

अथातो धर्मजिज्ञासेत्यारभ्य अनावृत्तिः इति सूत्र पर्यन्तं विंशत्यध्यायात्मकं एकमेव शास्त्रमिति श्रीभवद्रामानुजमतानुयायिनः वदन्ति ।

**तत्र भास्कराचार्याः** यादवप्रकाशाश्च ज्ञानकर्मसमुच्चयवादिनः भगवद्रामानुजादयः शङ्करभगवत्पादाश्च ज्ञानकर्मसमुच्चयं खण्डयन्ति। रामानुजादयः समसमुच्चयं निषेधन्ति । कर्मणामङ्गभावं ज्ञानस्याङ्गिभावं च वदन्ति ।

यादवप्रकाशमतानुयायिनस्तु साध्यद्वित्वं साधनद्वित्वं चाभ्युपेत्य तत्र कर्मणः प्राप्तिविरोधिकर्मनाशकत्वं ज्ञानस्य ब्रह्मप्राप्तिसाधकत्वमिति वदन्तः समसमुच्चयवादिनः । साध्यद्वित्वे साधनद्वित्वे च विद्यां चाविद्यां च यस्तद्वेदोभयं सदा । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते इति श्रुतिं च प्रमाणयन्ति । अतस्ते उभयप्राधान्यं मन्वते। कुमारिलपादा अपि ज्ञानकर्मसमुच्चयवादिन एव । कुमारिलपादानां, उपनिषदामर्थवादत्वोक्तिः प्रौढिवादमात्रं कर्मप्रवणतानिबन्धनं वा । भास्करमते कुमारिलमते च ब्रह्मज्ञानं उपासनारूपं श्रीरामानुजमत इव । नहि तयोः परस्परविरोधो दरीदृश्यते । अतस्तत्समुच्चयः नासंभवदुक्तिकः। उपास्यं ब्रह्म कल्पितं वा पारमार्थिकं वेत्यन्यदेतत् । सर्वथा ज्ञानकर्म समुच्चयो न विरुद्धः इति तन्मतप्रक्रिया । विज्ञानभिक्षुरपि ज्ञानकर्मसमुच्चयमेवाभिप्रैति । अतोऽयं समुच्चयः पूर्वोत्तरमीमांसयोरैकशास्त्र्ये एव संभवतीति विंशत्यध्यायात्मकं ब्रह्ममीमांसा शास्त्रमेकमिति तदीयो निर्णयः ।

कर्मणामङ्गभावेन समुच्चयपक्षोऽपि एकशास्त्रत्वाभावे असंभवदुक्तिकः एव इति नैतदर्थं श्रुतिसूत्रविरुद्धं समप्राधान्यं वक्तव्यमिति श्रीभगवद्रामानुजादीनां सिद्धान्तः । अपि च ज्ञानकर्मणोः विरोधो नेति सत्यमेव । अथापि न समप्राधान्यं तयोः वक्तुं शक्यते । यथा ज्ञानस्य

मोक्षे उपयोगः न तथा कर्मणां मोक्ष एवोपयोगः । कर्मणां मृत्युतरणे ज्ञानस्यामृतप्राप्तौचोपयोगं श्रुतयो वदन्ति-विद्यांचाविद्यां...अमृत मश्नुत इति । अतो ब्रह्मोपासनमात्रस्य शास्त्रैः मुक्तिसाधनत्वप्रतिपादनात् न कर्मणः प्राधान्यम् । कर्म तु चित्तशुद्धिद्वारा ब्रह्मज्ञानोपकारमात्रं जनयति । कर्मणः उपकारकत्वं चानुष्ठानद्वारेति तदनुष्ठानं च कर्मविचारं विना न संभवतीति च मीमांसाशास्त्रं कृत्स्नमेकमेवेति अभिप्रयन्ति भास्करादिवत् भगवद्रामानुजादयः। अपि च—अविद्यानिवृत्तिरूपबन्ध निवृत्तेरेव मोक्षरूपत्वात् साध्यद्वित्वमेव नास्ति। अतस्साधनद्वित्वस्य नैवापेक्षा । ज्ञानसंकोचकरकर्मरूपबन्धनिवृत्तौ धीविकासस्य स्वतस्सिद्धत्वात्। यथा न क्रियते ज्योत्स्ना स ज्ञानमात्मनः क्रियते तथा इति प्रमाणात् । भावान्तराभाववादित्वाच्च न पृथग्भूतं धीविकासरूपं भगवदनुभवात्मकं फलमिति ।

ननु वैराग्यादिवत् कर्मणामपि ज्ञानमात्रसाधनत्वे साधनाध्याय एव पूर्वमीमांसायाः समावेशापत्तिः इति चेदिष्टमेवैतत् । तदुक्तं श्रुतप्रकाशिकायां—जैमिनीयपूर्वमीमांसायाः प्रतिपत्तिलक्षणसौकर्यक्रमात्तु पूर्वं निवेशः अर्थक्रमात्तु तृतीयाध्यायचतुर्थपादेनैव संगतिरिति ।

भास्कराचार्यमते भगवद्रामानुजाचार्यमते च मोक्षकारणं ब्रह्मज्ञानमुपासनरूपं साक्षात्कारसमानजातीयम् । अत एव द्रष्टव्यः इत्यादौ द्रष्टव्यपदं निदिध्यासितव्य इति पदार्थनिष्कर्षपरम् । नतु ध्यानातिरिक्तार्थान्तरपरम् इति ।

शङ्करभगवत्पादास्तु मोक्षज्ञानं ब्रह्मज्ञानं अविधेयमेव पुरुषपरतन्त्रमुपासनरूपं न भवति प्रमाणपरतन्त्रं साक्षात्काररूपम्। तत्र कर्मणां न सहभावः नोपकारकत्वमपीति समुच्चयवादं निषेधन्ति । मोक्षाधिकारिणां चित्तशुद्धिमात्रं कर्मोत्पादयति । तावतैव तेषां चारितार्थ्यम् । जन्मान्तरीयानुष्ठानेपि चित्तशुद्धिं कर्म जनयति । अतः कर्मविचारात् पूर्वमपि अधीतवेदान्तः ब्रह्मविचारं कुर्यात् । अत एव देवतानां स्वयं प्रतिभातवेदान्तानां कर्मानाधिकरिणामपि ब्रह्मविद्यायमधिकारः संभवति।

अपि च ब्रह्मचर्यादेव सन्न्यस्तानां ब्रह्मविद्याप्रवृत्तिश्च सप्रयोजना भवति। आत्मा वा अरे द्रष्टव्यः इति द्रष्टव्यपदं—फलपरं सत् निदिध्यासनस्य श्रवणस्य वा विधेयस्योद्देश्यमेवोपक्षिपति । न तु केवलानुवादरूपमिति अभिप्रयन्ति ।

शुद्धाद्वैतमतानुयायिनः वल्लभाचार्याः द्वैतमतप्रवर्तनमध्वाचार्याश्च शास्त्रभेदमेवाङ्गीकुर्वन्ति । तत्र प्रथममते कर्मज्ञानभक्तीनां सर्वेषां साधनानां पुरुषोत्तमज्ञानोत्पत्तावपेक्षास्त्येव । अथापि भक्तिप्राधान्यस्यैव विवक्षितत्वात् न कर्ममात्रस्य ज्ञानेन सह विशिष्टः कश्चन संबन्धो वर्तते इति वदन्ति । द्वितीयमते तु कर्मणः ज्ञानोपकारकत्वं सत्यमस्त्येव तथापि शास्त्रैक्यं नावश्यकमिति वदन्ति । अतः सर्वथा वेदान्तशास्त्रं पृथगेवेति वदन्ति ।

अनुबन्धचतुष्टयमिति शास्त्रेषु किञ्चिदुच्यते । तच्च विषयः संबन्धः प्रयोजनं, अधिकारीति विषयादि चतुष्कमेव । अत्र ब्रह्मविचारो विषयः निर्णयात्मकं ब्रह्मज्ञानं प्रयोजनम् । प्रतिपाद्यप्रतिपादकभावः संबन्धः । अधिकारी अर्थज्ञानकामः । सर्वत्राधिकारिविशेषः सामान्यत एव तत्तदर्थज्ञानकामः इति सिध्यति । इयमेव नीतिः न्यायवैशेषिकं सांख्ययोगसूत्रादिषु सर्वत्र समाना इति केचिद्वदन्ति ।

भगवद्रामानुजमते विषयादित्रिकस्य ब्रह्मजिज्ञासा इति सूत्रारूढत्ववत् अधिकारिविशेषोपि सूत्रारूढ एव वक्तव्यः । सच अथ शब्दलभ्यः । नहि ब्रह्मज्ञानकामस्सर्वोऽप्यधिकारीति वक्तुं शक्यते । नहि ससर्वोपि ब्रह्ममीमांसायामधिकरोति । नहि सर्वोपि विचार्य ब्रह्म जानाति । अतस्सूत्रकृतैवाधिकारिविशेषः नियमयितव्यः । तत्र सूत्रकारसूत्रस्वारस्यमवलम्ब्यास्माभिः निश्चेतव्यः । सूत्रकारो हि अथ शब्दं प्रयुञ्जानः अधिकारिविशेषं सम्यगेव ब्रवीति,अतश्शब्दशिरस्कं अथ शब्दं प्रयुञ्जानस्य सूत्रकृतः, कृतकर्मविचारः पुरुष एवैतच्छास्त्राधिकारीति अभिप्रायः स्पष्टमवगम्यते खलु । नहि निष्प्रयोजनमथशब्दं सूत्रकारः प्रयुङ्क्ते । अतः सूत्रगतमथपदं यथा स्वर संभवेत्तथाऽत्रार्थो वक्तव्यः

इति पूर्वतन्त्रापेक्षमुत्तरं तन्त्रमिति पूर्वोत्तरमीमांसयोरैकशास्त्र्यमवश्यमेष्टव्यम् । केषांचित् कर्मविचाराकरणेपि आचार्योपदेशेन कर्मनिर्णयमुपजीव्य ब्रह्मविचारे प्रवृत्तिः। ब्रह्मचर्यादेव सन्यासाभिलाषिणामपि सन्यासाश्रमोचितकर्मणा विद्यांगत्वात् तज्ज्ञानमन्तरा ब्रह्मविद्याप्रवृत्तिः नोपपद्यते । तेषामपि गुर्वादिमुखेन अपेक्षितकर्माणां ज्ञानसंभवः इति ब्रह्मचर्यादेव सन्यासः ब्रह्मविद्या ब्रह्मप्रवृत्तिश्चोपपद्यत एवेति ।

अत्र अधिकारिविशेषनिश्चयं सूत्रकारः स्वयमेव कथयतीति युक्तमेव। अथशब्दस्यानन्तयार्थिकत्वमपि युक्तम् । अथापि कर्मविचारानन्तर्यमेवाथशब्दः कथयतीति न युक्तम् । श्रोतव्यादिवाक्यशेषे तदादौ वा कर्मविचारस्य क्वचाप्यनिर्दिष्टत्वात् साधनचतुष्टयानन्तर्यार्थिकत्वं तु समीचीनं सूत्रारूढं च । शमदमाद्युपेतः स्यात् इत्यादि सूत्रेषु इदमेव हि संयक्प्रदर्शितम् । अतः ब्रह्मविचारविधीनां संग्रहरूपे सूत्रे तद्विध्यवगतान्येव साधनानि अथ शब्दार्थानन्तर्यप्रतियोगितया विवक्षितानीति स्फुटं विज्ञायते । एवं चाधिकारिविशेषे अवश्यं नियमयितव्ये पूर्वतन्त्रापेक्षामेवोत्तरतन्त्रमपेक्षते इति दुर्वचमिति शङ्करभगवत्पादानुयायिनः । मीमांसाश्रवणानन्तरमेव साधनचतुष्टयप्राप्तेः। अधीतक्रमेण विचारस्य कार्यत्वात् आचार्योपदेशेन कर्मनिर्णयसंभवात्, अर्थस्वाभाव्याच्च कर्ममीमांसाया एव पूर्वभावित्वमावश्यकमिति रामानुजमतम् ।

अत्र जिज्ञास्यं ब्रह्म जगत्कारणतयोत्तरसूत्रे लक्ष्यते । ब्रह्मस्वरूपं केवलनिमित्तकारणमिति श्रीमदानन्दतीर्थादयः । जगन्निमित्तोपादानमिति द्वैताद्वैत विशिष्टाद्वैत शुद्धाद्वैत केवलाद्वैतवादिनः । एकमेव ब्रह्मोपादानतया निमित्ततया च विवक्ष्यते अभिन्ननिमित्तोपादानत्वावादिमते । निमित्तकारणब्रह्मातिरिक्तमुपादानान्तरं उपादानाकारणातिरिक्तं निमित्तकारणं वा नास्तीति एतन्मतनिष्कर्षः ।

अन्तः करणस्य तत्परिणामात्मकवृत्ति प्रति उपादानत्वस्य निमित्तत्वस्य च सांख्यैः स्वीकारात् एकमेवोपादानं निमित्तकारणं च भवितुमर्हति । [१९९ पुटे अन्ते योजिताः पंचपंक्तयः]

शुद्धाद्वैतयोः शुद्धं ब्रह्मैव परिणमते निमित्तं च। विशिष्टाद्वैतमते तु शुद्धब्रह्मपरिणामे विकार्यतापत्तिः अतः प्रकृति शरीरकब्रह्मणः कारणत्वमुपादानस्वरूपम्। केवलाद्वैतिमतेतु प्रकृतिः परिणाविकारणं ब्रह्मा त्रिवर्तोपादानं प्रकृतिः निमित्तकारणमात्रं ब्रह्म तु विवर्तोपादनं निमित्तकारणं चेति वदन्ति।

त्रिक्षेपशक्तिमात्रं प्रकृतेरिति विशिष्टाद्वैतिमतम्। ब्रह्मण एव विक्षेपशक्तिरपीति द्वैताद्वैत-शुद्धाद्वैतमतम्। प्रकृतेः विक्षेपशक्तिः आवरणशक्तिरिति शक्तिद्वयं आवरणशक्तिमात्रं वा। ब्रह्मणस्तु सद् रूपेणावृतस्य भानमात्रमिति तु केवलाद्वैतमतम्। तत्र प्रकृतिविषये धर्मिणि न कस्यापि दर्शनस्य विप्रतिपत्तिः। तस्याः आवरणशाक्तिमात्रं विप्रतिपन्नम्।

### 51. द्वैत, विशिष्टाद्वैतमतयोः विषयवैलक्षण्यप्रदर्शनम्।

विशिष्टाद्वैतिनां द्वैतिनां जीवपरमात्मनोः विषये अत्यन्तभेद-वादित्वे समानेपि अर्थविशेषेषु वैलक्षण्यं विद्यते—तद्यथा—

**द्वैतमते**

1. अण्डात् बहिर्भूतं नित्यविभूतिस्वरूपं नाङ्गीक्रियते।

2. सत्वरजस्तमांसि द्रव्यं सांख्यमत इव। अवस्थायोगित्वात्।

3. आनन्दतारतम्यं, यतः जीवस्वरूपमेव तरतमभावापन्नं तदेवानन्दशब्दाभिधेयम्। आनन्दे तारतम्यम्। तस्मात् आमनुष्यं आचतुर्मुखं आनन्दतारतम्योपपत्तिः।

4. नित्यं धर्मभूतज्ञानं न स्वीक्रियते। तत्र प्रमाणाभावात्। आत्मस्वरूपेणैव साक्षात्कारः। ज्ञातृत्वस्यापि स्वरूपत एवोपपत्तिः॥

5. ब्रह्मणो निर्विकारत्वात् न जगदुपादानत्वं निमित्तत्वमात्रमेव।

6. द्रव्याद्रव्यविभागो नाभ्युपगम्यते नीलो घटः इति तयोरभेदप्रतीतेः।

7. मुक्तौ अपि आनन्दतारतम्यस्वीकारः।

8. इतिहासपुराणवचनान्यपि ब्रह्मसूत्रविचारविषयाः ।

9. अखण्डकालस्यानभ्युगमः । क्षणलवाहोरात्रादि सूक्ष्मखण्ड-कालस्यैवानुभवविषयत्वात् ।

10. वर्णात्मकशब्द द्रव्यत्वस्वीकारः । सर्वगतत्वात् नित्यत्वात् ब्रह्मशरीरत्वाच्च । एवं अव्याकृताकाशतमसोरपि द्रव्यत्वमेव ।

11. जीवः प्रतिबिम्बरूपः, रूपं रूपं प्रतिरूपो बभूव इति वचनात्।

12. उपादेयं उपादानात् अतिरिक्तं, प्रत्यक्षादिप्रमाणबलात्तथै-वाङ्गीकार्यम् । अतः उपादानोपादेययोः नानन्यत्वम् ।

13. ब्रह्मगुणानां ब्रह्मणश्च नैव भेदः । सर्वं खल्विदं ब्रह्म इति सर्वगुणात्मकत्वस्य ब्रह्मणि प्रतीतेः ।

14. जीवानां सावयवत्वस्वीकारः ।

15. वैलक्षण्यरूपभेदनियामको विशेषः अतिरिक्तः पदार्थः नैया-यिकवत् स्वीक्रियते ।

16. भावरूपाज्ञानस्वीकरणम् ।

17. उपासनानामेव मोक्षोपायत्वं, न तु प्रपत्तेः ।

18. तत्त्वमसीत्यादौ सामानाधिकरण्यं गौणम् । अतत्त्वमसीति यदच्छेदः ।

19. ब्रह्मसूत्रेषु प्रतिसूत्रं ओंकारपूर्वकत्वनियमः प्रणवस्यापि सूत्रावयवत्वाङ्गीकरणम् ।

20. सर्वस्यापि सूत्रस्य सिद्धान्तसूत्रत्वम् । एवमन्यदप्यूह्यम् ।

### विशिष्टाद्वैते

1. अप्राकृतं तमसः पातुभूतं नित्यविभूतिस्वरूपं तमसः पर-स्तात् तमसस्तुपारे इत्यादिप्रमाणसिद्धं नापलपनार्हम् ।

2. सत्त्वं रजस्तमः इति गुणाः प्रकृतिसंभवाः इति तेषां गुणत्वमेव ।

3. सर्वेषामपि जीवानां अविशेषेण अणुपरिमाणं हि श्रूयते । एषोऽणुरात्मा चेतसा वेदितव्यः इति । अतो जीवस्वरूपे न तारतम्यम्।

4. नित्यस्य धर्मभूतज्ञानस्याङ्गीकारः। न विज्ञातुः विज्ञातेः विपरिलोपो विद्यते इति श्रुतेः। अन्यथा संसारस्य मोक्षस्य च वैलक्षण्याभावप्रसङ्गात् धर्मज्ञानसंकोचविकासाभ्यां हि वैलक्षण्यम्। आत्मस्वरूपे संकोचविकासाभावात्। अन्यथा नित्यसंसारस्य नित्यमोक्षस्यचापरिहारात्।

5. श्रुतिबलात् निमित्तत्वमुपादानत्वं च। तयोः मिथो विरोधाभावाच्च।

6. तयोः द्रव्याद्रव्ययोः विशेषणविशेष्यभावप्रतीतेः तस्य च भेदसमनियतत्वात् नाभेदसंभवः। अन्यथा लोकानुभवस्य शास्त्रस्य विरोधः।

7. तारतम्यापादककर्मणः पुण्यपापरूपस्य मुक्तावभावात् श्रुतिस्मृत्यादि विरोधाच्च मुक्तौ न कदाप्यानन्दतारतम्यम्।

8. उपनिषद्वाक्यान्येव विचारविषयत्वार्हाणि।

9. अखण्डकालस्याभ्युगमः अनादिर्भगवान् कालः नान्तोऽस्य द्विज विद्यते कालं स पचते तत्र न कालस्तत्र वै प्रभुः इत्यादिना प्रमाणेन तत् सिद्धेः।

10. ध्वन्यात्मकशब्दवत् वर्णात्मकशब्दोपि अद्रव्यमेव। किञ्चित् प्रत्यनुपादानत्वात् द्रव्यलक्षणस्यावस्थावत्वस्याभावात् अव्याकृताकाशस्य भूताकाशेऽन्तर्भावेन द्रव्यत्वमेव। तमसः पृथिव्यामन्तर्भावात् द्रव्यत्वमेव। प्रकृतिः कालः जीवः ईश्वरः धर्मभूतज्ञानं नित्यविभूतिश्चेति षट् द्रव्याणि।

11. जीवः न ईश्वरप्रतिबिम्बः नीरूपत्वात् नित्यत्वाच्च। रूपं रूपं इत्यादिवचनं संक्रान्तान्तर्यामिविग्रहपरम्।

12. सदेव सौम्येदं इत्यादिप्रमाणबलात् अनतिरिक्तत्वमेव तयोः उपादानोपदेययोः।

13. गुणानां गुणिनश्च स्पष्टमेव भेदानुभवात् ब्रह्मतद्गुणयोरपि भेदस्य दृढतरप्रमाणसिद्धत्वाच्च तयोर्भेद एव।

14. अच्छेद्योऽयं इत्यादि दृढतरप्रमाणैः नित्यत्व निरवयवत्वाच्छेद्यत्वादिसिद्धेः न सावयवत्वम् ।

15. गुणगुण्यादिभेदस्य प्रत्यक्षादिसिद्धत्वेन तेनैव विवहि निष्प्रमाणकविशेषस्वीकारोऽनावश्यकः ।

16. भावरूपाज्ञानस्वीकारः ।

17. ओं इत्यात्मानं युञ्जीत, मामेकं शरणं व्रज इत्यादि प्रमाणेन प्रपत्तेरपि मोक्षोपायत्वम् ।

18. तत्त्वमसीत्यादौ मुख्यमेव सामानाधिकरण्यं, अतत्वमसीति पदच्छेदस्यानावश्यकता च ।

19. ओंकारपूर्वकत्वनियमाभावः प्रणवस्यानवयवत्वयमेव ।

20. सिद्धान्तसूत्रत्वनियमाभावः ।

वेदनित्यत्वं, तत्स्वतः प्रामाण्यं, तदनुयायिस्मृति इतिहासपुराण प्रामाण्यं वेदापौरुषेयत्वं ब्रह्मणः शास्त्रैकगम्यत्वं, धर्माधर्मयोः वैदिकगम्यत्वं वेदान्तानां सिद्धार्थेपि तात्पर्यं, लिङर्थस्य इष्टसाधनत्वं शब्दप्रामाण्यं बौद्धाद्यागमाप्रामाण्यं पाञ्चरात्रप्रामाण्यं स्फोटवादनिरासः हरेरेव सर्वोत्तमत्वं भेदसत्यत्वं, जीवानां परब्रह्मभूत श्रीहरिदासत्वं इत्यादयः उभयवादिसंप्रतिपन्नाः ।

इत्थं श्रीरङ्गकारिप्रभवयतिपतिप्रेष्ठगुर्वीक्षितोऽयं
तत्सेवास्वादलब्ध प्रथितबहुविधप्राच्यवेदान्तवित्तिः ।
व्याकार्षीत् ब्रह्मनीतेः सहृदयसरसं सारविच्चक्रवर्ती
सर्वोत्कुष्टं विमर्शं तमथच विबुधाः प्रेक्ष्य सन्तो दयन्ताम् ॥

---

१९५ पुटानुवर्ति

सुखादिकं प्रत्यात्मनः आमत्मनःसंयोगद्वारा निमित्तत्वोपादानत्वयोः घटेश्वरसंयोगं प्रति ईश्वरस्य निमित्तत्वोपादानत्वयोश्च नैयायिकमतसिद्धत्वाच्च तन्त्रान्तरसिद्धमेवाभिन्ननिमित्तोपादनत्वम् । अत्रोपादानत्वं समवायिकारणत्वं परिणामिकारणत्वं विवर्तकारणत्वमति तत्तन्मतानुसारेण भिन्नरूपमिति त्वन्यत् । तत्र द्वैताद्वैत—196...

## अद्वैतवादिमतरहस्यप्रदर्शनम्

निर्विशेष ब्रह्मणः सत्यत्वं तदतिरिक्तस्य प्रपञ्चस्य च मिथ्यात्वं वदतां अद्वैतिनामशयोऽत्राविष्क्रियते—ते हि एवमाशेरते—अनृतेन हि प्रत्यूढाः, नीहारेण प्रावृता, मायां तु प्रकृतिं, आनीदवातं स्वधया तदेकं (स्वधा–माया) तमसा गूढमग्रे प्रकेतं, नो सदासीत्...तम आसीत्, तुच्छेनाभ्वपिहितं इन्द्रो मायाभिः हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखं, अज्ञानेनावृतं ज्ञानं, अनादिमायया सुप्तः इत्यादि प्रमाणसहस्रैः अविद्यायाः तया ब्रह्मतिरोधानस्य नानारूपत्वस्अ च बोधनात् तस्मिन् जगतः कल्पितत्वं अत एव मिथ्यात्वं च सिध्यति। ज्ञानरूपस्य स्वयंप्रकाशस्य ब्रह्मणः अविद्या कथं तिरोधानं इति नाशंकनीयम्। प्रकाशस्वरूपस्यैव सूर्यस्य तमः पुञ्जेनाच्छादनं हि यजुस्संहितायामुक्तम्। अतोऽत्रापि ब्रह्मस्वरूपतिरोधानं संभवति। सुवर्भानुरासुरः सूर्यं तमसाऽविध्यत्, तस्मै देवाः प्रायश्चित्तमैच्छन् इति यजुस्संहितायां द्वितीयकाण्डे द्वितीयानुवाके श्रूयते। सुवर्भानु,–स्वर्गस्य भां नुदति इति व्युत्पत्तिः। तमः पुञ्जरूपोऽसुरः स्वकीयतमसा सूर्यं छादयामास। ततो जगतः आन्ध्यमभवत्। सूर्यप्रभाच्छादकस्य तमसः प्रायश्चित्तं देवाः किमित्यालोचयामासुः। ततः नानाविधैः प्रकाशरूपैः मण्यादिद्रव्यैः तमोऽपाघ्नन् इति कथा तत्र श्रूयते। तस्मात् प्रकाशस्वरूपस्य तमोनिरासकस्यैव सूर्यस्य तमसा आच्छादनमिव प्रकाशस्वरूपस्य स्वयं ज्योतिषो ब्रह्मणः अविद्यया तिरोधानं संभवत्येव। प्रकाशरूपमण्यादिद्रव्यैः तमोऽपहननमिवात्रापि वाक्यजन्यज्ञानात् अविद्यानिरासश्चोपपद्यते। स्वहं प्रकाशमपि सूर्यं उपरागकाले राहुः भूलोकेपि छादयतीति प्रसिद्धम्।

आश्रयोऽस्याः तिरोधिश्च स्वरूपं सदसदन्यता। मावं निवर्तकं चैव निवृत्तिर्नोपपद्यते इति। अविद्यायां सप्तविधानुपपत्तिकथनमपि निरस्तमेतेन। परमतेपि हि ब्रह्मणः अवस्थाद्वयमुशन्ति। सूक्ष्मचिदचिद्विशिष्टत्वं, स्थूलचिदचिद्विशिष्टत्वं चेति। एवमेवाविद्याविशिष्टत्वं, तद्रहितत्वं चेत्यवस्थाद्वयमभ्युपगच्छामः। अविद्याविशिष्ट

त्वावस्थायां सगुणश्रुतीनामुपपत्तिः । राहित्यावस्थायां च निर्गुण-श्रुतीनाम् ।

ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकं । अज्ञाने चेत् तिरस्कुर्यात् कः प्रभुस्तन्निवर्तने इत्युक्तदूषणस्य नास्मन्मते प्रसक्तिः । मृषात्मक प्रपञ्चस्य ज्ञानरूप ब्रह्मबाध्यत्वानभ्युपगमात् । स्वयंप्रकाशस्य सूर्यस्य तमसेव ब्रह्मणः तमोरूपाविद्ययाच्छादनसंभवाच्च । ज्ञानं ब्रह्मेति चेत् ज्ञानमज्ञानस्य निवर्तकम् । ब्रह्मवत् तत्प्रकाशत्वात् तदपि ह्यनिवर्तकम्। इत्युक्त दोषस्यापि नास्माकं मते अवसरः । ब्रह्मस्वरूप ज्ञानस्य प्रमाण जन्यज्ञानस्य च ज्ञानत्वेनावैलक्षण्येपि आकारान्तरेण वैलक्षण्यसत्वात् । त्वन्मते हि धर्मधर्मिज्ञानयोः ज्ञानत्वरूपेणावैलक्षण्येपि आकारान्तरेण अवैलक्षण्यमिष्यते । धर्मज्ञानं हि संकोचविकासार्हम् । न तथा धर्मि-ज्ञानम् । तथैव ब्रह्मरूप धर्मिज्ञानं न निवर्तकम्, प्रमाणजन्यज्ञानं तु निवर्तकमितीष्यते । ततश्च जन्यत्वतदभावाभ्यां विशेषणसत्वात् निवर्तकत्व तदभावोपपत्तिरिति न दोषः ।

धर्मिज्ञानं संकोचविकासार्हं ज्ञानत्वात् धर्मज्ञानवदित्यनुमान प्रयोगे भवता किं दूषणं वक्तुं शक्यते । श्रुतिबाधश्चेत् ममापि समाधि-स्तुल्यः । प्रमाणजन्यज्ञानं न निवर्तकं ज्ञानत्वात् स्वरूपप्रकाश ब्रह्म-रूपज्ञानवत् इत्यनुमाने श्रुतिबाधस्य ममापि वक्तुं शक्यत्वात् ।

ज्ञानं ब्रह्मेति विज्ञानं अस्ति चेत् स्यात्प्रमेयता । ब्रह्मणोऽननुभूति त्वं त्वदुक्त्यैव प्रसज्यते ।। इतीदमपि न संगच्छते । शुद्धब्रह्मणो वेद्य-त्वानङ्गीकारात् । अविद्याविषयब्रह्मण एव जिज्ञास्यत्वाभ्युपगमात् । सच्चित् ब्रह्म न संवेद्यं संवेद्यमनृतं जडम् । इतिह्यस्मत्सिद्धान्तः । अवचनेन प्रोवाच इत्येवास्माकं मतम् । अतः उपदेश्यत्वं शुद्धब्रह्मणः नाङ्गीक्रियते । अविद्यानिष्ठं शिष्यं प्रति अविद्यानिष्टो गुरुः अविद्या-श्रयं ब्रह्म अविद्यारहितत्वेनोपदिशति । भागवतश्लोकेनाप्ययमर्थः सिद्धः ।

स वै न देवासुरमर्त्यतिर्यक् न स्त्री न षण्डो न पुमान् न जन्तुः ।
नायं गुणः कर्म न सन्नचासन् निषेधशेषो जयतादशेषः ।। इति ।

एवं तत्त्वमसीति ब्रह्मणः सामानाधिकरण्येन जीवैक्यमुक्तम् । इदं चाविद्यानभ्युगमेऽनुपपन्नं भवेत् । अतोपि ब्रह्मणः अविद्याश्रयत्वं-अभ्युगमनीयम् । नन्वत्र कथं अनुपपत्तिः । अदुष्टस्य ब्रह्मणः दुष्टस्य जोवस्य चैक्यमनुपपन्नमिति चेत् ? न, नात्र तयोरैक्यमुपदिश्यते । भेदः खलुप्रतिपाद्यते । तथा हि–तत् त्वं इति न व्यस्तं पदमिदम् । स आत्मा इति पूर्वं निर्देशात् स त्वं इत्येव वक्तव्यत्वात् । अतस्समस्तं पदम् । तस्य त्वं इति विग्रहः । राजपुरुषवत् शेषशेषिभावोऽत्रोच्यते । तस्य दासत्व-मित्यर्थः । यद्वा तेन त्वं, तस्मै त्वं, तस्मात् त्वं तस्य त्वं तस्मिन् त्वं इत्याद्यर्थस्यायि सुलभत्वात् । भेद एवात्र प्रतिपाद्यते । तत्र तत्र सूत्रे षष्ठी पञ्चमी इति योगविभागग्रहणेन, बहुलग्रहणाद्वा समासोपपत्तिश्च। किं च स आत्मा, अतत्त्वमसीति पदच्छेदस्यापि सुलभत्वात् जीवे ब्रह्मभेदः स्फुटतरं बोध्यते इति नैक्यप्रसक्तिः। अतस्तदन्यथानुपपत्त्या अविद्याभ्युपगमोपि नावश्यकः इति चेत् उच्यते--विशेषणेन विशेष्यानु गुणलिङ्गेनैव भवितव्यमिति निर्बन्धाभावात् । शैत्यं हि यत्सा प्रकृति-र्जलस्य इति विपर्ययेणापि दर्शनात् । नपुंसकलिङ्गस्य पुल्लिङ्गार्थ बोधकत्वं न भवतीत्यपि नास्ति । सुप्तिङुपग्रहलिङ्गनराणां काल हलच्स्वरकर्तृयङांच । व्यत्ययमिच्छति शास्त्रकृदेषां सोपि च सिध्यति बाहुलकेन इति वार्तिककारप्रमाणवचनाच्च । अतः तत् इति नपुंसक-निर्देशो नानुपपन्नः । अतो व्यस्तत्वे नानुपपत्तिः । अपि च तत् इति वत् त्वंपदमपि नपुंसकलिङ्गमेव । अलिङ्गं युष्मदस्मदी इति वैयाकरणै-रभ्युपगमात् अतस्समानलिङ्गकत्वं समानविभक्तिकत्वं चेति सामा-नाधिकरण्यं सम्यगुपपद्यते । पदद्वयमपि चैतन्यमेव बोधयतीति मुख्य-वृत्तत्वमेव । तृतीयादि बहुविधसमासाश्रयणं तदर्थं योगविभागाद्यंगी-करणं च क्लिष्टगतिरिति समस्तपदत्वाभ्युपगमः न प्रामाणिकश्च ।

अपि समस्तपदत्वाश्रयणं अस्माकमेवानुकूलम् । तदेव त्वं तत्त्वं तदभिन्नस्त्वं इत्यर्थसंभवात् । अब्भक्षो वायुभक्षः इति वत् अभेदस्यैव बोधनात् । अपि च स चा सौ त्वं च, तच्च त्वं च इत्यपि कर्मधारय

समासाश्रयणं संभवति। युक्तं चैतत्—निषादस्थपतिं याजयेत् इत्यादि वैदिकवाक्येषु कर्मधारय समासोह्याश्रीयते। षष्ठीतत्पुरुषाद्यभ्युपगमे लक्षणा हि स्यात्। सर्वज्ञत्वादिविशेषण, श्वेतकेतुत्वादिपिण्डरूपविशेषणपरित्यागेन चैतन्यमात्रार्थकत्वस्वीकारे लक्षणा इति उभयोः साम्यमेवेति न मन्तव्यम्। अभिधानवृत्तेरपि तात्पर्यवृत्तेः बलीयस्त्वात्। बलीयसीं तात्पर्यवृत्तिमनुरुन्ध्य सर्वंपदलक्षणायाः शास्त्रज्ञैः स्वीकाराच्च। सोऽयं देवदत्तः विषं भुंक्ष्व इत्यादौ सर्वपदलक्षणायाः अभ्युपगतत्वाच्च।

त्वमिति तदिति कार्ये कारणे सत्युपाधौ द्वितयमितरथैकं सच्चिदानन्दरूपम्। उभयवचनहेतू देशकालौ च हित्वा जगति भवति सोऽयं देवदत्तो यथैकः॥ अन्यच्च—अज्ञानरूपभावार्थसाधने प्रत्यक्षप्रमाणं यदस्माभिरुक्तं तत्र दोषकीर्तनमपि भवतां न साधु। अहमज्ञः इत्यत्र भावरूपस्यैव अज्ञानस्य सिद्धेः। अज्ञः इत्यस्याकारोपक्रमत्वमात्रमवलंब्य आभावरूपत्वसाधनं अतिसाहसम्। भावरूपार्थवाचकाः अकरोपक्रमशब्दाः कति कति सन्ति। न ते सर्वेपि अभावरूपार्थवाचकाः। यथा—

अथ, अनुनासिक, अइउण्, अधर, अवन, अलौ अद्रिः अन्यः अकार, अपीच्यदर्शीनं अहिता, अशनि अशनं अतिशय, अवधारण अश्मा अहः अन्तरा, अन्तः अम्बा अङ्गं अग्निः अयः अलकं अपः असूया अर्च्यः अर्चकः इत्यादयः शब्दाः अकारपूर्वकाः। नैते अभावार्थ वाचकाः। एवं बहवः शब्दास्सन्ति। अतो अज्ञान—अविद्यादिशब्दाः नाभाववाचका भवितुमर्हन्ति। तस्मात् भावमेवार्थं बोधयन्ति। तस्माद्भावरूपाज्ञानसिद्धिः। तेन ब्रह्मणः आच्छादनं तेन विविधविचित्र जगद्भ्रमश्चेति न कस्यचिदप्यनुपपत्तिरिति।

## द्वैतवादिनामाशयस्याविष्करणम्

भावरूपाज्ञाने न किञ्चिदपि प्रमाणमस्ति। अनृतेन हीत्यादि तु न भावरूपमज्ञानं बोधयति तत्र तत्र यथासंभव, कर्मप्रकृति लक्ष्मीरूपार्थवाचका एव ते ते शब्दाः। प्रकरणपरामर्शे तत्सर्वं विदितं

भवति । प्रकृतिपदार्थतत्कार्यवस्तुस्वीकारादि सर्वसम्मतम् । विशिष्य भवदुक्तभावरूपाज्ञानं अपि प्रकृत्यादि व्यतिरिक्तं भवति नास्त्येवेति ।

अविद्यया ब्रह्मणः तिरोधानमपि न संभवति । भित्याघटस्तिरोहितः इत्युक्ते हि अस्माकं घटज्ञानं नास्ति, घटाज्ञानमस्तीत्येवोक्तं भवति । तिरोहितस्य घटस्य तु ज्ञानमज्ञानमुभयमपि न भवति । जडत्वात् । देवदत्तः तिरोहितः इत्युक्तौ देवदत्तज्ञानमस्माकं नास्तीति हि प्रतीयेत । तिरोहितस्य तस्य स्वरूपज्ञानं तु न तस्याच्छादितं भवति । अजडत्वात् तत्स्वरूपज्ञानं तस्य तदा भवत्येव । तथैव ब्रह्मणः अविद्यया आच्छादने अस्माकमेव ब्रह्मज्ञानं नास्तीत्युक्तं भवेत् यवनिका माया जगन्मोहिनीतिवत् । अजडस्य तस्य ब्रह्मणः ज्ञानं तु स्वयं प्रकाशं तत् सर्वदास्फुरेदेव । अतोऽविद्यया ब्रह्मज्ञानासंभव एव । न च ब्रह्मणः ज्ञानरूपत्वेपि ज्ञानरूपधर्मविशेषाभावात् ब्रह्माज्ञानमस्त्येवति वक्तुं युक्तम् । तादृशार्थस्य अविद्यानाशानन्तरमपि सत्वेन ब्रह्मज्ञानस्य सार्वकालिकत्वापत्तिरिति अविद्यानाशस्यैवासंभव इति न कदाचिदपि भवन्मते मोक्षसिद्धिः । अपि च वस्तुतिरोधानं नाम वस्तुना इन्द्रियसन्निकर्षप्रतिबन्धः । यद्वा, वस्तुविषय ज्ञानरूपप्रकाशप्रतिबन्धो वा स्यात् । ब्रह्म तु भवतां ज्ञानाविषयभूतं अतस्सन्निकर्षादिप्रतिबन्धो न शक्यवचनः । तस्मात् ब्रह्मतिरोधानं, प्रकाशभूतब्रह्मतिरोधानमेव । प्रकाशस्वरूपत्वमभ्युपयतस्तव प्रकाशधर्माभावेना तत्तिरोधानासंभवात् प्रकाशनाश एव तिरोधानमिति ब्रह्मनाशे एव पर्यवस्यति अविद्यातिराधनम् । ब्रह्मविषयकवृत्तिज्ञान प्रतिबन्धरूपतिरोधनामपि न युक्तम् । आच्छादनानन्तरभावित्वात् अन्तःकरणादि वृत्तिज्ञानादीनाम् । तत् पूर्वकालिकाच्छादनादीनामेवात्र विचार्यमाणत्वात् । तिरोधानहेतुभूतं एतदज्ञानं स्वयमनुभूतं सत् ब्रह्म तिरस्करोति ब्रह्मतिरस्कृत्य स्वयमनुभवविषयो भवतीत्यादि श्रीभाष्यग्रन्थेनोक्तानां दूषणानामपरिहाराच्च अविद्यया ब्रह्मस्वरूपाच्छादनं न शक्यं वक्तुम् ।

अत्र सूर्य तमःपुंजादि दृष्टान्तोपि न समीचीनः । तत्र तमः पुंजादिना सूर्यस्याच्छादनेपि सूर्यस्य दर्शनरूपज्ञानमास्माकोनं नास्तीत्येव ।

न तु सूर्यस्यैव तत्स्वरूपज्ञानं नास्तीति। तमेव भान्तमनुभान्ति सर्वं तस्य भासा सर्वमिदं विभातीत्युक्तस्य सर्वभासकस्यापि भगवतः यवनिकयाच्छादने तत्स्वरूपज्ञानं तस्यैव नास्तीति। कथं शंक्येत। यवनिकया अस्माकं भगवत्स्वरूप तत् गुणादिज्ञानं नास्तीत्येवोक्तं भवति। भगवत्स्वरूपतिरोधानकरीं विपरीतज्ञानजननीं इति ह्युच्यते अतोऽज्ञानेन ब्रह्मतिरोधानेपि ब्रह्म नाज्ञानविषयः नाज्ञानाश्रयो वा भवितुमर्हति। अतस्सूर्यादि दृष्टान्तोऽत्रानुपपन्नः। अतोऽविद्यादि सिद्धौ प्रमाणाभावात् अविद्याराहित्य, अविद्यावैशिष्टयरूपावस्थाद्वयकल्पनमपि न प्रमाणपदवी मधिरोहित।

धर्मधर्मिज्ञानयोः ज्ञानत्वेनावैलक्षण्येपि संकोचविकासार्हत्व तदभावरूपवैषम्यवत् स्वरूपभूतब्रह्मज्ञान तत्त्वमस्यादिवाक्यजन्यज्ञानयोः ज्ञानत्वेनावैलक्षण्यमस्तीति तु अत्राप्रयोजकम्। घटपटयोः पृथिवीत्वादि, जलपृथिव्योः द्रव्यत्वादिना राजभृत्ययोः नरत्वादिना साम्येपि अन्याकारेणावैलक्षण्यमस्तीत्युक्तौ तावता विवक्षितार्थस्य नैव सिद्धिः। जन्यत्व तदभावयोः निवर्तकत्वानिवर्तकत्वासाधकत्वात्। न हि तत्त्वमसीति वाक्यावगमित ब्रह्मात्मैकत्वविज्ञानं अविद्यानिवर्तने स्वस्यजन्यत्वमपेक्षते। ब्रह्मसद्वितीयं इत्यविद्याभूत तत्कार्यप्रपञ्चादिनिवर्तने ब्रह्मात्मैकत्वविज्ञानमेव हि पर्याप्तम्। जन्यत्वस्य निवर्तकतावच्छेदककोटौ अप्रयोजकत्वात् तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्यैव प्रतिबन्धकत्वम्। नतु तदभाववत्तानिश्चयस्य प्रत्यक्षस्यैव इति वा अनुमित्यात्मकस्येति वा शाब्दबोधरूपस्येति वा नियन्तुं शक्यम्। तथैव जन्यस्यैव ज्ञानस्य निवर्तकत्वं नत्वन्यस्येति नियमनं न संभवति। विपर्ययेणाव्यापादनसंभवात्। नित्यस्यैव निवर्तकत्वं न तु जन्यज्ञानस्येत्युक्तौ को वा तन्निवारकः। जन्यस्यैव निवर्तकत्व इति नियमने जन्यस्य घटज्ञानस्यापि अविद्यानिवर्तकत्वापत्तिः। घटज्ञानस्य विपरीताकारत्वं नास्तीति चेत् विपरीताकारस्यैव निवर्तकत्वात् स्वरूपज्ञानेपि तस्याक्षतत्वात् तस्यैव निवर्तकत्वं भवतु इत्याक्षेपस्य दुस्समाधनत्वमिति।

अश्वत्थवृक्षीयं नीलं च दण्डमादाय कुलालेन घटकरणे नीलरूपस्य तद्-वृक्षीयत्वस्य च घटकारणतावच्छेदकत्वं नैव हि स्वीक्रियते । तेषामप्र-योजकत्ववत् जन्यत्वादेरप्यप्रयोजकत्वमेव । ज्ञानस्य अविद्यानिवर्तनांशे यः स्वभावः अपेक्षितः स स्वभावः प्रमाणजन्यज्ञाने इव स्वरूपज्ञानेप्य-स्तीति कथं तस्य निवर्तकत्वासंभवः । तथा चेत् प्रमाणज्ञानमपि न निवर्तकं भवेत् । एतादृशाशयः उपरि भाष्यवाक्ये एव स्पष्टः । ननु स्वरूपब्रह्मभूतप्रकाशरूपज्ञानस्य निर्विषयत्वात् निराश्रयत्वाच्च ब्रह्म प्रपञ्चरूपद्वितीयरहितमित्यर्थस्याविषयीकरणात् ब्रह्म सद्वितीयमिति ज्ञानस्य निवर्तकत्वं न संभवति विपरीताकारानवगाहित्वादिति चेन् न। तथा सति प्रपञ्चभ्रमस्यैव ब्रह्मण्यसंभव इति सद्वितीयत्व ज्ञानस्यैवानु-दयः इति सर्वोपप्लवप्रसङ्गः ।

शुद्धब्रह्मणो वेद्यत्वानङ्गीकारोपि न युक्तः । ब्रह्म निर्विशेषं इति हि भवन्मतम् । अत्राविद्याविशिष्टब्रह्मणि निर्विशेषत्वोक्तौ बाधः शुद्ध ब्रह्मणि तदुक्तौ वेद्यत्वप्रसङ्गः । अविद्यारहितत्वेन अविद्या-श्रयभूतं ब्रह्म गुरुः उपदिशति इति च व्याहतार्थकम्। माता मे वन्ध्या इतिवत् । अविद्याविशिष्टस्य ब्रह्मणः न हि अविद्यारहितत्वं संभवति । अविद्याविशिष्टत्वेन संप्रति दृश्यमानं पूर्वं वस्तुतः अविद्यारहितं इत्युक्तौ शुद्धस्य तद्रहितत्वमुक्तं भवतीति शुद्धस्य वेद्यत्वमायात इति अवेद्यत्वभंग एव । अपि च, अथातो ब्रह्मजिज्ञासा इत्यत्र अविद्या-विशिष्टब्रह्मण एव जिज्ञास्यत्वमिति भवत्सिद्धान्तः । एवं चेत् श्रवण-मननादिकमपि तस्यैवेति ध्यानसाक्षात्कारादि च तस्यैवेति च हेतोः सविशेषब्रह्मण एवोपास्यत्वं ततः मोक्षश्च इति निर्गुणब्रह्मण एवा सिद्धिः । **किं च तत्वमसीति** वाक्यजन्यज्ञानविषयत्वं निर्गुण ब्रह्मणः इष्यते, सगुणब्रह्मणो वा । पूर्वत्र ज्ञानवेद्यत्वं उत्तरत्र बाधः । शुद्ध ब्रह्मण एव भवन्मते उपदेश्यत्वानङ्गीकारात् तस्मिन्प्रमाणमेव नास्ति । मानाधीना हि मेयसिद्धिः । प्रमाणाभावेपि तत्सिद्धौ शशश्रृंगस्यापि सिद्धिप्रसङ्गः । अतो भवन्मते ब्रह्म शशश्रृंगायितमेव । अधिष्ठानरज्जु-

याथात्म्यज्ञानेन हि अध्यस्तसर्पनिवृत्तिः एवं ब्रह्मयाथात्म्यज्ञानेनैव प्रपञ्च निवृत्तिर्वक्तव्या । अतोऽपि वेद्यत्वमङ्गीकार्यम् ।

स वै न देवासुर इत्यादिभागवतश्लोकः न ब्रह्मणोऽवेद्यत्वं बोधयति । न वा अविद्याश्रयत्वम् । परं लोकदृष्टविसजातीयं ब्रह्म वस्तु इति सर्वोत्कृष्टत्वं बोधयति ।

तत्त्वमसीति वा अतत्त्वमसीति वा पदच्छेदोऽस्तु । समस्तं वा व्यस्तं वा तत् भवतु । तथापि लक्षणादोषः भवतामधिकः । सोयं देवदत्तः इत्यादौ लक्षणागन्धोपि नास्तीति श्रीभाष्यादिषु संयगुपपादितम्। विषं भुंक्ष्व इत्यादात्रपि न सर्वपदलक्षणा । द्वितीयायाः आख्यातस्य च लक्षणाभावात् ।

अपि च भावरूपाज्ञाने प्रत्यक्षं न प्रमाणं, अहमज्ञः इत्यत्र अज्ञः इति अकारोपक्रमत्वं पुरस्कृत्य अभावरूपत्वं न साधयामः । परं तु अहमज्ञः इति विवरणमनुसृत्य । मामन्यं च न जानामीति हि विवरणं भवद्भिराश्रीयते । न जानामीत्यस्य कोऽर्थः । न जानामीत्यस्य अज्ञानाश्रयः इत्यर्थः इति चेत् मां अन्यं च इत्यस्य कुत्रान्वयः । सविषयकत्वं ज्ञानस्य हि । जडभूतस्य भावरूपस्य अज्ञानस्य कथं सविषयकत्वम् । जडभूतमपि अज्ञानं सविषयकं चेत् घटोपि सविषयकः स्यात् । ननु ज्ञानाज्ञानयोः विरोधकविरोध्यभावः निवर्त्यनिवर्तकभावश्च सर्वसंमतः । स च विषयद्वारा ह्युपपादनोयः । इत्थं च ज्ञानस्येव अज्ञानस्यापि सविषयकत्वमाश्रयणीयम् । एवं आकाशस्य घटपटावच्छिन्नत्वमिव अज्ञानस्यापि घटपटाद्यवच्छिन्नत्वमस्ति । मदवच्छिन्नाज्ञानं अन्यावच्छिन्नं चाज्ञानमिति बोधः इति । न जानामि—भावरूपाज्ञानवानहं इति बोधेपि मां, अन्यं इत्यस्य अन्वयः सूपपाद इति चेत् ? अस्तु वा घटादीनां अज्ञानावच्छेदकत्वं अज्ञानविषयत्वं वा, तथापि नेदं भावरूपाज्ञानसाधनं भवति । अभावपदार्थस्य भावताप्यभ्युपगतत्वेन तेनैव निर्वाहोपपत्तेः भावरूपत्वाङ्गीकारानावश्यकत्वात् ।

ननु अहमज्ञः इत्यस्य ज्ञानाभाववानहमित्यर्थस्वीकारे प्रतियोगिभूतज्ञानस्य ज्ञानमावश्यकम् । घटाभावबुद्धौ प्रतियोगिनो घटस्य ज्ञानमिव । घटस्य जडत्वेन सविषयकत्वाभावात् स्वरूपत एव घटस्य स्मरणं पर्याप्तम् । ज्ञानस्य सविषयकत्वात् किञ्चिद्विषयकज्ञानस्यैव प्रतियोगित्वात् किञ्चिद्विषयक ज्ञानस्य ज्ञानमवश्यकमिति तत्सत्वे कथं ज्ञानाभावः । अपि च—प्रतीयमाने घटादिज्ञानाभावे अवच्छेदकतया-(विषयतया) व्यावर्तकतया च घटादीनां भानमावश्यकमिति घटाद्यवच्छिन्नज्ञानाभावः इति वक्तव्यम् । अन्यथा सविषयकत्वव्याघातः । एवं चावच्छेदकघटादिभाने सति तज्ज्ञानस्यैव सत्वेन तज्ज्ञानाभावः कथं सेत्स्यति । अतोऽत्राज्ञानस्य भावरूपत्वमकामेनापि स्वीकार्यमिति चेत् उच्यते—भावरूपाज्ञानवादिनस्तव मतेपि कथमत्र निर्वाहः । अज्ञानस्यापि सविषयकत्वेन अवच्छिन्नत्वेनचावच्छेदकघटादीनां भानावश्यकत्वात् । तज्ज्ञाने सति भावरूपं तदज्ञानं वा कथं सिध्येत् । अस्मन्मते घटादीनां ज्ञानविशेषणत्वं स्वीक्रियते । भवतां मतेपि घटादीनामज्ञान विशेषणत्वं स्वीक्रियते । विषयोल्लेखाभावे अज्ञानस्वरूपस्यैवासिद्धेः । नचाज्ञानविशेषणत्वेन घटादीनां भानेपि तद्वैशद्यं न ज्ञातमिति घटादिविषयकाज्ञानसंभवः इति वाच्यं । एवमपि घटादिवैशद्यविषयकाज्ञानमिति फलितमिति घटादेरिव तद्वैशद्यस्य विषयत्वावश्यंभावात् वैशद्यावच्छिन्नाज्ञाने वैशद्यभानमवच्छेदकतया जातमिति तद्भाने नाज्ञान संभवः पूर्वोक्तदोषापरिहारात् । ज्ञानस्य सविषयकत्वेन विषयनिर्देशावश्यकत्वात् विषयभाने विषयज्ञानाभावो न संभवतीत्येतत् भावरूपाज्ञानस्वीकारेपि समानम् ।

अपि च—अज्ञानस्य ज्ञानविषयावरणरूपत्वाङ्गीकारात् घटाज्ञानमित्यस्य घटाऽऽवारकं घटाच्छादकमज्ञानमित्यर्थः स्वीकार्यः । तथाचावच्छेदकभूतस्य घटादिविषयस्यापि ज्ञानावश्यकत्वात् तज्ज्ञाने सति तदाच्छादकमज्ञानं कथं तिष्ठेत् । अवच्छेदकघटाद्यपगमे तदज्ञानं पटस्याप्याच्छादकं भवेत् । न कस्यचिदपि वा । एतावान् दोषः अन्यं

न जानामीत्यत्र । मां न जानामीत्यत्र अस्मदर्थस्य स्वयंप्रकाशत्वात् तत्प्रयुक्तमधिकं दूषणं च ।

वस्तुतः अहमज्ञः इत्यवभासः कदा भवतीति विमर्शनीयम् । केषांचित् विषयाणां ज्ञाने अन्येषांचाज्ञाने सति अहमज्ञः इत्युच्यते न सर्वविषयकज्ञानाभावे । तथाविधपुरुषस्यैव लोकेऽभावात् । सर्वस्यापि यत्किञ्चिज्ज्ञानावश्यंभावध्रौव्यात् । अज्ञः इत्यस्य ज्ञानसामान्याभाव-परत्वं च न संभवति । यतस्स्वस्य तथाऽनुसन्धानरूपज्ञानवत्त्वम् । स्वाज्ञत्वापनोदनार्थं हि आचार्यस्य ज्ञानवत्त्वमनुसन्धाय तदुपसदनं करोति । वेदान्तश्रवणात् पूर्वं सोऽहं भगवः शोचामि, नात्मवित् । अज्ञः इत्युक्ते वेदान्तशास्त्रप्रोक्तात्मविषयकस्य तद्गतनित्यत्वाणुत्व निरव-यवत्वशेषत्वविषयकस्य परमात्मतदासाधारणधर्मादिविषयकस्य च ज्ञानस्याभावः इत्यर्थः पर्यवस्यति । एवमेव लौकिकविषयेपि अज्ञः इत्य-स्यार्थो वर्णनीयः । एवं च आत्मा कश्चिदस्ति, स देहो वा अन्यो वा अणुर्वा अन्यादृशो वा, नाहं जानामि तं, इत्यर्थे एव अहमज्ञः इति प्रयोगः । सामान्यज्ञानमेवास्ति न विशेषज्ञानमित्यभिप्रायेण अहमज्ञः इत्यनुसन्धत्ते । अत्र ज्ञानाभावविवक्षण ज्ञानस्य सविषयकत्वात् विशेषविषयकज्ञानस्यावश्यकतेति तत्सत्वे कथं ज्ञानाभावः इति शङ्कां मन्दबुद्धिरेव कुर्यात् । विशेषज्ञानाभावाद्धि अहमज्ञः इति वदति । एवं सति कस्यचिदपि ज्ञानाभावबुद्धिरेव नोदियात् । सर्वस्यापि प्रति-योगिभूतज्ञाने सविषयके विषयावश्यंभावस्यावश्यकत्वेनाभावबुद्धेरे-वानुदयप्रसङ्गः । यो यः स्वात्मानं अज्ञं मन्यते स सर्वोपि सर्वज्ञः प्रसज्येत । ज्ञानवत इवाज्ञस्यापि सर्वज्ञत्वप्रसङ्गश्च । भावरूपाज्ञान-वादिनामपि तस्य सविषयकत्वमेवेति निरुक्तदूषणस्यापरिहार एव । विशेषतो मम ज्ञानं नास्तीत्युक्तौ तादृशज्ञाने विशेषविषयकत्वभान-मनावश्यकं चेति । अतो भावरूपत्व साधनं न संभवतीति ।

इदमत्रावधेयम्—अथातो ब्रह्मजिज्ञासा इत्यारभ्य अनावृत्तिशब्दात् अनावृत्तिशब्दात् इत्येतावत्पर्यन्तानि ब्रह्मसूत्राणि बादरायणेन एकेनैव मुनिना प्रणीतानि । एतानि च वेदान्तभागोपबृंहणरूपाणि । एकस्मिन्नेवार्थविशेषे तत्पराणि एकाभिप्रायकाणि । एकस्यैवमतस्य प्रदर्शकानि इति नात्र पण्डितानां विवादः । परं तु पश्चात्तनैः पण्डितैः पदच्छेदस्यान्यथाकरणात् एकसूत्रशेषस्य पदस्य अन्यसूत्रशेषत्वोपपादनानुगुणपाठभेदस्वीकाराच्च तैः तैः वादिभिः स्वोत्प्रेक्षितार्थनयनं क्रियते। अतः अनेकमतानां प्रवृत्तिः । तत्स्थापनप्रवृत्तैः तदनुयायिभिः साग्रहैः अन्यथाऽन्यथार्थवर्णनं क्रियते—अद्यतना अपि सूत्राणां पदविभागं अन्यथा रचयन्तः अन्यमर्थं सर्वे अश्रुतपूर्वं वर्णयन्ति—तद्यथा—अथातो ब्रह्मजिज्ञासा इत्यत्र अब्रह्मजिज्ञासा इत्यपि च्छेदं कुर्वन्ति । ब्रह्मविचारस्येव अब्रह्मभूतोद्गीथाद्युपासनानामपि विचारस्यात्र क्रियमाणत्वादेव पदच्छेदः युक्तः इति च वदन्ति। ब्रह्मण इव अब्रह्मणोपि प्रणववेद प्रधानादेः ज्ञानस्यावश्यकत्वं च । व्यक्त अव्यक्त ज्ञाने त्रयाणामपि ज्ञातव्यत्वं हि शास्त्रसिद्धम् । अथातो धर्म जिज्ञासा इत्यत्रापि अधर्मजिज्ञासा इति पदच्छेदः । धर्मस्यानुष्ठेयस्येव त्याज्यस्याधर्मादेरपि ज्ञातव्यत्वावश्यकत्वात् ।। धर्मज्ञश्च कृतज्ञश्च इत्यत्र हि धर्मज्ञत्वं अधर्मज्ञत्वं च विवक्षितं, उपकारज्ञत्वं अपकाराज्ञत्वं च । न स्मरत्यपकारणां शतमप्यात्मवत्तया कथंचिदुपकारेण कृतेनैकेन तुष्यति इति ह्युपरि वक्ष्यते रामगुणः । एवमेवात्रपोति । जन्म आद्यस्य यतः इति पदच्छेदं कृत्वा आद्यस्य—चतुर्मुखस्य यतः—परस्मात्पुरुषात् जन्म इति वर्णयन्त्यर्थम् । यो ब्रह्माणं विदधाति पूर्वं इति श्रुतिः । शास्त्रयोनित्वात् इत्यत्रापि शास्त्रयोनि तु आत् इति पदच्छेदः । आत् इति पञ्चमी । पूर्वसूत्रेणैककण्ठ्यं अंगीकृत्य यतः—यस्मात् आत्—अकारार्थात् ब्रह्मणः अस्य जगतः जन्मादि भवति तत् ब्रह्म शास्त्रयोनि इति वर्णयन्ति । ब्रह्मणः अकारार्थत्वोक्त्या विष्णुत्वं साक्षात् सिध्यति ।

न शिवत्वासिद्धिः । ईक्षतेर्नाशब्दं इत्यत्र ईक्षतेः ना शब्दं इति पदच्छेदः सदादिशब्दवाच्यः ना—नरः—जन्हुर्नारायणो नरः इत्युक्तः चेतन परमात्मा शब्दमनुसृत्य इति वाक्यार्थं वर्णयन्ति । आकाशस्तल्लिगात् अन्तस्तद्धर्मोपदेशात् इत्यादौ तत् इति पृथक्पदं ब्रह्मवाचकम् आकाशः इत्यपि काश्टृ दीप्तौ इति धातुनिष्पन्नम् । आङ इत्युपसर्गः आ–समन्तात्काशते इति व्युत्पत्तिः । सर्वत्र प्रकाशते इत्यर्थः । सर्वत्र प्रकाशमानत्वं परमात्मन एव । अयमाकाशशब्दः आङ इत्युपसर्गपूर्वक काश्टृदीप्ताविति धातुनिष्पन्न इत्यत्र किं प्रमाणमिति चेत् ? लिंगात् इति समाधानम् । परायणत्वादिलिंगबलात् अयमर्थो ज्ञायते इति तात्पर्यम् । तदनन्यत्वमारंभणशब्दादिभ्यः इत्यत्र आरम्भणशब्दात् इत्यस्यैव पर्याप्तत्वात् आरम्भणशब्दात् इभ्यः इति विभागः कार्यः । इभ्यः स्वामी-इभ्य आढ्या धनी स्वामी ईश्वरः पतिरीशिता इत्यमरः। तत् अनन्यत्वं इति च्छेदः । अनन्य इति श्वेतकेतुसंबोधनम् । तत् त्वमसीति प्रत्यभिज्ञापनम् । त्वं तदसीत्यन्वयः । दहर उत्तरेभ्यः इत्यत्रापि इभ्यः इति प्रथमान्तम् । अचेतनात् उत्कृष्टः बद्धः उत् । तस्मात् उत्कृष्टः मुक्तः तस्य स्वामीत्यर्थः । अनेन अचेतन बद्ध मुक्त वैलक्षण्यं दहराकाशस्योक्तं भवति ।। एवं तत्र तत्र बुद्धिसामर्थ्यात् पदच्छेदमन्वयं चान्यथा वर्णयन्तः अपूर्वमपूर्वं अर्थं कथयन्ति । अत एव सूत्राणां तात्पर्यभेदः अर्थभेदश्च सुलभो भवति । अतः बहूनि मतानि प्रवृत्तानि । अभिवृद्धानि च । अतो बुद्धिमता श्रुतिस्मृति इतिहास-पुराणादि परामर्शेन अर्थनिश्चयः कार्यः । तत्रापि अनुग्राहक तर्कः पुरस्कार्यः । लोकानुसरणमपि रक्षणीयम् । निखिलवेदान्तवाक्याना-मप्यर्थवारस्यं पर्यालोचनीयम् । सर्वेषामादरणमपि संपाद्यम् । सर्व-जीवानामपि समरसभावस्संपाद्यः। एवमादि सर्वगुणोपेतं मतं श्रीरामा-नुजमतमेवेति सर्वैरपि निरणायि । एवमत्र श्रीभगवद्रामानुजमतं प्रशंसन्ति । यथा—

प्रायो लोकानुसारात् निखिलनिगमवाक्यानुगुण्यात् परैर-
 प्यादर्तव्याखिलार्थात् अखिलतनुभृतां रूपमुक्त्यादिसाम्यात् ।
भूतेष्वीशांगतोक्तेः शरणवरणतः सर्वमोक्षार्हतोक्त्या
 मुक्तावानन्दसाम्यात् यतिपतिकथितं सर्वसंमाननार्हम् । इति ।

स्खालित्यमत्र मम मन्दमतेः ध्रुवं स्यात्
 प्राज्ञैर्हि तीक्ष्णमतिभिः नितरामुपेक्ष्यम् ।
सर्वे हि सर्वविषयं न विदन्ति लोके
 स्खालित्यमत्र सहजं खलु गच्छतां हि ॥

गम्भीररूपे परमात्मसूत्रे निःशेषमर्थं गदितुं क्षमः कः ।
रत्नाकरे किञ्चिदनर्घरत्नप्राप्त्यापि मोदं लभते प्रजा हि ॥

न दृश्यतेऽशुभ्रपटे मलं यथा सिते पटे स्वल्पमपीह लक्ष्यते ।
तथैव दोषो गुणवज्जने स्फुटः सुदुर्गुणे नैव निरीक्ष्यते हि सः ॥

वाचां शुद्धिं पुरस्कृत्य विमर्शो रचितो मया ।
नूतनोऽयं सदास्वाद्यः पण्डितैः हृदयालुभिः ॥

मतत्रयप्रसिद्धार्थसूत्राधिकृतिभेदकः
 पदच्छेदाधिकरणविषयादिविभागकः ।
श्रीनृसिंहपदद्वन्द्वचित्तेनाद्य मया कृतः
 ब्रह्मसूत्रविमर्शाख्यग्रन्थोऽयं भुवि राजताम् ॥

व्यासार्यसूत्रं यतिराजसूक्तिः सर्वं च वेदान्तगुरोः प्रबन्धाः ।
विमर्श एषो नवनीतरूपः संमानयोग्या विलसन्तु भूमौ ॥

श्रीशङ्करः श्रीयतिराजसूरिः मध्वार्यवर्यो गुरुसन्ततिर्मे ।
श्रीवण् शठारिः गुरुराद्ययोगी तृप्ता भवन्त्वद्य गुरुर्मदीयः ॥

इत्थं श्रीरङ्गकारिप्रभवयतिपति श्रेष्ठगुर्वीक्षितोऽयं
तत्सेवास्वादलब्धप्रथितबहुविधप्राच्यवेदान्तवित्तिः ।
व्याकार्षीत् ब्रह्मनीतेः सहृदयसरसं सारविच्चक्रवर्ती
सर्वोत्कृष्टं विमर्शं तमथच विबुधाः प्रेक्ष्य सन्तो दयन्ताम् ।।

नमः श्रीरङ्गशठजिद्योगिवर्याय धीमते ।
यत्पादपद्मविभवः सिद्धिं दिशति संपदः ।।

श्रीरङ्गशठकोपार्यचरणौ शरणं भजे ।
यदीयकरुणालेशः सूते श्रीभाष्यवेदनम् ।।

इत्थं श्रीमद्वेदमार्गेत्यादिबिरुदभूषित अहोबिलमठास्थानाभिषिक्त श्रीवण्शठकोपश्री श्रीरङ्गशठकोपयतीन्द्रमहादेशिकचरणारविन्दसेवा
समासादितसकलरहस्यविज्ञानस्य
सारसारज्ञेत्यादिनानाविधबिरुदावलीभूषितस्य
**श्रीचक्रवर्त्याचार्यस्य**
कृतिषु
श्रीब्रह्मसूत्रविमर्शरूपाकृतिः
समाप्ता ।

शुभम् शुभम् शुभम्

श्रीः

# श्रीब्रह्मसूत्रविमर्शानुबन्धः

## [ब्रह्मसूत्राधिकरणविचाररूपः]

श्रीवीरराघवशठारियतीशलब्धवेदान्तयुग्ममनघं गुरुराजमीड्यम् ।
श्रीकृष्णसूरिमधिगम्य विराजमानं श्रीरंगकारिजयतीश्वरमानतोऽस्मि ॥
आनम्य सर्वगुरुमाश्रितवत्सलं तं संसेव्यचाब्धितनयासहितं नृसिंहम् ।
श्रीबादरायणवचोऽमृतमग्नचेताः कर्तुं प्रवर्त इह हर्षकरानुबन्धम् ॥

श्रीमद्रंगशठारातियतीट्दृष्ट्या वितन्यते ।
बादरायणसूत्रार्थविमर्शस्यानुबन्धनम् ॥
अत्र सूत्रार्थभाष्यार्थविचाराः हृदयङ्गमाः ।
रत्नानीव प्रदर्श्यन्ते विबुधैः बहुमानिताः ॥
उत्प्रेक्षितं महार्घं श्रीबादरायणसंमतम् ।
अर्थतत्त्वं दुरारोहं अल्पज्ञानां प्रदर्श्यते ॥
ये सामरस्यं हृदये वहन्ति तेषामसूयारहितात्मनां हि ।
अयं विमर्शो विपुलः समग्रः सम्मानयोग्यो भविता ध्रुवं मे ॥

—:0:—

### ब्रह्मसूत्राधिकरण विचाराः (ब्रह्मसूत्रविमर्शान्तर्गता)

### 1 जिज्ञासाधिकरणे—

1. भाष्ये-विनतविविधभूतव्रातरक्षैकदीक्षे इति उक्तम् । अत्र आचार्यनिष्ठयापि वत्सवृश्चिकादीनां विनतत्वं नास्तीति तेषां विषये भगवतः मोक्षप्रदत्वं नास्ति उतास्ति ? उच्यते—भूतसंबन्धी व्रातः भूतव्रातः । भगवज्ज्ञानेन लब्धसत्ताकाः भूतशब्दवाच्याः । अस्ति ब्रह्मेति चेत् वेद सन्तमेनं ततो विदुः इति श्रुतेः । इत्थं च भगवज्ज्ञान लब्धसत्ताकानां भूतानां ये संबन्धिनः तेषामपि रक्षणैकदीक्षो भगवान् ।

संश्रितसंबन्धिनामपि तत एवकारणात् भगवता रक्ष्यत्वं हि प्रमाण-सिद्धम् ॥ 'पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः। तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम् ।' इति हि श्रूयते । मदीयत्वेनाभिमान-विषयत्वमेव संबन्धः । अयमेव 'तेनैव' इत्युक्तः । तेनैव-इति तेन वैष्णवेन सह इति नार्थः बाधात् । एवं च स्वगृहस्थानां गोवत्सवृश्चिक-प्रभृतीनामपि अभिमानात् गृहस्वामिकारुण्यविषयत्वे तदनुष्ठीयमाना-चार्यप्रपत्तिविषयत्वं संभवतीति तेषु मोक्षप्रदत्वं देवस्येति । तदुक्तं—

அளவுடையார் அடைந்தார்க்கும், அதன் உரையே கொண்டவர்க்கும், வளவுரை தந்தவன் அருளே மன்னியமாதவத் தோற்கும். களவு ஒழிவார் எமர் என்ன இசைந்தவர்க்கும், காவலராம், துளவு முடி அருள்வரதர் துவக்கில் எனை வைத்தேனே.

इति । अत्र प्रथमपादेन स्वनिष्ठया न्यस्तभराः । द्वितीयेन ज्ञान-गर्भोक्तिनिष्ठया न्यस्तभराः तृतीयेन प्रभावयुक्तरहस्यवाक्यमुपदिष्टवतः आचार्यस्य कृपायां स्थितः आचार्यनिष्ठाः चतुर्थेन, आत्मापहारचौर्य-विहीन भागवतानां मदीयत्वेनाभिमानविषयाः ये ते भागवतनिष्ठाश्च विवक्षिताः । अनेनाधिकारिचतुष्टयमुक्तं भवति रहस्यार्थमुपादिष्टवन्त-माचार्यमेवाश्रित्यानुष्ठितोपायाः आचार्यनिष्ठाः । मन्त्राद्युपदेष्ट्राचार्ये कारणविशेषेणोपायानुष्ठानासंभवे अन्यत्र भागवते उपायानुष्ठानेनानु-ष्ठितोपायाः भागवतनिष्ठाः इति तृतीयचतुर्थयोः भेदः इति केचित् । अन्ये तु आचार्येण स्वार्थं स्वयमनुष्ठीयमान शरणागतौ मदीयत्वेनाभि-मानविषयः कश्चित् । पूर्वमनुष्ठितोपायस्य आचार्यस्य पश्चादनुष्ठीय-मानशरणागतौ मदीयत्वेनाभिमानविषयः आचार्यनिष्ठः कश्चित् इति आचार्यनिष्ठे एव द्वैविध्यं अस्तीति तृतीयचतुर्थ वैलक्षण्यमिति । अस्मिन्पक्षे भागवतनिष्ठेति कश्चिन्नास्ति । भागवतेनापि अन्यस्य प्रपत्यनुष्ठानेन प्राथम्याचार्यत्वस्य युक्तत्वात् । एतन्मते आचार्यनिष्ठेति भाविनीं वृत्तिमाश्रित्येति वक्तव्यम् । पूर्वं तस्यानाचार्यत्वात् । एतन्मत-रीत्या प्रपत्त्यनुष्ठानानन्तरमेव स्वाचार्यत्वोपादानात् ।

இதை தாம் அனுஷ்டிக்கவுமாம், தனக்காக ஆசார்யாதிகள் அநுஷ்டிப்பிக்கவுமாம்.
इति रहस्यरत्नावल्यां आचार्यपदं निर्दिश्य आदिपदमपि अधिकं प्रयुक्तम्। आदिपदं आचार्यव्यतिरिक्तमेव बोधयेत्। स्वविषये पश्चादनुष्ठीयमानप्रपत्तिमुपजीव्य तस्य स्वं प्रत्याचार्यत्वोपपादने आचार्यं पदमेकं पर्याप्तं आदिशब्दः व्यर्थः स्यात्। भाविनीं वृत्तिमाश्रित्याचार्यत्वोपपादनस्य तन्मतस्थेन कृतत्वात्। मन्त्रतदर्थाद्युपदेशं विना केवलप्रपत्तिकरणमात्रेणाचार्यत्वा संभवाच्च पितरं हिरण्यकशिपुमुद्दिश्य प्रपत्तिकर्तुः प्रह्लादस्य, स्वभर्तृपञ्चपाण्डवादीनुद्दिश्य प्रपत्तिकृद्द्रौपद्याश्च पितरं प्रति भर्तॄन् प्रतिचाचार्यत्वप्रसक्तेश्च॥ अपथगामिनं देवतान्तरभजननिमग्नं स्वाचार्यं उद्दिश्य भगवन्निकटे प्रपत्तिकर्तुः शिष्यस्याप्याचार्यत्वप्रसङ्गच्च इति केचिद्वदन्ति। संप्रदायज्ञाः प्रमाणम्॥ मदीयत्वेनाभिमानविषयाणां प्रपत्यनुष्ठाने लोके कस्यचित् मदीयत्वाभिमानेनानुष्ठीयमान प्रपत्तिविषयत्वं सर्वेषु अपि संभवति। कारुण्यात् सर्वे इमे जनाः मुक्ता भवन्तु इत्यभिमाने केनचित् क्रियमाणे तदभिमान विषयाः सर्वेपि तदाचार्यनिष्टा भवेयुः इति एक एव सर्वेषां आचार्यो-भवेत् इति चेत्? न। एतच्छंकानिवृत्त्यर्थमेव இசைந்தவற்கும் காவலனும் इत्युक्तम्। कस्यचित्पुरुषस्याभिमानविषयत्वेनानुष्ठीयमानविषयत्वस्य कस्मिश्चित् संभवेपि। अनेन त्वत्कृतोपायानुष्ठानं नाभ्युपगच्छा इति स्वानभ्युपगमप्रदर्शने न सा प्रपत्तिः सफला भवति। अतः तं प्रति न स आचार्यो भवितुमर्हति इति।

2. स्मृतेः दर्शनसमानाकारकत्वं प्रथमस्मरणदशायामप्यस्ति, उत नास्तीति विचारे नास्तीति सिद्धान्तः। भवति च स्मृतेः भावनाप्रकर्षाद्दर्शनरूपता। इति श्रीभाष्यसूक्तिः। दर्शनरूपत्वं भावनाप्रकर्षाधीनमित्युक्तत्वात् प्रथमस्मरणदशायां तादृशस्मृतेः भावनाप्रकर्षाधीनत्वं नास्तीति ज्ञायते। यदि तु कस्यचित् न भवान्तरे प्रकृष्टभावना आसीत्। एतज्जन्मनि पुराणश्रवणादिना स्मरणं जातं चेत् तत्स्मरणं

दर्शनसमानाकारं भवेदेव । अस्मद्दृष्टया प्रथमस्मरणमिदम्। वस्तुतः भवान्तरप्रमोषाधीनमिति न प्रथमस्मरणमिति सिद्धान्तः । केषांचित् अदृष्टवशाज्जायमानं अकाण्डे दर्शनसमानाकारत्वादि एतत्तुल्यमिति ज्ञेयम् ।

3. कालक्षेपाक्षमत्वात्कतिचन कृतिनः शीघ्रमन्ते रमन्ते इति सारावल्यामुक्तम् । कर्मविचारे अप्रवृत्तोऽपि ब्रह्मविचारे प्रवर्तत इति कथं पूर्ववृत्तत्वमिति चेन्न । आचार्योपदेशाद्वा कर्मविचारोक्तसकलार्थ ज्ञानेन कृतप्रायत्वात् । न तावता पूर्ववृत्तत्वहानिः वेद उपनिषदध्ययना भावेऽपि ब्रह्मविचारे प्रवृत्तिदर्शनात् तेषामपि पूर्ववृत्तत्वापगमप्रसङ्गात्।

यत्तु क्रमेण प्राज्ञपुरुषविषये एव कर्मविचारस्य पूर्ववृत्तत्वं, नान्यविषये इति, तन्न—तथासति तस्य भाष्यादिषु पूर्ववृत्तत्वसाधन प्रयासवैयर्थ्यापत्तेः । एकाधिकारिविषये पूर्ववृत्तत्वाभावे अद्वैतविजय प्रसङ्गश्च । अतः आचार्यमूलं तदर्थज्ञानात् कर्मविचारः कृत एव इति वक्तव्यम् ।

4. अथातो ब्रह्मजिज्ञासा – वक्तव्यविचारशब्दानुक्तिः विविदिषन्तो'ति श्रुतिपर्यालोचनाया। तत्रापि तथोक्तिः ब्रह्मज्ञानस्य प्रीतिरूपत्वेन इच्छाविषयत्वद्योतनाय । कर्माऽनुष्ठीयमानं हि दुःखरूपं, न तथाऽत्रेति । न चैवं सति धर्मजिज्ञासेति कथं निर्देशः ? इति वाच्यम्। ऐकशास्त्र्यवादिनामस्माकं सिद्धस्यापि धर्मत्वात् सिद्धब्रह्मजिज्ञासापि विवक्षितेति द्योतनाय तथा निर्देशः । तेन धर्मस्य अङ्गत्वमपि सिद्धम् ।

यद्वा–साङ्गं वेदाध्ययनं कुर्वतः आपातप्रतीतिसत्त्वात् निर्णयार्थं कर्मविचारे इच्छा प्रवर्तते इति द्योतनार्थं धर्मजिज्ञासेति पदम् । कर्मनिर्णयानन्तरं पूर्वोक्तापातप्रतीतिबलादेव ब्रह्मविचारे इच्छा जायते इति सूचनार्थं ब्रह्मजिज्ञासेति ।

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा । ब्रह्मण इति कर्मणि षष्ठी । कर्तृकर्मणोः कृति इति विशेषविधानात् इति श्रीभाष्यम् । ननु जिज्ञासाशब्दः टाबन्तः, न तु कृदन्तः । ज्ञानशब्दो हि कृदन्तः । अत्र

जिज्ञासाशब्द एव श्रूयते । अतः कथं कर्तृकर्मणोः कृति इति कर्मणि षष्ट्याश्रयणं ? उच्यते–जिज्ञास् इति सनन्तात् 'अ प्रत्ययात्' इति सूत्रेण अकारे कृत्प्रत्यये जाते अदन्तात् जिज्ञासशब्दात् 'अजाद्यतष्टाप्' इति सूत्रेण टापि जिज्ञास आ इति जाते अकः सवर्णे दीर्घः इति सवर्ण दीर्घे च जिज्ञासा इति निष्पद्यते । अयमेकादेशः अन्तादिवच्च इति सूत्रेण पूर्वस्य शब्दस्य अन्ततां भजन् तन्निष्ठं कृदन्तत्वादिकं च भजते। अतो जिज्ञासाशब्दः कृदन्तः इति कृद्योगे च षष्ठी स्वरसत एवात्र प्रवर्तते । नैष दोषः ।

## 2. जन्माद्यधिकरणे–3. शास्त्रयोनित्वाधिकरणे च

1. क्षित्यङ्कुरादिकं सकर्तृकं, कार्यत्वात् घटवत् इत्यत्र घटस्य ईश्वरकर्तृकत्वासिद्धेः सर्वजगत्कारणत्वं कथं ब्रह्मणः नैयायिकमते ?।

उपदानत्व निमित्तत्व सामानाधिकरण्याभावे कथं घटेश्वरसंयोगे ईश्वरस्योपादानत्वं इति पूर्वः पक्षः ।

### ईश्वरानुमानविचारः

अनुमानेनेश्वरसिद्धिमभ्युगच्छन्ति नैयायिकाः । तथाहि — क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वात् घटवत् इत्यनुमानप्रयोगः तेषां मते । घटादिषु सावयवत्वादिना कार्यत्वदर्शनेन कुलालकर्तृकत्वं दृष्टम् । तद्वदेव सावयवत्वादिना क्षित्यङ्कुरादीनां कार्यत्वात् तद्वत्त्वेन तेषु कर्ता कश्चन सिध्यति । अतः पक्षधर्मताबलेन उपादानोपकरणाभिज्ञः विलक्षणः सर्वज्ञः सर्वशक्तिः ईश्वरस्सिध्यतीति ते अभिप्रयन्ति ।

ननु सर्वकर्तुः ईश्वरस्य कथमनेनानुमानेन सिद्धिः ? सपक्षे घटादौ कुलाल कुविन्दादेः कर्तृत्वेन क्षित्यादि कतिपयविषय एव कर्तृत्वेन ईश्वरसिद्धेः कतिपयकार्यनिरूपितकर्तृत्वस्यैव ईश्वरे संभवात् इति । अतः सर्वजगत्कार्यनिर्माणचतुरस्यासिद्धिप्रसङ्गः । यदि घटपटादीना-मपि पक्षे अन्तर्भावः इष्यते, तर्हि दृष्टान्तासिद्धिः । वस्तुतः घटादि-कर्तृत्वस्य कुलालादौ दृष्टत्वेन पक्षान्तर्भावः अनुपपन्नश्च । घटादि-कार्यनिरूपितकर्तृत्वस्य ईश्वरे असंभवश्च । न च ईश्वरसिद्धिः केवलं

आवश्यकी। घटपटादिषु अन्यस्य कर्तृत्वेपि क्षित्यादिषु कर्तृत्वेन सिध्यतः ईश्वरत्वमिति तावन्मात्रेणेश्वरसिद्धेः इति वाच्यम्। कार्यत्व बलेन क्षित्यादिषु सकर्तृकत्वसाधनेन ईश्वरसिद्धावपि तस्य सर्वजगत् कारणत्वासिध्या पूर्वोक्तदोषानपायात्। जन्माद्यस्य यतः इत्यनेन हि सर्वजगत्कारणत्वं ब्रह्मणः स्थापितम्। न तु कतिपयकार्यनिरूपित-कारणत्वम्। अतस्तत्खण्डनाय प्रवृत्तेऽस्मिन् अधिकरणे सर्वजगत्कारण-त्वाश्रयस्यैवानुमानगम्यत्वकथनेन शास्त्रस्य अर्थवत्त्वाभावप्रतिपाद-नावश्यकत्वात्।

न च सर्वजगत्कारणस्य वा कतिपयकार्यनिरूपितकारणस्य वा सिद्धिरस्तु, तावतापि ईश्वरसिद्धेः शास्त्रस्यार्थवत्त्वं निराकृतमेव भव-तीति वाच्यं; तथा सति अखिलजगन्निर्माणकर्तुः...इत्यादि पूर्वपक्षोप-संहार-श्रीभाष्य सूक्त्यस्वारस्यापत्तेः। तत्र सर्वजगत्कारणत्वेनैव ईश्वरस्य अनुमानसिध्यभिप्रायात्। न च साध्यभूतं सकर्तृकत्वं हि कर्तृ-विशिष्टत्वम्। तत्र कर्तृत्वं निमित्तत्वरूपं तच्च सङ्कल्पाश्रयत्वं, एतादृशकर्तृवैशिष्ट्यं क्षित्यादाविव घटादिष्वपि ईश्वरमादायैवोपपद्यते, ईश्वरस्य सर्वकार्येष्वपि निमित्तत्वात्। अतस्सर्वकार्यनिमित्तत्वरूपं कारणत्वं ईश्वरे संभवत्येवेति न दोष इति वाच्यम्। तथासति कुला-लादिकमादाय सकर्तृकत्वं घटादौ नास्तीति दृष्टान्तस्य साध्यविकलता स्यात्। तत्रापि ईश्वरस्यैव निमित्तत्वाभ्युपगमात्।

न च कार्यसामान्यं प्रति ईश्वरस्य कालस्य अदृष्टस्य च निमित्त-त्वरूपकारणत्वं, घटादिकार्यविशेषं प्रति कुलालादेः निमित्तत्वञ्चेत्युप-गमात् न दृष्टान्तस्य साध्यविकलता इति वाच्यम्। घटादिषु कुल-लादेः यादृशं निमित्तकारणत्वं तादृशस्य कारणत्वस्य ईश्वरेऽसिद्धि **प्रसङ्गात्।** **ईश्वरनिमित्तकारणकेऽपि घटादौ** ईश्वरव्यतिरिक्तस्य कुला-लादेः कारणत्ववत् क्षित्यादावपि अन्यस्य निमित्तकारणस्यावश्यकत्वात् तमादाय सकर्तृकत्वोपपत्त्या सिद्धसाधनात्। न हि घटादौ कुलालादि-रिव क्षित्यादौ निमित्तकारणत्वेन ईश्वरान्यः नास्तीति वक्तुं शक्यते इति चेत्, उच्यते—

कारणं त्रिविधं भवति—समवायिकारणं, असमवायिकारणं, निमित्तकारणमिति । यत्समवेतं कार्यमुत्पद्यते तत् समवायिकारणम् । समवायिकारणे प्रत्यासन्नं कारणं असमवायिकारणम् । एतदुभयभिन्नं कारणं निमित्तकारणमिति तत्तल्लक्षणं बोध्यम् । तत्रैकस्मिन् कार्ये एकं भवति, द्वे त्रीणि वेति न तत्र नियमः । घटादिषु अनेकस्य दर्शनात् । (एकस्यैव निमित्तत्वं द्वयोरेव त्रयाणामेव इति नियमो नास्ति ।) यथासम्भवं कारणत्वस्य वक्तव्यत्वात् । समवायिकारणभिन्नस्य असमवायिकारणभिन्नस्य निमित्तत्वमित्युक्तत्वात् तत्तकार्यस्वभावपर्यालोचनया कारणसमवधानपर्यालोचनया च निमित्तकारणत्वे संख्यानियमो नास्ति । अदृष्टस्य कालस्य ईश्वरस्य च सर्वत्र निमित्तकारणत्वं कार्यत्वावच्छिन्न कार्यतानिरूपित कारणताश्रयत्वरूपं निमित्तत्वं एतेषां त्रयाणां अविशिष्टम् । तत्र चेतनस्य निमित्तत्वे तत्सङ्कल्पाश्रय त्वरूपं, अन्यत्र हेतुत्वमात्रं । जगत्सृष्टिदशायां परमाणौ प्रथमतः क्रिया, ततो विभागः ततः पूर्वसंयोगनाशः, ततः उत्तरसंयोगोत्पत्तिरिति क्रमेण द्व्यणुकोत्पत्तिः ततः क्रमेण जगदुत्पत्तिः । अत्र प्रथमतः क्रियोत्पत्तौ, अदृष्टस्य कालस्य ईश्वरस्यैव हेतुत्वं, ईश्वरः जगदुत्पत्यर्थं प्रथमतः परमाणौ क्रिया जायतामिति सङ्कल्पयति । घटादौ कुलालादिरिव नात्र ईश्वरान्यः कश्चित् सङ्कल्पयति । अतस्तत्र एकस्यैव निमित्तत्वम् । सृष्ट्यादावन्यस्याभावात् । अतः एकेन निमित्तकारणेन वा द्वाभ्यां कारणाभ्यां वा त्रिभिर्निमित्तकारणैर्वा यथासंभवं कार्योत्पत्तिः अङ्गीकरणीयेति सिध्यति । अतः क्षित्यादिपक्षे ईश्वरान्यस्य, घटादौ कुलालादेरिवाभावात् न तमादाय सिद्धसाधनम् ।

ननु तदुभयभिन्नं कारणं निमित्तकारणमिति लक्षणं न संभवति । घटेश्वरसंयोगे ईश्वरस्यापि समवायिकारणत्वात् । संयोगस्य द्विनिष्ठत्वेन ईश्वरगतत्वात् । कथं तत्र तस्य निमित्तत्वं इति चेत् । ब्रूमः— समवायिकारणत्व, असमवायिकारणत्व एतदुभयभिन्ना या कारणता तदाश्रयत्वं निमित्तत्वमिति लक्षणपरिष्कारात् । यद्यपि ईश्वरे समवायि

कारणता निमित्तकारणता चास्ति, तथापि तयोः नैकरूपता। तन्निष्ठं समवायिकारणत्वं अन्यत्, तन्निष्ठं निमित्तत्वं चान्यत्। एकस्मिन्नेव फले रूपरसयोः विद्यमानत्वेऽपि रूपनिष्ठाधेयतानिरूपिताधिकरणता अन्या। रसनिष्ठाधेयतानिरूपिताधिकरणता अन्या। तद्वदेवात्रापि न निमित्तकारणलक्षणस्य ईश्वरेऽसंभव इति।

### 7. अन्तरधिकरणे–

हिरण्मयः पुरषो दृश्यते—सूक्ष्मचेतनाचेतनशरीरकस्यैव कारणत्वादस्य कथं कारणत्वं? अत्र हि हिरण्यश्मश्रुःहिरण्यकेशः इत्यादिना अप्राकृतदिव्यमङ्गलविग्रहविशिष्टतोच्यते। एवं चाप्राकृतशरीरकत्वमुक्तं भवति। सूक्ष्माचेतनशरीरकब्रह्मणः कारणत्वोक्तौ सूक्ष्मप्राकृतशरीरकस्य ब्रह्मणः कारणत्वं लभ्यते। अतो विरोधः इति चेत् मैवं। सर्वस्यापि वस्तुनः ब्रह्मशरीरत्वमस्मत्सिद्धान्तः। एवं च सर्ववस्तुनः ब्रह्मणश्च सर्वदा सर्वथाचापृथक्सिद्धेः सर्वविशिष्टत्वमायाति। ब्रह्मणः सूक्ष्मचेतनाचेतनाविशिष्टत्वोक्तिमात्रेण किं भोगविभूतिशरीरकत्वमपसरति? कारणभूतं सूक्ष्मशरीरकं ब्रह्मैव अप्राकृतदिव्यविग्रहविशिष्टं च भवति। न तावता तस्य कारणत्वहानिः। नहि ब्रह्मणो देवदत्तशरीरकत्वे यज्ञदत्तशरीरकत्वस्य विरोधः। अतः सूक्ष्मशरीरकमेव ब्रह्म वस्तुतः अप्राकृतविग्रहविशिष्टं चेति नात्र विरोधप्रसक्तिः। एकगुणविशिष्टं ब्रह्म अपरगुणविशिष्टमपि भवतीत्युक्तौ कथं विरोधशङ्का।

### 11. इन्द्रप्राणाधिकरणे

'प्राणस्तथाऽनुगमात्।' सूत्रे इन्द्रशब्दाभावेपि 'प्राणोऽस्मि'... इति इन्द्रेणोक्तत्वात् अस्मीत्यनेन अहमर्थस्य इन्द्रस्य लाभात् इन्द्रप्राणशब्दनिर्दिष्टः इत्युक्तम्। यद्यपि प्राणाधिकरणे प्राणशब्दस्य परमात्मपरत्वं निर्णीतमिति प्राणशब्दमात्रे संशयो न भवति, तथापि अस्मीतिलब्धाहमर्थेन्द्रसामानाधिकरण्यात् प्राणोपकरणकः इन्द्रः अत्र प्रतीयते इति पूर्वपक्षाशयः। 'जीवमुख्यप्राणलिङ्गात्' इत्यत्र जीवस्यापि कीर्तनात् 'प्राणोऽस्मि प्रज्ञात्मा' इति विषयवाक्यमुपादाय जीवविषयकपूर्वपक्षः कृतः।

ननु जीवलिङ्गात् जीवत्वशङ्का युक्ता, मुख्यप्राणलिङ्गं कथं जीवत्वसाधकं प्राणत्वसाधकं हि तत्! न हि जीवलिङ्गसद्भावात् परमात्मैवेति कश्चिद्ब्रूयात् इति चेत् प्राणलिङ्गसद्भावात् प्राणप्रतीतेः प्राणवतो जीवस्यैवात्र प्रकरणवाच्यत्वमित्याशयात्। यद्वा—अध्यात्म संबन्धभूयस्त्वसत्वेन परमात्मपरत्वमिति कथं निश्चयः? जीवलिङ्ग प्राणलिङ्गानां सत्वादित्यत्रैव पूर्वपक्षप्रवृत्तिः न तु जीवत्वसाधनेऽपि इति। अत एव भाष्ये अवतरणे, 'जीववाचिशब्दैः परमात्माभिधानं किमर्थं? इत्यत्राह' इति भाषितम्।

## 12. सर्वत्रप्रसिद्ध्यधिकरणे—

'सर्वं खल्विदं ब्रह्म'...। ननु सर्वस्य ब्रह्मभिन्नत्वे तज्जत्व तल्लत्वयोः उपपादकत्वेऽपि तदनत्वस्य कथमुपपादकत्वम्? विशिष्ट ब्रह्मणः विशिष्टस्य जातत्वात्, तत्रैव लयाच्च, मृतो जातस्य घटस्य मृदि लीयमानत्वादभेदः उपपद्यते, न तु तदनत्वस्य। न च तदधीन-त्वस्य तदधीनजीवनवत्वस्यान्तर्यामित्वं विनाऽसंभवात् चेतनाचेतनयोः अन्तर्यामित्वं ब्रह्मणः सेत्स्यति। तच्चापृथक्सिद्धिरूपवैशिष्ट्यं तेन च कार्यकारणभावः इति तज्जत्वतल्लत्वयोरपि तदनत्वमुपपादकमिति वाच्यम्। एवं परम्परोपपादकत्वेऽपि साक्षादभेदस्थापने अहेतुत्वस्या-नपायात्। तज्जत्वतल्लत्वोपपादनसमये सर्वं ब्रह्म इत्यस्य विशिष्ट-परत्वं, तदनत्वोपपादने विशेष्यगात्रपरत्वमित्यस्यास्वारस्यात्। अतः शरीरेष्विव यः प्रजानां प्रत्यादिदेशाविनयं विनेता' इतिवत् अन्तर्या-मित्वं विनाऽपि तदनत्वसंभवात्। तस्यान्तर्यामित्वाक्षेपकत्वमपि नैव भवति। अपि च तज्जत्व तल्लत्वोक्त्यैव यादवप्रकाशादि मत इव स्वरूप परिणामा संभवसिद्धेः विशिष्टकरणत्वप्रतिपादनावश्यकत्वात् अपृथक्सिद्धिरूपवैशिष्ट्यान्तर्यामित्वादिसिद्धेश्च तदनत्वस्यानावश्य-कत्वमित्यपि। अत्रोच्यते—विशिष्टस्य कारणत्वं तत्रैव लयः इति च निर्विवादम्। रक्षणमपि विशिष्टस्यैव। 'यतो वा इमानि' इत्यादि वाक्ये, येन जातानि जीवन्ति' इति वाक्यपरमपि विशिष्टपरमेव

किल । एवं च विशिष्टानत्वं नाम रक्षणम् । तच्चोत्तरकालानुवृत्तिः। सा च स्वस्यैवेति अभिन्नत्वं सुतरां उपपद्यते । सूक्ष्मब्रह्म स्थूलमासीत्, तदा, एवमेव किञ्चित्कालपर्यन्तं स्थास्यामिति सङ्कल्पितवत् । स्वस्योत्तरकालानुवृत्तेः स्वस्यैव कारणत्वात् तदनत्वस्योपपादकत्वमपि । अत एव स्मृतिवचनमपि उपपन्नम्—एवं हि पुराणवचनम् ।

स एव सृज्यः स च सर्गकर्ता स एव पात्यत्ति च पाल्यते च ।
ब्रह्माद्यवस्थाभिरशेषमूर्तिः विष्णुर्वरिष्ठः वरदो वरेण्यः । इति ।

प्रथमयोजनायां — 'मनोमयः प्राणशरीरनेता,' 'मनोमयः । अमृतो हिरण्मयः ।' इति वाक्यद्वयस्योपादानोपपत्तावपि, मनसा तु विशुद्धेन' 'मनोऽभिक्लृप्तः' इति वाक्यद्वयोपादानं न शोभनम् । मनोमयपदघटितवाक्योपादानस्यैव युक्तत्वात् । न हि मनोमयपदस्य विशुद्धमनोग्राह्यत्वमित्यर्थं पूर्वपक्षी अङ्गीकरोति । सामान्यतः मनोमयपदबोधितस्य कस्यचिदर्थस्य परमात्मसाधारण्येनान्यत्र श्रुतत्वात् इदमपि प्रकरणं ब्रह्मपरमित्येतदनन्तरं मन उपकरणकत्वरूप मनोमयत्वं कथं परस्मिन्निति शङ्कायां विशुद्धमनोग्राह्यत्वरूपस्य परमात्मन्युपपत्तिरित्येव वक्तव्यत्वात् इति । तत्रोच्यते—मनोमयत्वं विशुद्ध मनोग्राह्यत्वरूपमेवेति अर्थविवरणार्थं एतादृशमनोमयत्वं ब्रह्मण्यन्यत्र श्रुतमिति बोधनार्थं च तद्वाक्योपादानमिति मन्तव्यम् ।

जीवः सुखादि भोक्ता, कर्मसम्बन्धवत्वादिति, हेतु वैशेष्यादिति सूत्रविवक्षिते शरीरस्वामित्वं उपाधिः सिद्धान्तेऽपि इति पूर्वपक्षी । सिद्धान्ती पुनः शरीरस्वामित्वरूपहेतोः कर्मसंबन्धवत्त्वेन सोपाधिकत्वं इति वदति । अतः कर्मजन्य शरीरस्वामित्वमेव हेतुः इति वक्तव्यम् ।

## 28. आनुमानिकाधिकरणे

आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्त गृहीतेर्दर्शयति च । गृहीतेः इति न धातुनिर्देशः, ईक्षतेर्नाशब्दामित्यत्रेव । तथा सति 'गृह्यतेः' इति वक्तव्यम् । रूपकविन्यस्तं—रूपितमित्यर्थः । रूपकं दृष्टान्तः, रूप्यतेऽनेनेति रूपकम् । स्वेन रूपवत् अन्यत् क्रियते ।

यत् अन्यत्र स्वगतरूपापादकं तत् रूपकं, दृष्टान्त इत्यर्थः । चन्द्र इव मुखं इत्यादौ चन्द्रः स्वगताह्लादकरत्वरूप रूपवत्त्वं मुखे स्वयमुत्पादयतीति रूपकश्चन्द्रः । अत्र रथो रूपकः । रूपके—रूपकस्थाने (रथस्थाने), विन्यस्तं—शरीरं रूपकविन्यस्तम् । रूपकत्वेन रथत्वेन शरीरं इति वाऽर्थः ।

### 38. विलक्षणत्वाधिकरणे—

किं ब्रह्मस्वरूपस्यैवोपादानत्वं, उत विशिष्टस्य ? प्रथमे जगतः ब्रह्मस्वरूपस्य चात्यन्तविलक्षणत्वात् कथमुपादानत्वं ? द्वितीये विशेषाणांशं प्रति विशेषणांशस्य विशेष्यांशं प्रति विशेष्यस्य कारणत्वमित्युच्यते, उत विशेषणांशं प्रति विशेष्यांशस्यापि कारणत्वमिति । प्रथमे विशिष्टकारणत्वमनुपयुक्तं तत्तदंशेनैव तत्तत्कार्योत्पत्तेः । विशेष्यांशं प्रति विशेष्यांशस्य कारणत्वस्यानावश्यकत्वात् । द्वितीये अत्यन्त विलक्षणत्वात् कथं कारणत्वमिति पूर्वपक्ष्याशयः । अत एव सिद्धान्ते विलक्षणयोः कार्यकरणभावप्रदर्शनपरं 'दृश्यते तु' इति सूत्रं सङ्गच्छते।

ननु विशिष्टं प्रति विशिष्टस्य कारणत्वं तदा भवति यदा विशेष्यान्वयिविधेयस्य विशेषणान्वयित्वमुच्यते । विशेष्यान्वयि कारण त्वस्य यदि विशेषणान्वयित्वं चाभ्युगम्यते तदा विशिष्टं प्रति कारणत्वमनुपपन्नमेव, तदा उपलक्षणत्वमेव न तु विशेषणत्वं विशेषणत्वेनाभिमतस्य। श्रीमन्नारायणचरणौ...इति मन्त्रे श्रियः विशेषणत्वमुच्यते श्रीविशिष्टस्योपायत्वं च । विशेष्यान्वयिनः उपायत्वस्य साक्षात् विशेष्ये नारायणे अन्वयः, तस्यैव विशेषणभूतश्रियां धर्मिपारतन्त्र्येण (स्वाश्रयाश्रितत्वसम्बन्धेन) अन्वयो वाच्यः । नो चेत् श्रियः उपलक्षण त्वमेव स्यात् । अतः सूक्ष्मचिदचिद्विशिष्टब्रह्मणः स्थूलचेतनाचेतनविशिष्टब्रह्मनिरूपितकारणत्वोक्तौ तादृशकारणत्वस्य साक्षात् ब्रह्मणि अन्वय इव धर्मिपारतन्त्र्येण सूक्ष्मचेतनाचेतनरूपविशेषणेऽप्यन्वयः एष्टव्यः। एवं च विशिष्टं प्रति विशिष्टं कारणं, विशेषणं प्रति विशेषणं कारणं विशेषणं प्रति विशिष्टं विशेष्यं च कारणमिति फलति । स्थूल

चिदचिद्विशिष्टब्रह्मनिरूपितकारणत्वस्य सूक्ष्मतादृशब्रह्मणि उक्तौ विशेष्यान्वयिनः कारणत्वस्य विशेषान्वयित्वनियमात् ब्रह्मनिरूपितकारणत्वस्य सूक्ष्मचेतनाचेतनयोरपि वाच्यतया तत्प्रति तयोः उपादानत्वप्रसङ्गः इति चेन्न—भाव्यतस्थावतः प्रागवस्थायोगित्वमात्रं नोपादानत्वं तथासति आगामि प्रलयावस्थां प्रति पूर्वभाविसृष्ट्यवस्थायाः पूर्वभावित्वेन तादृशावस्थाद्वयमादाय प्रलयावस्थापन्नब्रह्म प्रति सृष्ट्यवस्थापन्नब्रह्मणः उपादानत्वोपपत्तेः। किन्तु—भाव्यवस्थावतः प्रागवस्थायोगित्वे सति कारणत्वं उपदानत्बमिति कारणत्वघटितं तत्। साक्षात् धर्मिपारतन्त्र्येण वा कार्यतावच्छेदककोटि घटकब्रह्मणि कारणतावच्छेदककोटिघटकचेतनाचेतनयोः अवस्थायाद्वन्वयेन भाव्यवस्थावतः प्रागवस्थयोगित्वोपपादनेऽपि तत्प्रति तयोः कारणत्वस्याभावान्नोपादानत्वप्रसङ्गः। विशेषणांशं प्रति विशेष्यांशस्यकारणत्वं धर्मिग्राहकमानसिद्धामित्युपादानत्वमित्यदोषात्।

ननु विशेष्यांशस्य कारणत्वबोधक धर्मिग्राहकप्रमाणं किं? तत्र सर्वस्यापि शब्दस्य विशिष्टपरत्वेन विशिष्टयोः कार्यकारणभावप्रदर्शन तात्पर्यकत्वात्। अपि च, विशिष्टनिरूपितोपादानत्वस्य विशिष्टे हि भवद्भिरुच्यते। तच्च कारणत्वघटितमेव। विशिष्टस्थले विशिष्टान्वयिनो विशेषणान्वये सत्येव विशेषणत्वमिति निर्बन्धात् विशिष्टनिरूपितोपादानत्वस्यैव सूक्ष्मचेतनाचेतनायोर्भवतु इत्यापाद्यमानायां एवं समाधानस्यानुपपन्नत्वात् इति चेत्? उच्यते—विशिष्टान्वयिनो विशेषणेऽप्यन्वयः इति निर्बन्धाभावात्। तथापि विशेषणत्वस्यानुपपत्त्यभावात्। नीलमुत्पलमित्यादौ उत्पलविशिष्टे नीलत्ववैशिष्ट्योक्तौ नहि नैल्यस्य नीलत्वविशिष्टत्वात्मकस्य विशेषणे उत्पलत्वेऽप्यन्वयः इष्यते। एवं सोऽयं देवदत्त इत्यत्रापि तत्कालवृत्तित्वविशिष्टदेवदत्ते एतत्कालवैशिष्ट्योक्तौ तत्कालवृत्तित्वेऽप्यस्यान्वयः न ह्येष्यते इति।

## शरीरवादः

यस्य चेतनस्येति शरीरलक्षणे नियाम्यत्वस्य शरीरे उक्त्वा नियमनकर्तृः चेतनत्वं सिद्धम्। नहि चैतन्याभाववान् शक्नोति।

अतश्चेतनस्येति पदं व्यर्थं इति चेत्—तथा सति धर्मज्ञानस्यापि जीव शरीरपरत्वापत्तिः। तस्य जीवनियाम्यत्वात्। न च चेतनस्येति पदोपादानेपि जीवस्य चेतनत्वात् चेतननियाम्यत्वं तस्यास्तीति वाच्यम्। ज्ञानस्य चेतननियाम्यत्वानङ्गीकारात्। चैतन्य विशिष्टस्य जीवस्य कथं चैतन्यनियमाकत्वं? चैतन्यस्य चैतन्यविशिष्टनिरूपितनियाम्यत्वायोगात्। न हि घटस्य भूतलनिरूपितवृत्तित्वमिष्यते। अतः चेतनस्येति पदनिवेशात्—चैतन्यावच्छिन्नानुयोगिताकसम्बन्धप्रतियोगित्वमिति लक्षणे निविष्टं भवति। ज्ञानप्रतियोगिकसम्बन्धश्च न ज्ञानावच्छिन्नानुयोगिकः। न चैवं परमात्मानं प्रति ज्ञानस्य शरीरत्वं न स्यादिति वाच्यं तदीयधर्मभूतज्ञानस्य तच्छरीरत्वानाङ्गीकारात्। जीवधर्मज्ञानस्य तु तच्छरीरत्वमिष्यते। परमात्मीयज्ञानविशिष्टनिरूपितनियाम्यत्वस्य जीवज्ञाने सत्वात्। स्वविशिष्टनिरूपितनियाम्यत्वस्यैव स्वस्मिन्नसंभवात्।

### प्रधानप्रतितन्त्रविचारः

यस्य चेतनस्येति प्रथमलक्षणे गुणक्रियादिषु अतिव्याप्तिपरिहाराय द्रव्यपदनिक्षेपः इति ॥ तदिदमनुपपन्नं—

1 नियन्तुं शक्यं इत्यस्य सङ्कल्पाधीनव्यापारवत्तया कर्तुमित्यर्थात् तादृशव्यापारस्य प्रवृत्तिनिवृत्तिरूपक्रियारूपत्वात् द्रव्यस्यैव क्रियावत्त्वेन गुणस्य क्रियायाश्च तदभावेन च अतिव्याप्त्यभावात्।

2 चेतनस्येति पदमपि व्यर्थम्। ज्ञानस्य सङ्कल्परूपज्ञानाधीनव्यापारवत्त्वाभावात्। न हि स्वस्यैव स्वाधीनव्यापारवत्वम्। प्रयोज्यव्यापारवतः प्रयोजकस्यचाभिन्नत्वात्। अतो नातिव्याप्तिः ज्ञाने।

3 जीवं प्रति जीवस्यैव शरीरत्वापत्तिः। देवदत्तः खलु अकृत्यकरणे प्रवृत्तः अदृष्टवशात् सञ्जातमतिः स्वात्मानं ततो निवर्तयति। स्वसङ्कल्पाधीनव्यापारवत्त्वस्य स्वस्मिन्नेव संभवः इति।

4 एवं परमात्मानं प्रति परमात्मनः शरीरत्वापत्तिश्च। यतो विशिष्टस्य विशिष्टं प्रति कारणत्वम्। 'बहुस्यां प्रजायेय' इति बहु-

भवनकारणात् स्वनिरूपितनियमनविषयत्वस्य स्वस्मिन्नेव सम्भवात्। 'यथोर्णनाभिः सृजते गृह्णते च...' इत्युक्त्या ऊर्णनाभिं प्रति तस्यैव शरीरत्वापत्तिश्च। 'स एव सृज्यः...स च पाति' इति नियमनाश्रयत्व-नियमनकर्तृत्वयोः प्रतीतेः। अन्यथा उपादानत्वानुपपत्तिः।

5 प्राणेन्द्रियाणामपि जीवं प्रति शरीरत्वापत्तिः। जीवस्येदं शरीरमितिवत् प्राणः जीवस्य शरीरमिति न व्यवह्रियते। तेषामपि जीवनियाम्यत्वात्। न च जीवमुक्त्यनन्तरं तेषां जीवेन परित्यागात् यावत्सत्त्वं न नियाम्यत्वं इति वाच्यम्। एककल्पमुक्तस्य यावत्सत्त्वं तन्नियाम्यत्वानपायात् तं प्रति शरीरत्वापत्तेः दुर्निवारात्। न च जीवस्य देहसृष्टेः पूर्वमेव समष्टिदशायां सत्त्वात् न यावत्सत्त्वं नियाम्यत्वं तेषां संभवतीति वाच्यम्। तथासति शरीरे लक्षणसमन्व-यस्यैवासंभवात्। देहः खलु चतुर्विंशतितत्त्वमयः। अवयवातिरिक्ता-वयवीति नास्माभिः अङ्गीक्रियते। एवं च देहस्य भूतप्राणेन्द्रियसमुदाय-रूपत्वेन यावत्सत्त्वं इन्द्रियादीनां जीवेनानियाम्यत्वमेवेति लक्षणस्यैवा-संभव इति।

6 स्थावरादौ जीवनियाम्यत्वाभावेन अव्याप्तिश्च। न च तत्रापि सूक्ष्मतया नियमनादेः अस्माभिः दुर्ग्रहस्य सत्त्वमेवेति वाच्यम्। तथापि पाषाणादौ तद्भावस्य सर्वथानुपपत्तेः तत्राव्याप्तेः।

7 अपि च देहशब्दवत् शरीरशब्दस्यापि अवयवव्युत्पत्त्या विशरणस्वभावार्थकत्वेन, 'यस्य पृथिवी शरीरं' इत्यादौ विशरणस्व-भाववती इत्यर्थात् सर्वेषामपि भगवदधीनविशरणस्वभावत्वमेव बोध्यते लोकसिद्धशरीरत्वाबोधनात् चेतनाचेतनवस्तुजातस्य भगवच्छरीरत्वा-सिद्धिः। 'यस्यात्माशरीर' मित्यादावपि भगवत्सङ्कल्पेन जीवज्ञानस्य विशरणमिति विवक्षयाऽदोषात्।

8. भूतसङ्घातलक्षणस्य प्रसिद्धस्य जीवशरीरत्वमिव भगवत् शरीरत्वमपि (परम्परयेव) साक्षात् अङ्गीकुर्वतां भवतां 'न भूत-सङ्घसंस्थानो देहोऽस्य परमात्मनः' इति श्रुत्युपपत्तिः कथं ? अप्राकृत-

देहस्येवास्यापि भगवच्छरीरत्वाङ्गीकारात् । अन्यथासर्वशरीरत्वासिद्धिः ।

9 सर्ववस्तुशरीरकत्वं वदतां भवतां कुतो गुणादिशरीरकत्वानभ्युपगमः? प्राणेन्द्रियपृथिव्यादिवत्तेषामपि तथात्वे किं बाधकम्? घटरूपस्यापि घटशरीरत्वापत्तिस्तु न भवति, चेतनस्येति विशेषितत्वात् । जीवं प्रति घटरूपस्य शरीरत्वापत्तिश्च न । जीवेन सार्वकालिक नियमनाभावात् । शरीरगतरूपस्य (गुणादेः) जीवशरीरत्वं स्यादिति चेत् चेतनस्येति पदानुसारण्येन चेतननिष्ठविशेष्यतानिरूपित प्रकारताकत्वलाभेन वारणात् इति चेत्, जीववदुपपत्तेः । लोकमर्यादां विहाय वेदोक्तार्थस्पर्धालुभिः निमित्तोपादानत्वादि स्वीकारवत् एतेषामप्यङ्गीकारसंभवादिति ।

अत्रोच्यते—

1 गुणक्रियादिष्वतिव्याप्तिपरिहाराय द्रव्यत्वस्य लक्षणघटकत्वे तस्य चेतनाचेतनसाधारण्यात् नियाम्यत्वस्य चेतने एव संभवात् अचेतने द्रव्ये घटादौ नियाम्यत्वस्याभावात् तत्र शरीरलक्षणस्याव्याप्तिः । देवदत्तनियाम्यो यज्ञदत्त इति व्यवहारवत् घटो देवदत्तनियाम्यः इति न हि व्यवह्रियते । चेतनगतत्वान्नियाम्यत्वस्य । प्रधानादेश्चेतनस्य नियाम्यत्वाभावादेव हि कर्तृत्वं निषिध्यते । सति च नियाम्यत्वे भोक्तृत्वमपि स्वीकर्तुं शक्यते 'स्वर्गमोक्षादि फलस्य भोक्तारमेव कर्तृत्वे नियुञ्जते । न ह्यचेतनस्य कर्तृत्वेऽन्यो नियुज्यते' इति श्रीभाष्यम् । अतः अचेतनेषु शरीरलक्षणस्याव्याप्तिः । यदि च चेतनैकान्तस्य नियाम्यत्वस्य नात्र विवक्षणं परं तु चेतनाचेतनसाधारणस्यैव नियाम्यत्वस्य। स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थिति प्रवृत्तिभेदत्वस्य ब्रह्मणि स्वीकारात् चेतनस्वरूपस्थितिप्रवृत्तिभेदस्य भगवदधीनत्ववत् अचेतनस्वरूपस्थितिप्रवृत्तिभेदस्यापि भगवदधीनत्वात् अचेतनस्यापि प्रवृत्त्यादिसत्वात् तत्प्रयुक्तं नियाम्यत्वं सङ्कल्पाधीनव्यापारत्वरूपं संभवतीति नाव्याप्तिः । अचेतन धर्मभूतज्ञानस्य

प्रवृत्तिः विषयप्रकाशकत्व, शरीरादिप्रेरकत्व, सङ्कोचविकासवत्व, आनुकूल्यप्रातिकूल्यप्रकाशमुखद्वारकभोगरूपावस्थावत्वादिः । एवं त्रिगुणद्रव्यस्य प्रवृत्तिः । समविषमरूपेण परिणामसन्तत्याश्रयत्वं देहेन्द्रियादिरूपेण तत्तद्व्यापारजनकत्व बद्धानां रजस्तमोद्वारा तत्वाच्छादकत्वं सत्वविवृद्धया यथावदर्थप्रकाशकत्वादिः । एताः सर्वा अपि ईश्वरसङ्कल्पानुरूप विचित्रपरिणामादिरूपाः इति तासां भगवदधीनत्वं इति न दोषः इति मन्यसे, तर्हि गुणादीनां प्रवृत्तिरपि चेतनसङ्कल्पाधीना भवितुमर्हन्तीति न दोषः । आम्रफलादिषु विद्यमानं रूपरसादिकं हि आम्रफलभक्षणे भोक्तारं प्रवर्तयति । एतादृशप्रवृत्तिप्रयोजकत्वरूपं प्रवृत्तिस्तस्य । एवं स्त्र्यादिविषये तच्चेष्टा कामुकं स्ववशं करोति इति चेष्टाया अपि तत्तदनुगुणा प्रवृत्तिः विद्यत एव । वस्तुतः सर्वस्यापि ईश्वरसङ्कल्पानुरूप स्वभावत्वात् सर्वमपि भगवदधीनम् । चेतनद्रव्यगतप्रवृत्तेरिव जडद्रव्यस्यापि स्वानुगुणप्रवृत्तेस्संभवात् । तत् तत्पदार्थगत स्वभावस्यैव तत्तत्पदार्थ प्रवृत्तिरूपत्वमिति ।

2 चेतनस्येति पदमपि न व्यर्थम् । जानाति इच्छति यतते करोति इति हि क्रमः । ज्ञानेच्छाप्रयत्नकृतीनां सर्वासामपि ज्ञानरूपत्वमेव । तथापि इच्छारूप ज्ञानाधीना इच्छारूपज्ञानाधीनं प्रयत्नज्ञानं, तदधीना च कृतिः । अत एकमेव ज्ञानं तत्तदवस्थाविशेषापन्नं कार्यकारणरूपं भवति । अतस्सङ्कल्पाधीनव्यापारवत्वं ज्ञाने सुवचमिति । अत एव हि स्वसङ्कल्पाधीनव्यापारवत्वस्य स्वस्मिन् संभवः इति हेतुमुपजीव्य जीवं प्रति जीवस्य शरीरत्वापत्तिः आशंकिता ।

3 स्वभिन्नत्वविवक्षणात् न स्वंप्रति स्वस्य शरीरत्व, एतेन ।

4 चतुर्थाशङ्कापि अपोदिता । ज्ञाने शरीरलक्षणव्यावृत्त्यर्थं ज्ञानभिन्नत्व प्रतिनिधि चेतनपदप्रयोगः ।

5 भूतेन्द्रियप्राणसमुदायरूपदेहस्य यावत्सत्तं जीवेनानियाम्यत्वमिति लक्षणासंभवोपपादनमयुक्तम् । शरीरात् जीवस्योत्क्रान्त्यनन्तरं

तस्य न जीवशरीरत्वम् । मृतशरीरं च चेतनवियोगसमय एव विशरितुमारब्धम् । क्षणान्तरे च विशीर्यते । पूर्वशरीरतया परिक्लृप्तसङ्घातैकदेशत्वेन च तत्र शरीरत्वव्यवहारः इति श्रीभाष्ये अनुगृहीतम्। एवमेव जीवस्य भूतप्राणेन्द्रियसमुदायरूप शरीरसंबन्धात्मरूपकव्याकरणसमये एव तत्र शरीरत्वव्यवहारः ततः पूर्वं न तत्र जीवशरीरत्वव्यवहारः । भूतप्राण इन्द्रियादीनां पृथक् पृथक् अवस्थितेः । यदा च शरीरत्वव्यव्यवहारः तदा प्रभृति यावत्सत्तं नियमेन धार्यत्वमस्तीति न कस्यचिदपि दोषस्यावकाशः ।

6 पाषाणदावपि नियाम्यत्वं सुदुर्ग्रहमस्ति । यथा रुग्णशरीरे-नियाम्यत्वं प्रतिबद्धं कर्मवशात् । तथैव प्रबलकर्माधीनः तत्प्रतिबन्धः।

7 शरीरशब्दस्य विशरणार्थकत्वमभ्युगम्य 'यस्य पृथिवी शरीरं' इत्यादिषु निर्वाहः न युक्तः । न केवलं शरीरशब्दमात्रप्रयोगो दृश्यते तनुकायप्रभृतिशब्दैरपि अस्यार्थस्य बोधनात् । यदम्बुवैष्णवःकायः तत्सर्वं वै हरेस्तनुः इत्यादि हि स्मर्यते । अस्यार्थस्यान्यथानयनं माभूदित्यर्थं तत्वस्थितिज्ञापनाय च हि पर्यायशब्दप्रयोगः कृतः ।

8 यो रेतसि तिष्ठन् इत्यादिना सर्वत्र स्थितस्य परस्य सर्वातस्थापन्नाचेतनशरीरकत्वं नैव निषिध्यते । उभयविभूतिशरीरकत्वात्तस्य । अतो जीवशरीरभूतसङ्घसंस्थानं प्रत्यपि ईश्वरस्य शरीरित्वरूपमात्रमस्त्येव । परं तु परस्य यो देहः अप्राकृतरूपः न सः भूतसङ्घसंस्थानरूपः इत्येवात्र प्रतिपाद्यते । अपि च कर्मजन्य सुखदुःखादिहेतुभूतदेह एवात्र भूतसङ्घसंस्थानशब्देन व्यपदिश्यते, स देहोऽस्य अपहतपाप्मनो नास्तीति तात्पर्यम् ।

9 गुणादीनां ब्रह्मशरीरत्वमश्य निषेध्यं इत्यत्र नास्माकमाग्रहः। प्राणेन्द्रियपृथिव्यादिवत्तैरपि अपराधाकरणात् । परं तु लोकमर्यादामभ्युपगम्य सर्वं स्थापनीयम् । लोकव्यवहारश्च कथमस्तीति पर्यालोचने सर्वापि व्यवस्था हृदयं भवतीति । अतो लोकानुसारस्य अवश्याङ्गीकार्यत्वात् यत्र शरीरव्यवहारः तत्रैव तन्निर्वहणमावश्यकं अत्यन्त-

विलक्षणाकारेषु गजसर्पवृश्चिकपिपीलिकादेवमनुष्य जङ्गमस्थावरादिषु शरीरशब्दप्रयोगदर्शनात् सर्वत्रमुख्यतया निर्वाहार्थं हि कस्यचित् शरीरशब्दप्रवृत्तिनिमित्तत्वमास्थेयमिति श्रीभाष्यकाराः शरीरलक्षणं प्रोचुः । लोके च शरीरशब्दः घटादिशब्दवत् एकाकारद्रव्यनियतवृत्तिमनासादितः क्रिमिकीटपतङ्गसर्पनर पशुप्रभृतिषु अत्यन्तविलक्षणाकारेषु द्रव्येष्वगौणः प्रयुज्यमानो दृश्यते । तेन तस्य प्रवृत्तिनिमित्तव्यस्थापनं सर्वप्रयोगानुगुण्येनैव कार्यम् इति श्रीभाष्यसूक्तिः । अत्र द्रव्येषु इति पदप्रयोगात् द्रव्यस्यैव शरीरत्वं लोकव्यवहारसिद्धमित्यवगम्यते । लोके च गुणादि कस्यचित्प्रति शरीरमिति व्यवहारो न दृश्यते । दृश्यते च द्रव्ये शरीरत्वव्यवहारः । अतः औचित्यमनुसृत्य गुणादिव्यावृत्तये द्रव्यत्वस्य लक्षणे निवेशः । अतो निरवयवे रूपे कथमन्तःप्रवेशः इति चोद्यं जीववदुपपद्यते इति समाधानं च नात्र प्रसरति । लोक प्रसिद्धं च एकस्यैवनिमित्तोपादानत्वादि । यथोर्णनाभिः सृजते इत्यादि लोकप्रसिद्धिः श्रुत्यैव सूचिता । अतो लोक तदनुमान श्रुति प्रसिद्धमर्थं न परित्यजामः विरुद्धं च नाङ्गीकुर्मः । अचेतनानां स्वसमुचितकार्यकरणे कर्त्रधीनत्वमभ्युपयद्भिरेवास्माभिः सकर्तृकत्वसाधकेश्वरानुमाननिषेधः कृतः । सर्वकृत् नानुमातुं नापह्नोतुं च शक्यः तदुभयनियमादर्शनात् इति सारावल्यां प्रदर्शितरीत्या अनुमानेन परमात्मस्थापनं वा निषेधो वा न सिध्यति । अतः उक्तदूषणानामप्रसरात् प्रधानप्रतितन्त्रवादो नानुपपन्नः इति ।

(न विलक्षणत्वाधिकरणं)

अभिमानिव्यपदेशस्तु ... ...अत्र पृथिव्यादिषु चैतन्याभ्युपगमे **किमत्र पूर्वपक्षिणः साधकम् ?** साजात्योपपादनायेति चेत्–ज्ञानवत्वेन कारणब्रह्म कार्यचेतनाचेतनयोः साजात्येऽपि अल्पज्ञत्व दुःखमिश्रत्व स्वरूपविकारसर्वज्ञत्वादि वैषम्यस्यानिवारणात् इति चेत्, सत्यम् । ज्ञानवत्त्वमात्रमुपजीव्य साजात्योपपादनं कथञ्चित् सुशकमित्यभिप्रायेण पूर्वपक्षयवतारात् ।

तादात्म्य अपृथक्सिद्ध्यन्यतरसम्बन्धावच्छिन्न कार्यतानिरूपित तादात्म्यसम्बन्धावच्छिन्नकारणताश्रयत्वं उपादानत्वं विशिष्टस्य कारणत्वोक्तेः। विशेषणयोरिव विशेषणं प्रति विशेष्यस्यापि कारणत्वं वाच्यम्। तत्र विशिष्टयोः कारणत्वप्रतिपादकं, आरम्भणाधिकरणं। विशेषणयोः कारणत्वप्रतिपादनपरं चमसाधिकरणम्। विशेषणं प्रति विशेष्यस्य कारणत्वप्रतिपादनपरं विलक्षणत्वाधिकरणम्। विशेष्यभूतजगतः विशेष्यब्रह्मणश्च वैलक्षण्यात् कथं कारणत्वमिति मा वोचः। वृश्चिकादौ व्यभिचारात्। अतः वैलक्षण्येऽपि कारणत्वदर्शनात् जगत् प्रति ब्रह्मणः उपादानत्वं सिद्धमेव। ननु तादात्म्यसम्बन्धावच्छिन्नकार्यतानिरूपित तादात्म्यसम्बन्धावच्छिन्नकारणत्वरूपोपादानत्वं तदा न समन्वितं भवतीति चेत्—न, तदर्थमेव कार्यतायां अपृथक्सिद्धिसम्बन्धनिवेशात्। अपृथक्सिद्धिसम्बन्धेन कार्यं ब्रह्मणि तत्र कारणं ब्रह्मापि तादात्म्यसम्बन्धेन वर्तत इति। अपिचापृथक्सिद्धिसम्बन्धस्य कार्यतावच्छेदकसम्बन्धत्वमवश्यमेषितव्यम्। धर्मज्ञानविकासं प्रति जीवस्य धर्मिणः कारणत्वावश्यकत्वात्।

## 43. उपसंहारदर्शनाधिकरणे

उपसंहारदर्शनान्नेति...। सहकारिनिरपेक्षं ब्रह्मणः उपादानत्वं न सम्भवतीत्यत्र कुलालदृष्टान्तः कथं सङ्गच्छते। मृदादिदृष्टान्तो हि वाच्यः? न च निमित्तत्वेपि सहकार्यपेक्षासत्त्वात् तत्रैव पूर्वपक्षः इति वाच्यम्। तथा सतिक्षीरदृष्टान्तेन समाधानकथनस्यायुक्तत्वापत्तेः। नच उभयवधिकारणत्वे एव संशयात् उभयत्र पूर्वपक्षः, अत एवोपादानत्वे क्षीरदृष्टान्तः। निमित्तत्वे देवादि दृष्टान्तः उत्तरसूत्रोक्तः इति वाच्यं, समाधानानुगुण्येन (उभयदृष्टान्तप्रदर्श रूपेण) प्रश्नस्य उभयत्र युक्तत्वे अपि, कुलालकुविन्दादौ इति भाष्यास्वारस्यापत्तेः। न च आदिशब्देन मृदादिग्रहणं युज्यते, निमित्तसजातीयस्यैवादिपदग्राह्यत्वौचित्यात्। न च विजातीयस्यादिपदग्राह्यत्वे औचित्यम्। न च कुलालादिपदं उपादानवस्तूपलक्षणपरं इति वक्तुं शक्यं, प्रमाणाभावात्, न हि पूर्वपक्षोप-

पत्यर्थं तथा स्वीकरणं योयुज्यते। अपि च देवादिवदपि इत्यपिशब्द-स्वारस्यात् उपादानकारणत्वे एव अस्य सूत्रस्यापि स्वारस्यमिति न निमित्तकारणत्वपर उत्तरसूत्रयमपि। न च देवादीनां उपादानत्वं कथं इति वाच्यं, 'देवादाविव' इत्यर्थात् देवादिविषये इति तात्पर्याच्च। देवादिकृतवस्तुसृष्टौ यथा न सहकार्यपेक्षा तथेत्यर्थसंभवात्। यथा केशादीनादाय भूतादिसृष्टिः क्रियते दुर्वाससा। न हि केशापेक्षा तत्रास्तीति वाच्यम्, तस्योपादानत्वेनादोषात्। दध्यादौ क्षीरस्येवात्रैव तदपेक्षाया अदोषत्वात्। अत्राहुः—कार्यकारणस्थले उपादान निमित्त-सहकार्येतत्त्रितयवस्त्वपेक्षा अस्तीति सिद्धम्। क्षीरस्योपादानत्वं दध्यादौ कालादृष्टादिस्सहकारी। निमित्तं तु स्वयमेव। जगतः ब्रह्म-वत्सङ्कल्पाश्रयत्वमेव निमित्तत्वं इति न निर्बन्धः। न च दध्यादौ ईश्वरः निमित्तं, तत्रैव सन्देहात्। सांख्ये ईश्वरानभ्युपगमात्। जीवस्य निर्लेपत्वेन चैतन्याभावात्। इत्थं च क्षीरवद्धि इत्यपि निमित्तविषयमेव अतः सर्वं समञ्जसम्।

## 41. कृत्स्नप्रसक्त्यधिकरणे

कृत्स्नप्रसक्तिः...। निरवयवस्य ब्रह्मणः कृत्स्नजगद्रूपेण परि-णामः सिद्धान्तितः। अत्र निरवयवस्य कथं बहुभावित्वं तत्र सावयव-त्वदर्शनात्। न च विशिष्टकार्यकारणवादे कथमियं शंकेति वाच्य-तदापि विशेष्यांशस्यापि कार्यत्वाभ्युपगमात् विकार्यत्वावश्यकत्वात्। अन्यथा हि विशेषणांशयोरेव कार्यकारणभावे विशिष्टकारणत्वावश्य-कत्वं भवेत्, तेनैव सर्वोपपत्तेः। न च देवदत्तो जातः; बालः युवा जातः इत्यादौ विशिष्टस्यैव कारणत्वं दृश्यते तत्र विशेष्यांशस्यापि कार्यत्वमादायैव जातः इत्यादि व्यवहारोपपादनं कार्यम्। अथापि तस्य विशेष्यस्य जीवस्य कार्यत्वेपि न विकार्यत्वं स्वरूपस्य परिणामा-भावात् स्वभावपरिणामत एवोपपत्तेः। तथा प्रकृतेपि विशिष्टब्रह्मण एव कारणत्वेन स्वरूपपरिणामाभावात् न विकार्यत्वमिति कथं पूर्व-पक्षोदयः इति वाच्यम्। एवमपि कृत्स्नप्रसक्त्याद्युपपादनसंभवात्।

तथा हि। चेतनाचेतनवैशिष्ट्यं हि ब्रह्मणि भवद्भिरभ्युपगम्यते। तत्र भगवतः निरवयवस्य चेतनाचेतनसंबन्धे किं कात्स्न्र्येन तत्र भगवतस्संबन्धः। अत एकदेशेन। नाद्यः। तथासति अन्यवस्तुसम्बन्धस्य दुर्घटत्वापत्तिः। न द्वितीयः सावयवत्वप्रसङ्गात्। एवमुपपादनमभिप्रेत्यैव 'तस्य निरवयवस्य बहुभवनं नोपपद्यते, कार्यत्वानुपयुक्तांशास्थितिश्च नोपपद्यते' इति भाषितं इति। अत्रोच्यते—कृत्स्नैकदेशविकल्पः सर्वमतेऽप्यस्ति। (1) जातिवादे किमेकैकमपि जातिः कात्स्न्र्येन वर्तते उतैकदेशेन ? न प्रथमः अन्यगव्यवर्तमानत्वप्रसङ्गात्। न द्वितीयः सावयवत्वप्रसङ्गात्। (2) धर्मभूतज्ञानस्य विषयेण सम्बन्धे, एकदेशेन उत कात्स्न्र्येनेति विकल्पे सावयवत्वापत्ति, अन्यविषयासंबन्धत्वापत्तिपरिहारासंभवात्। (3) निरवयवाकाशे शब्दोत्पत्तिं वदतः एवमाक्षेपसंभवात्। (4) परमाणुद्वयसंयोगात् जगदुत्पत्तिं वदतो नैयायिकस्य मतेऽप्येवमाक्षेपात्। (5) निरवयवस्य प्रधानस्य जगत्कारणत्वं वदतः सांख्यस्य मतेऽपि पुरुषप्रधानसम्बन्धे एवं विकल्पापत्तेः। (6) विभुद्वयसंयोगमिष्यतो मतेप्येवमेव। (7) अविद्यायाः ब्रह्मणश्च संबन्धात् जगद्भ्रमं वदतः अद्वैतिनः मतेऽपि अविद्यायाः निरवयवत्वकथनादेवमाक्षेपात्।

अतः भगवतः पूर्णत्वं नामद्वित्वादिवत् न व्यासज्यवृत्ति। द्वित्वादिकं हि धर्म्यन्तरनैरपेक्ष्येण न विद्यते। न तथा धर्म्यन्तरसापेक्षं भगवतः घटे पूर्णत्वम्। अतः धर्म्यन्तरनैरपेक्ष्येण प्रतीयमानत्वमेव भगवतः तद्वस्तुनि पूर्णत्वम्। गोत्वमिव पर्याप्य वर्तते। न ह्येकस्यां गवि विद्यमानस्य गोत्वस्य गवान्तरसापेक्षस्थितिकत्वं विद्यते, इयं गौः इति प्रतीतेः। अन्यत्वे सापेक्षता। यां यां गां पश्यति तदा तदा तां तां गौरिति व्यपदिशत्येवेति। यदा घटे भगवतः पूर्णत्वं नाम कृत्स्नघटप्रदेशावच्छिन्नः संयोगः एव, यद्वा, सर्वकार्यजननशक्तिमद्भगवत्संबन्धः।

### 47 महद्दीर्घाधिकरणे

आदौ द्व्यणुकोत्पत्तिः। तत्र त्रिभिः द्व्यणुकैः त्र्यणुकोत्पत्तिः। चतुर्भिः त्र्यणुकैः चतुरणुकोत्पत्तिरिति क्रमः किमर्थमयं कृतः ?—तत्र

तत्र स्थितेषु अणुगणेषु क्रिया, क्रियातो विभागः इति रीत्या संयोगोत्पत्तिः । तत्र द्व्यणुकोत्पत्तिरिति कथं न स्यात् इति चेत्–कथं वा अनेकतन्तूनामेकदैव संयोगोत्पत्त्या पटोत्पत्तिर्निवार्यते ? दर्शनादिति चेत् कल्पनमपि दर्शनानुगुण्येनैव भाव्यमिति ।

**जातिवादः**

ननु नैयायिकमते जात्याकृतिव्यक्तीनां परस्परवैलक्षण्यं स्वीकृतम् । अत एव जात्याकृतिव्यक्तयः पदार्थः इत्युच्यते । व्यक्तीनां परस्परं भिन्नत्वात् अयं घट–अयं घट–इत्यनुगतप्रतीतिव्यवहारनिर्वाहकत्वं न संभवति । संस्थानरूपाकृतेरपि तत्तद्व्यक्तिमात्रगतत्वेन भिन्नत्वात् तस्या अपि नानुगतप्रतीतिहेतुत्वम् । अतो जायमानानुगतप्रतीति व्यवहारनिर्वहणार्थं गोत्वादिरूपा काचिज्जातिः संस्थानव्यक्तिविलक्षणा अवश्याभ्युपेया । विशिष्टाद्वैतमतेपि संस्थानातिरिक्तजातेरनभ्युपगमात् तथाप्रतीतिव्यवहारौ दुर्घटावेव । संस्थानस्य तु तत्तद्व्यक्तिमात्र विश्रान्तेः । 'संस्थानं नाम स्वासाधारणं रूपं' इति श्रीभाष्यसूक्त्यापि गोत्वरूपसंस्थानस्य तत्तन्मात्रगतत्वमेवेप्सितमिति—

अत्रोच्यते — संस्थानस्य वत्तदसाधारणत्वेऽपि सौसादृश्यस्य अनुगतप्रतीतिव्यवहारहेतुत्वाभ्युपगमात् । अयं गौः अयमपि गौरिति हि व्यवहारः । अतः एतद्गोव्यक्तिनिष्ठसंस्थानसौसादृश्यस्य अन्यगो व्यक्तावपि सत्त्वेन अनुगतप्रतीत्युपपत्तेः । एवमेव घटादिषु सर्वत्र । संस्थानव्यतिरिक्त जात्यनभ्युपगपगमेऽपि घटादिषु सौसादृश्यमवलम्ब्य अनुगतव्यवहारोपपादनं तथा शरीरे उपपादनं न सम्भवति, मनुष्य शरीरसौसादृश्याभावात् क्रिमिशरीरादिषु । अत एव भाष्ये, 'क्रिमिकीटपतङ्गसरीसृप–इत्यादि भाषितम् । अतो घटादि वैलक्षण्यं शरीरे इति न शरीरत्वं जातिरिति ।

ननु अतिरिक्तजात्यनङ्गीकारे कथमात्मसु अनुगतप्रतीतिनिर्वाहः आत्मनां निरवयवत्वेन संस्थानस्य दुर्वचत्वात् । अत एव सौसादृश्यावलम्बनमपि दुर्घटमिति चेत्...उच्यते । संस्थानं नाम स्वासाधारणं

रूपमिति यथावस्तु संस्थानं अनुसन्धेयम्। श्रीभाष्ये—'यथावस्तु—इत्याद्यपरामर्शकृतं चोद्यम्। तत्रापि चैतन्यधर्मवत्त्वे सति अणुत्वं आत्मसाधारणाकारः तेनानुगतप्रतीतिव्यवहारनिर्वाहसंभव इति। ननु रूपादिगुणेषु कथं इति चेत्—तत्राप्यसाधारणाकारस्य स्वरूपनिरूपक धर्मविशेषस्य सत्त्वात् तेन निर्वाहात्। ब्राह्मणक्षत्रियादिष्वपि सत्त्वादि गुणतारतम्यादि धर्मसत्त्वेन निर्वाहः इत्यन्यत्र विस्तरः।

## 55. तेजोऽधिकरणे

तेजोऽतस्तथाह्याह। अत्र भगवतः सूत्रकारस्य बादरायणस्य सूत्रप्रणयनशैलीं पश्यामः। अधिकाक्षरासंकलनपूर्वकं यावद्भिरक्षरैः सूत्रग्रथने लाघवं सिध्येत् तत्रैव दत्तदृष्टिः सूत्राणि रचयति सूत्रकारः। 'आपः' 'पृथिवी' इत्यादि सूत्रं तु अतिलघुभूतम्। द्वित्र्यक्षरैरेवात्र-सूत्रग्रथनम्। अर्थेऽपि लाघवं पश्यन् एवं प्रणिनाय। पूर्वसूत्रात् 'अतस्तथाह्याह' इत्यनुषज्यात्र सूत्रद्वयेऽपि अर्थं वर्णयति। सूत्रे अतः शब्दो वायुपरः। 'आपः' इति सूत्रे अनुषक्तस्य अतः इत्यस्याग्निरर्थः। 'पृथिवी' इत्यत्रानुषक्तस्य तच्छब्दस्य जलमर्थः। प्रथमसूत्रे वायुपरामर्शार्थमेव 'एतेन मातरिश्वा व्याख्यातः इति पूर्वाधिकरणे वायुप्रस्तावः कृतः।

यद्यपि एतेन मातरिश्वा व्याख्यातः इति सूत्रमनपेक्षितम्। अधिकशङ्काभावात्। 'तेजो वायोस्तथाह्याह' इति अतश्शब्दं विना सूत्रप्रणयनमपि युक्तम्। अथापि 'आपः' 'पृथिवी' इत्यनयोः अतः शब्दानुषङ्गः न सेत्स्यति पूर्वसूत्रे अतश्शब्दस्यानुक्तत्वे। अत्र 'आपः अग्नेस्तथाह्याह,' 'पृथिवी अद्भ्यः तथाह्याह' इति सूत्रयितव्यं स्यात्। एवं सत्यतिगौरवं भवेदिति मत्वा सूत्रकारः 'एतेन मातरिश्वा व्याख्यातः' इति पृथक् योगं चकार। अत्र सूत्रे वायुशब्दमनुक्त्वा मातरिश्वशब्दप्रयोगस्तु श्रुतिपर्यालोचनया।

अन्यदपि किञ्चिदत्र विमृशामः—अत्र पूर्वपूर्वतत्त्वादेवोत्तरोत्तरतत्त्वानामुत्पत्तिः उत तत्तत्तत्त्वशरीरकाद् ब्रह्मणः उत्तरतत्त्वोत्पत्तिरिति

संशयः उत्तरपक्षः सिद्धान्तितः। पूर्वपक्षे ब्रह्मकारणत्वबोधकश्रुतयः परम्परया ब्रह्मणः कारणत्वबोधनतत्पराः। द्वितीयपक्षे तु साक्षात् कारणत्वबोधकाः। अत्र महदादि सर्वतत्वविषयेऽपि इमामाशङ्कामुद्भाव्य परिहारः कार्यः। अत एव श्रीमति भाष्ये, 'उदाहृताः तेजः प्रभृतयः प्रदर्शनार्थाः इति भाषितम्। श्रुतप्रकाशिकायामपि 'महदादीनां तत्वानां किं केवलात् पूर्वपूर्वतत्वमात्रादुत्पत्तिः उत तत्तद्रूपात् ब्रह्मणः इति संशयकोटिः निक्षिप्ता। एवं च सति सूत्रकार; महदादि तत्वविषये इमामाशङ्कां अप्रदर्श्य तेज आदि विषये शङ्कामिमां किमिति प्रदर्शयति।

अत्र केचिदेवमभिप्रयन्ति—सूत्रकारः छान्दोग्यश्रुतौ बहुलं दत्तदृष्टिस्सन् तामेवोपनिषदं अधिकं विमृशति। अत एवादौ 'ईक्षतेर्नाशब्द'मिति शास्त्रारम्भकाले छान्दोग्यश्रुतिः विचार्यते। अतोऽत्रापि छान्दोग्यश्रुतिं मनसि निधाय सूत्रं प्रणिनाय। तैत्तिरीयश्रुतौ अग्निशब्दो हि श्रूयते। छान्दोग्ये तु 'तत्तेज ऐक्षत' इति तेजश्शब्द एव। 'तेजोऽतस्तथाह्याह' इति तेजश्शब्दं प्रयुञ्जानस्य सूत्रकारस्य छान्दोग्य श्रुतिरेव मनसि विपरिवर्तमानाऽभूदिति निश्चप्रचम्। एवं च छान्दोग्ये सृष्टिप्रकरणे तेजः प्राथम्यदृष्टेः तेजः प्रभृति विचारं चकार व्यासः। 'अधिकाररूपशब्दान्तरेभ्यः' इति सूत्रं छान्दोग्यश्रुतिविषयवाक्यकं इत्यपि निर्विवादं इति। अन्ये तु छान्दोग्यश्रुतिविचारस्य सूत्रकारेण बहुलं कृतत्वेऽपि छान्दोग्यश्रुतिप्रत्यभिज्ञापक तेजः पदस्यात्र श्रवणेपि इदं सूत्रं तैत्तिरीयश्रुतिं प्रधानीकृत्यैव प्रयुक्तम्। अन्यथा 'अतः' इति पञ्चम्यन्तं पदं अनुपपन्नं भवेत्। न हि वायोः तेजसः उत्पत्तिबोधकं श्रुतिवाक्यं छान्दोग्ये श्रूयते। 'वायोरग्निः' इति तैत्तिरीये तु श्रूयते। 'तत्तेजोऽसृजत' इति सच्छब्दार्थभूतपरामर्शितच्छब्दः परमेव बोधयतीति तस्मात् ब्रह्मणः तेजसः उत्पत्तिरेवात्र बोध्यते इति प्रत्युत विरुद्धं च। 'पृथिवी' इति सूत्रं, 'अद्भ्यः पृथिवी' इति तैत्तिरीयश्रुतिमेव च प्रत्यभिज्ञापयति। अतः तैत्तिरीयश्रुतिकटाक्षेणैवेदमधिकरणं

प्रवृत्तं, अत एव प्रथमसूत्रे 'वायोरग्निः' इति तैत्तिरीयश्रुतिरेवोदाहृता। छान्दोग्ये वायोः अग्न्युत्पत्तिबोधकश्रुतेरभावात्। अनन्तसूत्रद्वये तु 'तदपोऽसृजत' 'ता अन्नमसृजन्त' इति छान्दोग्यश्रुतिरपि विषयीकृता अप्रधानेनेति। अत्रेदं तत्त्वम्—सूत्रकारशैलीपरामर्शे व्यासः उभयोमपि श्रुतिमन्त्राभिप्रैतीति वक्तव्यमेव। परं तु सर्वतत्त्वविषये इमामाशङ्का-मनुद्भाव्य तेजः प्रभृतिविषये केवलं एतादृशशङ्कोद्भावनं किमर्थं कृत-वानिति तु विमर्शनीयमेव। एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी, 'तत्तेजोऽसृजत' आत्मन आकाशस्सम्भूतः' इति तत्त्वानां परमात्मजन्यत्वं उक्तमिति तत्त्वानि प्रति परमात्मनः कारणत्वं सिध्यति। 'आकाशाद्वायुः', 'वायोरग्निः', 'अग्नेरापः', 'अद्भ्यः पृथिवी', 'तदपोऽसृजत', 'ता अन्नमसृजन्त' इति केषाञ्चित्तत्वानां पूर्वपूर्वतत्वकारणत्वं श्रुतम्। अतः उभयं श्रुत्यविरोधाय पुत्रपौत्रादिनोत्या कारणत्वबोधनपरा ब्रह्म-कारणकत्वबोधकश्रुतिः। साक्षात्कारणबोधनपरा पूर्वपूर्वतत्वात् उत्त-रोत्तरतत्वोत्पत्तिबोधकश्रुतिः इति वक्तव्यम्। तत्रापि अग्निजलपृथिवी रूपतत्वानां वाय्वग्निजलरूपतत्वेभ्यः उत्पत्तेरुक्तत्वात् तदरिक्ततत्वानां साक्षादेव ब्रह्मणः उत्पत्तिः, एषां तु पूर्वतत्वादेवेति निश्चयः कार्यः इत्येवमालोच्य पूर्वपक्षी, तेजोऽतस्तथाह्याह, आपः, पृथिवी इति पूर्व-पक्षं चकार। यद्यपि आकाशस्य 'आत्मन आकाशस्सम्भूतः' इत्या-त्मनः संभवोक्त्या साक्षात् तं प्रति कारणत्वनिश्चयेऽपि वायुं प्रति साक्षात्कारणत्वं न निश्चेतुं शक्यम्।

'आकाशाद्वायु' रिति आकाशस्यैव साक्षात्कारणत्वोक्तेः। अतः तेजः प्रभृतिष्विव वायुविषयेऽपि एतादृशशङ्कोद्भावनं युक्तम्। अथापि 'आकाशाद्वायुः' इत्यत्राकाशशब्दस्य आसमन्तात् काशते इति व्युत्पत्त्या परमात्मपरत्वसम्भवेन वायोः साक्षात् ब्रह्मजन्यत्वं निश्चेतुं शक्यत इति पूर्वपक्ष्यभिप्रायात्। आकाशस्य परमात्मपरत्वं तु आकाशस्त-ल्लिङ्गादित्यत्रैव सिद्धम्। ज्योतिः प्राणादि शब्दानां परमात्मपरत्व-

मिव वायुशब्दस्य परमात्मपरत्वं तु न कुत्रापि सूत्रेण साधितम् । अतो वायोरग्निः इत्यत्र वायुशब्दः प्रसिद्धवायुपर एवेति तस्मादेवाग्नेरुत्पत्त्युक्त्या साक्षादेव अग्न्यादेः वाटवायुपन्नत्वमिति पूर्वपक्षी मन्यते । अतः तेज आदिष्वेव शङ्का सम्भवतीति तेजोऽतस्तथाह्याह, आपः, पृथिवी इत्यसूत्रि । केचित्तु, तदभिध्यानादेव तु तल्लिङ्गात्सः इति सिद्धान्तसूत्रं परामृश्य ईक्षणादिसङ्कल्पस्य तेज आदिष्वेव श्रवणात् तस्यैव समाधानत्वेन वक्ष्यमाणत्वाच्च सिद्धान्तं सौकर्यार्थं तेज आदिष्वेवं शङ्कनं कृतं इति वदन्ति । वस्तुतः वाय्वादिषु एवं शङ्कायां कृतायामपि तेज आदिषु ईक्षणश्रवणेन वाय्वादिष्वप्यनुमायेक्षणं समाधानं वक्तुं शक्यं, परन्तु साक्षात्तत्रेक्षणस्य तेज आदिष्वेव श्रवणात् तत्रैव शङ्कायुक्तेत्यभिप्रायः ।

अधिकाररूपशब्दान्तरेभ्यः । ता अन्नमसृजन्त इत्यत्र अन्नशब्दः पृथिवीवाचकः इत्यत्र हेतुत्रयमनेन सूत्रेणोच्यते । तत्तेजोऽसृजत, तदपो असृजत इति भूतद्वयसृष्ट्युक्तेः तदन्तरोक्तान्नसृष्टिरपि पृथिवीरूपभूत सृष्टिरेवेति निश्चीयते इति अधिकाररूप प्रस्तावः एको हेतुः । रूपसंशब्दनं द्वितीयो हेतुः 'यदग्नेः रोहितं...यत्कृष्णं तदन्नस्य' इत्यत्र अन्नशब्दः पृथिवीपरः इत्यकामेनापि स्वीकर्तव्यम् । त्रिवृत्कृतैरेवाण्डैः पदार्थसृष्टिः इत्यत्र श्रुतीः प्रमाणत्वेन प्रदर्श्य अण्डान्तर्गताग्निदर्शनेऽपि त्रिवृत्करणमस्तीति ज्ञायते । अन्यथा त्रिरूपत्वं नोपलभ्येत । तत्र रोहितरूपं तेजोगतं, शुक्लरूपं जलगतं, कृष्णरूप पृथिवीगतं, रूपत्रयस्याप्यग्नौ दर्शनात् अग्नेः त्र्यंशत्वमस्तीति त्रिवृत्कृतत्वमग्नेः प्रतीयते । त्रिवृत्करणं च भूतत्रयस्यैवेति अन्नशब्देनोक्तं भूतं पृथिवीति निश्चीयत इति । यद्यपि त्रिवृत्करणं देवतात्रयाणां इति निर्विवादं, तासां त्रिवृतं त्रिवृतं एकैकां करवाणि इति श्रुतेः । परं तु पृथिवी भूतमप्यन्तर्भाव्य त्रिवृत्करणं कृतमिति न वक्तुं शक्यते तत्र पृथिव्यनुक्तेः । तासां त्रिवृतं त्रिवृतं इत्यत्र पृथिवीवाचकपदाभवात् पूर्ववाक्ये 'ता अन्नमसृजन्त' इति अन्नशब्दस्यैव श्रवणात् अन्नतेजोजलानामेव त्रयाणां त्रिवृत्करणप्रतीतेः । अतस्त्वान्नशब्दस्यैव पृथिवीवाचकत्वे संप्रति

सन्दिह्यमानत्वात् । तथापि 'अधिकार शब्दान्तर' रूपहेतुद्वयेन अन्न-शब्दस्य पृथिवीवाचकत्वे सिद्धे रूपसंशब्दनमपि अभ्युच्चायकं भवति इत्यत्र तात्पर्यमिति निश्चीयते ।

## 56. आत्माधिकरणे

1. 'नात्मा श्रुतेः...।' उत्पत्तिविनाशोभयप्रतिषेधकश्रुतेः इत्यर्थः। न जायते, न म्रियते इति श्रुतेः प्रमाणीकरणात् संप्रति विद्यमानाः जाताः जीवाः एवंभूता भवन्तु। नूतनजीवानामुत्पत्त्यादिकमस्तु इत्यत्राह 'नायं भूत्वा भविता वा न भूयः' इति । ननु शुद्धजीवस्वरूपं अनादि अनन्तं च भवति अथापि शरीरसम्बन्धे जाते विशेषणस्येव विशेष्य-स्यापि नाशादिकं भवतु, गुणिनोऽपि दुष्टसम्बन्धेन दुष्टत्ववत्–इत्यत्राह 'न हन्यते हन्यमाने शरीरे' इति । ननु उत्पत्तिप्रतिपादकश्रुत्या सर्व विज्ञानप्रतिज्ञारूप श्रुत्यर्थापत्त्या च उत्पत्त्यादिकं स्थापितं, न जायते इत्यादि श्रुत्या तदभावः स्थाप्यते । उभयोः श्रुतित्वाविशेषात् न किमपि साधयितुं शक्येत, सत्प्रतिपक्षितत्वमेव स्यात् । अस्मछ्रुते-रन्यथाकरणे युष्मत् श्रुतेरप्यन्यथाकरणं न स्यात् किं, इत्यत्रनित्य-त्वाच्चेति हेत्वन्तरम् । अस्मत् श्रुतेः अनुग्राहकतर्कोऽप्यस्तीति तात्पर्यम्।

2. 'न जायते म्रियते वा विपश्चित्' इति श्रुतिः, 'नात्मा श्रुतेः...इत्यत्र विवक्षिता । अत्र 'विपश्चित्' इत्युक्त्या 'ब्रह्मणा विप-श्चिता' इति पर्यालोचनया च इयं श्रुतिः न जीवपरा इति यदि कश्चित् मन्येत तदा जीवस्य नोत्पत्त्यभावः प्रतिपादयितुं शक्यते इति मत्वा 'नित्यत्वाच्च' इत्यधिकं उक्तम् । अत्र च 'नित्योनित्यानां...' इति श्रुतिः विवक्षिता । यद्वा–आत्मा प्रागभावशून्यः न जायते इति श्रुतेः। प्रागभावशून्यत्वेऽपि ध्वंसो भवतु इत्यत्र नित्यत्वाच्चेत्युक्तम् । अनेन ध्वंसशून्यत्वरूपनित्यत्वं मनसि सिद्धवत्कृत्य पूर्वसाध्यं प्रागभावशून्यत्वं स्थापितं, तत्रैव हि सन्देहः शङ्कितः इत्यत्र 'ताभ्यः' इत्यधिकं उक्तम् । अत्र ध्वंसभिन्नत्वे सति ध्वंसशून्यत्वं हेतुः । भावत्वे सतीतिवा । 'न जायते' इति प्रागभावनिषेधः । 'न म्रियते' इति ध्वंसनिषेधः । 'नायं...'इति देवादिरूपेण जननात् कुतो न प्रागभावः इति शङ्कां

द्यति । 'अजः नित्यः' इति पूर्वोक्तानुवादः । स्थायित्वेन नित्यत्वं इति निवारणाय 'शाश्वतः' इति ।

नात्मा श्रुतेः—ननु श्रुतेः आत्मा नोत्पद्यते इत्युक्तं तु सङ्गतं नित्यत्वाच्च नोत्पद्यते इति तु कथं ? उत्पत्यभावो हि प्रागभावप्रतियोगित्वरूपः । नित्यत्वं च हेतुभूतं तदेव, अतस्तस्याविशिष्टत्वं हेतोः । न च नित्यत्वं ध्वंसाप्रतियोगित्वं इति वैलक्षण्यमिति वाच्यम् । ध्वसे व्यभिचारात् । ध्वंसस्य हि प्रागभावप्रतियोगित्वमस्ति । प्रतियोग्युन्मज्जनप्रसङ्गेन ध्वंसो नास्ति । न च हेतौ भावत्वे सतीति विशेषान्न दोषः इति वाच्यम् । अभावस्य भावरूपत्वमङ्गीकुर्वतां अस्माकं मते तेनावारणात् । घटध्वंसो हि कपालत्वरूपः । अपि च 'श्रूतेः' इत्यत्रैव 'न जायते म्रियते वा विपश्चित्' इति श्रुत्युपादानात् तयैव ध्वंसप्रागभावोभयाप्रतियोगित्वस्य सिद्धत्वेन 'नित्यत्वाच्चे'ति सूत्रखण्डेन साधनीयं न किमप्यस्तीति साध्याविशिष्टत्वं वैयर्थ्यं चापरिहार्यमेव । न च न जायते इत्यादि श्रुत्या उत्पत्यभावसाधनेऽपि न वस्तुसद्भावसिद्धिः शशशृङ्गवत् तुच्छत्वमपि स्यात् । शशशृङ्गमपि न जायते न म्रियते च, अतः सद्भावबोधनार्थं नित्यत्वहेतुः इति वाच्यम् । वस्तुसद्भावमङ्गीकृत्य तस्योत्पत्तिरस्ति वा नवेति विचारस्यैव प्रवृत्तत्वेन शशशृङ्गतुल्यत्वापादानसंभवात् । न हि आत्मस्वरूपमेव नास्तीति शङ्का प्रवृत्ता, परन्तु तस्य सत्यत्वं अङ्गीकृत्य वियदादिवदुत्पत्तिरस्तु इति शङ्कैव प्रवृत्ता । अतो नेदं समाधानं भवितुमर्हति । अपि च नित्यत्वबोधक श्रुत्युपादानेपि शशशृङ्गवत्तुच्छत्वापादनस्य परिहारासंभव एव । 'अजः नित्यः' इत्युक्तावपि ध्वंसप्रागभावाप्रतियोगित्वरूपत्वान्नित्यत्वस्य, न जायते म्रियते वा इति श्रुति समानार्थकत्वमेवेति । मैवं—न जायते म्रियते वा इत्यादि श्रुतेः (कठोपनिषत्) भगवद्गीतायाश्चैवमर्थो वाच्यः ।—केचिदात्मनः आकल्पस्थायित्वमुशन्ति । तन्मते आकल्पं न म्रियते एव । तन्निवृत्तये नित्यत्वोक्तिः । इदं च सार्वकालिकध्वंसाप्रतियोगित्वमिति ।

अपि च—अभावस्य भावरूपत्वे तस्य ध्वंसाङ्गीकारात् विशेष्यस्य हेतोरसत्त्वमिति न व्यभिचारः। भावरूपत्वानङ्गीकारे भावत्वे सतीति विशेषणासत्त्वान्न हेतुसत्त्वं इति न व्यभिचारः इत्यपि बोध्यम्।

57. ज्ञाधिकरणे

ज्ञोऽत एव। सिद्धान्ते चेतनः ईश्वरः अचेतनमिति वस्तुत्रित्वमभ्युपगम्यते। तत्राचेतनस्य स्वरूपपरिणामः चेतने ज्ञान (स्वभाव) परिणामः। ईश्वरे तु जीववत् स्वभावतोऽपि परिणामो नास्तीति। स्वरूपत एवाचितः परिणामात् कार्यत्वं, ज्ञानद्वारा परिणामात् जीवस्य कार्यत्वं सूक्ष्मस्थूल वैशिष्ट्यद्वारा ईश्वरस्य परिणामः इति तस्यापि कार्यत्वमङ्गीक्रियते।

अत्र जीवस्य चैतन्यमभ्युपगम्य तद्द्वारा कार्यत्वसमर्थनं किमर्थं? चैतन्यानभ्युपगमेऽपि कार्यत्व समर्थनसंभवात्। ननु नित्यस्य तस्य कथं कार्यत्वं? न च प्रकृतेः नित्यत्वेऽपि महदादिना परिणाममभ्युपगम्यकार्यत्वमिष्यत एवेति वाच्यम्। प्रकृतेः नित्यत्वेऽपि सावयवत्वात् स्वरूपपरिणामोपपादनसंभवः। इह तु जीवस्य अत्यन्ताणुत्वेन स्वरूपतः उपपादनासंभवात्। न च कालस्य विभुत्वेन निरवयवत्वेपिक्षणदिवसादि परिणामवत्निरवयवस्थायिजीवस्य परिणामः कथं न संभवतीतिवाच्यं। क्षणत्व दिवसत्वादीनां तु व्यवहारनिर्वाहार्थं बुध्या परिकल्पनेऽमि वस्तुतः परिणामसंभवात्। अन्यथा विभुभूतपरमात्मन एव चेतनाचेतनादि परिणामोपपत्तेः भास्करयादवादिमतखण्डनानौचित्यात्। न च विभोः परिणामासंभवरूपहेतुबलात् तन्मतखण्डनं इति न मन्तव्यं परन्तु तथा परिणामे चेतनाचेतनेश्वरादिविभागो न भवेदिति। अतो न दोषः इति वाच्यम्। विभोः कालस्य परिणामे क्षणत्वदिवसत्वादि विभागवत् जीवेश्वरादि विभागस्यापि कल्पनोपपत्तेः। अतः विभोर्वा अणोर्वा निरवयवस्य स्वरूपतः परिणामो नोपपद्यत एवेति जीवस्य कथं कार्यत्वमिति चेत्—विभोः ब्रह्मणः चेतनाचेतनशरीरमादाय कार्यत्वोपपादनवत् जीवस्याप्यणोः प्रकृतिसम्बन्धमादाय देवदत्तो जातः इति कार्यत्वोपपादनसंभवात्। जीवस्य कार्यत्वं नाम शरीरसम्बन्ध एवेति

कार्यत्वोपपादनाय ज्ञानवत्त्वाभ्युगमः तस्य परिणामः इत्याद्यर्थकल्पनं न शोभनमिति । अत्र ब्रूमः । जीवस्य कार्यत्वोपपादनाय नहि ज्ञानवत्त्वमभ्युपगम्यते । 'विज्ञातारं' इत्यादि श्रुतिबलाद्धि तथाभ्युपगमः । शरीरसम्बन्धसत्वात् ज्ञानस्य स्वभावस्य सङ्कोचविकासौ इति न काप्यनुपपत्तिः ।

प्रलयदशायामपि जीवस्य ज्ञातृत्वमस्ति। ज्ञानस्य स्वाभाविक धर्मत्वात् । विषयग्रहणं तु नास्ति । सुषुप्तिदशायामिव । ननु ज्ञानत्वस्य स्वरूपनिरूपकधर्मत्वात् तस्य च विषयग्राहकत्वरूपत्वेन तद्दशायां तदभावे कथं ज्ञानस्य स्थितिः स्वरूपनिरूपकधर्ममन्तरा विषयस्य सद्भावानौचित्यात् इति चेत् उच्यते-ज्ञानत्वं हि स्वयंप्रकाशत्वरूपम् । तच्च ज्ञानस्यास्त्येव । सुषुप्तिप्रलयादिदशायां कर्मणा प्रतिबद्धम् । यद्वा घटत्वादिकमिव इतरभेदरूपम् ।

## 59. परायत्ताधिकरणे

परात्तु तत् श्रुतेः । प्रथमप्रवृत्तौ यदि ईश्वरस्य नियामकत्वरूपं प्रवर्तकत्वं नास्ति तदा यस्य चेतनस्य......सर्वात्मना स्वार्थे नियन्तुं यत् शक्यं तत् शरीरं इति शरीरलक्षणमव्याप्तमिति सर्वकालिक शरीरित्वं ब्रह्मणो नोपपद्यते इति चेत् । अनादिसंसारे प्रथमप्रवृत्तिरियं इति वक्तुं अशक्यत्वात् सर्वप्रवृत्तावपि नियमकत्वाद्यङ्गीकारात् । तदा उदासीनत्वं न नियामकत्वं निरुन्धे । समानां सर्वेषां जीवानां प्रवृत्तिवैषम्ये कर्मणः हेतुत्वस्य त्वयापि वाच्यतया कर्मणश्च ईश्वरनिग्रहानुग्रहरूपत्वात् कर्माधीनत्वं वदता ईश्वराधीनत्वमेवोक्तमिति नियामकत्वमभ्युपेतमेवेति ।

## 60. अंशाधिकरणे

ननु 'अपि स्मर्यते' 'स्मरन्ति चे'ति सूत्रद्वयं निरर्थकम् । एकेन उभयस्मृत्युदाहरणसंभवात् इति चेन्न। अंशत्वमात्रबोधकस्मृतेः प्रकारत्वयेण अंशत्वोदपपाकस्मृतेश्च विभिन्नत्वेनांशभेदात् । न च स्मरन्ति चेति सूत्रमेव पर्याप्तम् । तेनैवोभयांशप्रतिपादनादिति वाच्यं, तत्र-

प्रकारत्रयोपपादनेपि साक्षादंशत्वाबोधनात् । 'अपि स्मर्यते' इत्यत्र 'ममैवांशो जीवलोके' इति साक्षादंशत्ववाचकशब्दश्रवणात् । ननु स्मृतेश्च इति हि सूत्रम् ? स्मृतित्वाविशेषात् उभयी श्रुतिरपि उदाहरणं भवितुमर्हतीति चेत्सत्यम् । अंशो नाना...मन्त्रवर्णात्, इति सूत्रानन्तरं अपि स्मर्यते इति सूत्रम् । पूर्वत्र अंशत्वमात्रबोधनं, अतः अपि स्मर्यते इति सूत्रम् । तेन अंशत्वबोधनंस्मृतिरेव स्मृतिपथमायात् । 'प्रकाशादिवत्तु नैवं परः' इति सूत्रानन्तरं स्थितस्य 'स्मरन्ति च' इति सूत्रस्यांशत्वोपपादनापेक्षकस्मृतिरेव च स्मृतिपथमागच्छतीति विशेषात् । पूर्वं भगवदुक्तस्मृतिः अपरत्रान्या च ।

अंशो नाना...। यो यः अपृथक्सिद्धविशेषणभूतः सः अंशः इत्युक्तौ रूपस्यापि घटांशत्वप्रसङ्गः। द्रव्यत्वे सतीति विशेषणे जीवात्मानं प्रति तदीयधर्मभूतज्ञानस्यापि अंशत्वापत्तिः । न चेष्टापत्तिः देहः जीवांशः इति यथा व्यवहारः तथा ज्ञानं जीवांशः इति व्यवहारा भावात् । यदि यथा प्रभावद्द्रव्यगुणभूतस्य प्रभारूपद्रव्यस्य प्रभावतों अंशत्वमिष्यते, अत एव 'एकदेशस्थितस्याग्नेः ज्योत्स्ना विस्तारिणी यथा' इत्यादिना सर्वस्य वस्तुनः भगवदंशत्वे ज्योत्स्नादृष्टान्तः सङ्गच्छते । तथैव ज्ञानस्यापि जीवांशत्वव्यवहारः युक्त एवेति विभाव्यते तर्हि गवादीन्प्रतिगोत्वादीनां अंशत्वं न स्यात् गोत्वादेः द्रव्यत्वाभावात् द्रव्यत्वघटितलक्षणसमन्वयासंभवात् । न च गोत्वादीनामंशत्वं नेष्टमेवेति वाच्यम्, तथा सति 'यथा गोत्वादयः गवाद्यंशभूताः' इति श्रीभाष्यविरोधात् । अत्र ब्रूमः-

गोत्वादीनामंशत्वमिष्टमेव । न च गोत्वादीनां जातिरूपत्वेन द्रव्यघटितांशलक्षणसमन्वयः कथमिति शङ्क्यम् । अस्मत् सिद्धान्ते जातेः आकृतिव्यतिरिक्तरूपत्वाभावेन आकृतेश्च संस्थानरूपत्वात् तस्य द्रव्यत्वात्। अतः गोत्वादीनां द्रव्यत्वरूपत्वमेवेति अंशत्वोपपादनसम्भवः इति ।

## 61. प्राणोत्पत्त्यधिकरणे

तत्पूर्वकत्वाद्वाचः । अत्र प्रलये वागादिकार्यभूतव्यवहारस्य व्यवहर्तव्यवस्त्वभावेन कारणभूतवागादिसद्भावः इत्यर्थः न रमणीयः। आत्मादिव्यवहारस्याप्यभावेन आत्मादीनामोऽपि अभावप्रसङ्गात्। अतः एवमर्थः–यथा आत्मतत्कर्मणोः प्रलयकाले सद्भावः, तत्कार्यसृष्टि, वैषम्य, नैर्घृण्याद्यर्थं, तथाविधप्रयोजनाभावेन वागादीन्द्रियसद्भावः अनपेक्षित इति । अथवा–वाचः–वागीन्द्रियस्य (इदं सर्वेन्द्रियोपलक्षणं) वागादीन्द्रियाणां ब्रह्मसृष्टिपूर्वकत्वात्, महदहङ्कारसृष्टेः इन्द्रियसृष्टिः इति श्रुतौ प्रथितत्वात् अनन्तरमेव व्यष्टिसृष्टिः नामरूपव्याकरणञ्चेति ।

## 62. सप्तगत्यधिकरणे

हस्तादयस्तु स्थितेऽतो नैवम् । अत्र तु शब्देनैव पक्षव्यावृत्तिसंभवे पुनरपि नैवमित्यधिकम् । शरीरे स्थिते जीवे चक्षुरादीनामिव हस्तादीनामपि उपकारकत्वविशेषात् तान्यपीन्द्रियाणि इति हि समाधिः ?। नैवं–नैतावन्मात्रं शरीरं विहाय गच्छतोऽपि उपकारकाणीति विशेषबोधनात् यादवप्रकाशमतखण्डनं तेन क्रियते । अतो नैवमित्यधिकोक्तिः ।

## 66. ज्योतिराद्यधिष्ठानाधिकरणे

ज्योतिराद्यधिष्ठानं—कथमेकेन्द्रियेषु जीव, आदित्यादि जीवोभयाधिष्ठेयत्वमिति ? यदि एकमेवेन्द्रियमुभयाधिष्ठेयं स्यात् तर्हि अधिष्ठातृचेतनद्वयस्याभिप्रायभेदे कार्यकरत्वं न स्यात् । विपरीताचरणं वा स्यात् इति चेत् नात्र विरोधः । अस्मदाद्येकमेव शरीरं जीवपरोभयाधिष्ठेयमिति अत्र निरुक्तदूषणे कः परिहारः । परमपुरुषाभिप्रायभेदेन जीवस्याभिप्रायः नोदियादिति चेदत्रापि तथैव भगवत्सङ्कल्पः इति विरोधपरिहारसंभवात् । तत्तदिन्द्रियेषु तत्तदभिमानिदेवताः तत्तत्कार्यकरत्वशक्ति ददति । तदाहितशक्तिकानि इन्द्रियाणि जीवेच्छानुगुणं कार्यं कुर्वते । अतो नात्र कश्चनविरोधः इति ॥

## 68. संज्ञामूर्तिक्लृप्त्यधिकरणे

संज्ञामूर्ति ... ... अनेन जीवेनात्मना इति श्रुतेरयमर्थः। इमाः देवताः अनुप्रविश्य अनेन जीवेनात्मना नामरूपे व्याकरवाणीति। साधकतमत्वरूपकरणत्वविवक्षामात्रं कर्तृरेव। जीवशब्दः चतुर्मुख-पित्रादि जीवपरः। तथा च, अहं देवताः अनुप्रविश्य चतुर्मुखादि-शरीरकस्सन् नामरूपव्याकर्ता भवामि। चतुर्मुखकर्मकब्रह्मकर्तृकसृष्टौ नेदं वाक्यं प्रमाणं, परन्तु चतुर्मुखकर्तृकदेवादिसृष्टौ इदं प्रमाणम्। तथा च चतुर्मुखद्वारा अहं नामरूपे करवाणीति। अनेन जीवेनेत्यस्य देवताः अनुप्रविश्येत्यत्र नान्वयः। तथासति सर्वत्र स्वस्येव चतुर्मुख-स्यापि अनुप्रवेशसिध्या तस्यापि सर्वशरीरत्वापत्तेः। यद्वा चतुर्मुख-शरीरकत्वविशिष्टस्वस्यानुप्रवेशेन तात्पर्यं, तस्योपलक्षणत्वमात्रत्वात्। अथवा, 'अन्तः शरीरेष्विव यः प्रजानां प्रत्यादिदेशाविनयं विनेता' इत्यत्र कार्तवीर्यार्जुनस्येव अन्तः प्रवेशोऽस्तु। न तावता तस्येवास्यापि शरीरित्वसिद्धिः।

ननु पूर्वोक्तार्थे अस्मिन्नर्थे वा कर्मभोक्तृजीवे अनुप्रवेशो न सिध्यति इति कथं देवादिसृष्टिः इति चेत्-नामरूपे व्याकरवाणीत्युक्त-त्वादेव तत्सिद्धेः। नामरूपव्याकरणं हि देवादिजीवानाम्। अतो भग-वान् तत्तज्जीवं देवादिकं कर्तुमिच्छन् तत्तज्जीवद्वारा भूतादिषु प्रविश्य देवादिनाम करोति। नामरूपे अचेतनस्यैवेति न भ्रमितव्यं। आकाशः अर्थान्तरत्वादिव्यपदेशादिति सूत्रे नामरूपभाक् जीवः यत्र भवतु इति पूर्वपक्षकरणानुपपत्तेः। 'अरूपवदेव हि तत्प्रधानत्वा'दित्यत्र भगवत एवारूपत्वमुक्तं, जीवस्यत्वङ्गीकृतम्।

अण्डान्तर्भावि पृथिव्यादिकं किं पञ्चीकृतभूतादि, उत पञ्ची-कृतैकभूतविकारः अथवा पञ्चीकृतपञ्चभूतविकारः इति। भूतादि सृष्ट्यनन्तरं भूतेषु किञ्चित्किञ्चिभागं पृथक्कृत्य अवशिष्टभूतेषु पञ्ची-करणं, अथवा, कृत्स्नभूतानामेव पञ्चीकरणम्। तथा च, अपञ्चीकृत-भागोऽप्यस्ति न वेति संदेहः। अण्डावरणानि भूतानि पञ्चीकृतानि अथवा अपञ्चीकृतानि? शुद्धजलशुद्धपृथिव्यादीनि आवरणान्युच्यन्ते।

तत्र किं नाम शुद्धत्वम् ? पञ्चीकृतभूतान्तरामिश्रितत्वं वा अपञ्चीकृतत्वं वा ? एतच्छङ्कापरिहारः अस्मदीयचन्द्रिकायां द्रष्टव्यः ।

'व्यपदेशवदेकस्मिन् बुध्या नानात्वकल्पनां' इति न्यायेन घटः स्वेन रूपेण इतरव्यावृत्तिं करोति (आत्मानं आत्मना वेत्सि) यदि करणे तृतीया अत्रोच्यते तदा अत्रापि, 'तेनेशस्तद्विशिष्टः स्वकरणकतयाऽनुप्रवेशेऽपि कर्ता...।' यद्वा—'जीवेनात्मना-मदात्मकजीवेनात्मतया अनुप्रविश्य एतत् विचित्रनामरूपभाक् करवाणीत्यर्थः' इति भाषितत्वात् जीवशब्दस्य परमात्मपर्यन्तत्वाभावस्यापि दर्शितत्वात् आत्मना-शरीरेण । शरीरभूतेनानेन जीवेनानुप्रविश्य । आत्मतयेति हेतौ तृतीया । हेतुत्वं च प्रयोजनत्वेन विवक्षितम् । आत्मत्वार्थमनुप्रविश्येत्यर्थः । अन्तः प्रविश्य नियन्तृत्वभावे आत्मत्वासम्भवात् ।

**अनेन जीवेनात्मनेति श्रुत्यर्थविचारः**

हन्ताहमिमाः तिस्रो देवताः अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि इत्यस्याः श्रुतेः अर्थवर्णने बहवो विद्वांसः विप्रतिपद्यन्ते । अस्याः श्रुतेः यथावदर्थज्ञानं यावन्नास्ति तावत् भगवदीय सृष्टिविषये तत्वविवेकः दुर्ज्ञेय एव । अतोऽत्र वास्तवार्थं प्रदर्शयामः ।

अत्र केचिदेवं वदन्ति—'इमाः देवताः' इति पृथिव्यप्तेजोरूपभूतानि विवक्ष्यन्ते प्रकरणात् । इदञ्च सर्वभूतानामप्युपलक्षणम् । भगवता सृष्टस्य अस्मच्छरीरस्य सर्वभूतमयत्वात् । भूतानां देवतात्वनिर्देशः उपचारात् । नहि भूतानां अचेतनानां देवतारूपत्वं योयुज्यते । यद्यपि 'तं पृथिव्यब्रवीत्' इत्यादिषु पृथिव्यादीनां वचनसामर्थ्योक्त्या अचेतनेषु तदसंभवात् पृथिव्यभिमानिदेवता अब्रवीदिति अर्थवर्णनमावश्यकमिति पृथिव्यादिभूतानामपि अभिमानिदेवतास्सन्त्येव । अथापि अत्र प्रकरणे औचित्यात् अचेतनमात्रविवक्षायाः आवश्यकत्वेन पृथिव्यादिभूतानां देवतात्वप्रयोगः औपचारिक इत्येवाङ्गीकरणीयम् । देवादिव्यष्टिसृष्टौ सृज्यमानदेवमनुष्यादिशरीरेषु देवताद्वयजीवद्वयसंभवेन तदनुप्रवेशस्यायुक्तत्वात् । देवादिशरीरेषु हि भगवदनुप्रवेशः सृज्यजीवस्यचानुप्रवेशः । नह्यस्मच्छरीरेपि सृज्यमानजीवसम्बन्धादृते

अन्यस्याः अभिमानिदेवतायाः प्रवेशोऽस्ति। देवशब्दो हि देवशरीरक-जीवतच्छरीरक परमात्मपर्यन्तमभिधत्ते। नत्वभिमानिदेवतामपि।

यद्वा भविष्यद्देवताभिमानविषयभूतानि तत्वानीत्यर्थः। अतः पूज्यत्वाय देवतात्वेन निर्देशः। यद्वा अभिमानिदेवताशरीरभूताः इमाःइत्यर्थं विवक्षापि संभवति। 'सेयं देवतैक्षत हन्ताहमिमाः' इत्यारंभात्। सर्वथापि भूतानामेव देवतात्वविवक्षणं न युक्तम्। इदं च भगवद्वाक्यम्।

एवं च जीवशरीरकेण मया भूतादि अनुप्रविश्य नामरूप व्याकरणं करोमि इति विशिष्टवाक्यार्थः। नामरूपव्याकरणं चतुर्मुखादिषु सर्वत्रास्ति। ब्रह्मणः सृज्यत्वे देवादीनां सृज्यत्वेपि वा अस्याः श्रुतेः आनुगुण्यं वक्तव्यम्। अत्र यदि जीवशब्दः चतुर्मुखजीवपरः तर्हि तच्छरीरकेण मया भूतादिषु अनुप्रविश्य नामरूपे करोमीत्युक्तं स्यात्। तथा सति चतुर्मुखकर्मकभगवत्कर्तृकसृष्टिमात्रं उपपन्नं भवेत्। देवमनुष्यादिसृष्टिषु उपपत्तिः न स्यात्। तत्र तत्र शरीरे तत्तज्जीवानामनुप्रवेशाकथनात्। सर्वदेवादिसृष्टिष्वपि भगवत इव चतुर्मुखस्याप्यनुप्रवेशापत्त्या तस्यापि सर्वशरीरकत्वप्रसक्तेश्च। यदि देवादि जीवसामान्यपरः जीवशब्दः तदा सर्वेषां सृज्यत्वोपपत्तावपि चतुर्मुखसृष्टिरनानुक्ता स्यात्। अपि च देवादिसृष्टिषु चतुर्मुखस्य संबन्धाभावप्रसक्तिश्चापद्यते। चतुर्मुखद्वारा हि भगवान् व्यष्टिपदार्थं जातं सृजति। 'नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम्। वेदशब्देभ्य एवादौ देवादीनां चकार सः' इति हि स्मृतिः।

अथोच्येत—अत्र जीवशब्दः सृज्यमानजीवपरः। भगवत्कर्तृक चतुर्मुखकर्मकसृष्टौ चतुर्मुखस्य सृज्यत्वात् तत्परो जीवशब्दः। व्यष्टि सृष्टौ चतुर्मुखस्यैव सृष्टिकर्तृकत्वं देवादीनां सृष्टिकर्मत्वमिति तदा जीवशब्दः देवादिजीवपरः। एवं च चतुर्मुखसृष्टिरप्युक्ता भवति। चतुर्मुखशरीरकेण भगवता चतुर्मुखशरीरोपादानभूतभूतादिषु अनुप्रविश्य चतुर्मुखनामरूप व्याकर्तृकत्वस्य भगवति प्रतिपन्नत्वात्। चतुर्मुखकर्तृकदेवादिसृष्टिषु देवादीनां सृज्यमानत्वात् तादृशजीवशरीर-

कस्य भगवतः तच्छरीरोपादानभूतभूतादिषु अनुप्रवेशपूर्वकं तदीयनाम-रूपव्याकर्तृत्वस्य च प्रतिपन्नत्वात् । अत्र देवादिरूपसृष्ट्यनन्तरं हि सृज्यमानजीवशरीरकत्वविशिष्टस्य भगवतः तेषु अनुप्रवेशः, न तु पूर्वं संभवति । कथमत्रानुप्रविश्येति सृष्टिपूर्वभावित्वोक्तिरिति न शंक्यम् । 'मुखं व्यादाय स्वपिति' इति समानकालिकत्वविवक्षया 'क्त्वा' प्रत्ययोपपत्तेः । तथा च देवादिसृष्टिः यदा तदैव सृज्यमान देवादि शरीरकत्वाकारेण भगवतः अनुप्रवेशः इति न काऽप्यनुपपत्तिः इति ।

मैवं—एवमपि देवादिकर्मक चतुर्मुखकर्तृकव्यष्टिसृष्टावपि सृज्यमानदेवादिशरीरकस्य ब्रह्मणः भूतादिषु अनुप्रवेशपूर्वकं नामरूपव्याकरणकर्तृत्वोक्तेः तत्रापि परमात्मनः एव संज्ञामूर्तिक्लृप्तित्वं स्यात् । न तु चतुर्मुखस्य । चतुर्मुखवाचकपदाभावात् । नचेष्टापत्तिः स्मृतिविरोधात् । सर्वत्र व्यष्टिसृष्टौ चतुर्मुखद्वारा हि सर्वं सृजति ।

अथोच्येत—नामरूपव्याकरणश्रुतेरयमर्थः । जीवेनेति जीवशब्दः सृज्यमानजीवपरः । आत्मशब्दः स्ववाची सन् चतुर्मुखजीवविशिष्टभगवत्परः । एवञ्च सृज्यमानजीवशरीरकत्वविशिष्टः चतुर्मुखशरीरकत्वविशिष्टश्च सन् भूतादिष्वनुप्रविश्य देवादि नामरूपे व्याकरवाणीति फलितोऽर्थः । तथा च भगवतः चतुर्मुखद्वारा व्यष्टिसृष्टौ नामरूपव्याकर्तुत्वसिद्धिरिति चतुर्मुखस्य नामरूपव्याकर्तृत्वोपपत्तिरिति ।

इदमपि न सम्यक्—चतुर्मुखकर्मक भगवत्कर्तृसृष्टौ अर्थद्वयस्यानुपयोगात् । पौनरुक्त्यापत्तेश्च । व्यष्टिसृष्टौ चतुर्मुखस्य कर्तृत्वोपपत्तावपि चतुर्मुखशरीरकत्वविशिष्टस्य भगवतः सर्वत्रानुप्रवेशात् भगवत इव चतुर्मुखस्यापि सर्वशरीरित्वापत्तिरूपदोषस्यानुद्धारात् ।

अपि च अस्माकमपि अस्मत्पुत्रादीन्प्रति नामरूपव्याकर्तृत्वमस्ति। 'एकादशेऽह्नि पिता नाम कुर्यात्' इति हि धर्मशास्त्रम् ? अत्रापि देवदत्तो भगवच्छरीरभूतस्सन् स्वपुत्रान् सृजति । भगवान् देवदत्तादिद्वारा तत्पुत्रानुत्पादयतीति हि लोकसिद्धम् । अतः कुलालादेरपि घटादि नामरूपव्याकरणकर्तृत्वस्य वक्तव्यतया सर्वस्थलसाधारणतया नामरूपव्याकरणश्रुत्यानुगुण्यं वाच्यम् । न हि पितृकुलालादिजीवबाचकशब्दाः

सन्त्यत्र । सृज्यमानजीवादिशरीरकत्वमात्रमेवोक्तं, न तु स्रष्टृपितृकुलालादिशरीरकत्वं परब्रह्मणः अत्र प्रकरणे श्राव्यते । येन कुलालादि शरीरकः पित्रादि शरीरकश्च सन् भगवान् घटपुत्रादि सृजतीति वक्तुं शक्यम् ।

किञ्च भगवान् भूतादीनुत्पाद्य पञ्चीकरणं कृत्वा अण्डं तत्र ब्रह्माणं च सृष्ट्वा सृज्यमानजीवराशिं पञ्चीकृतभूतादिं च चतुर्मुखाय प्रदाय व्यष्टिसृष्टिं कुरु इति वदति । सोऽपि तदादर्शितमार्गः तदाहितशक्तिश्च सन् जीवस्य प्रथमं शरीरादि ददाति । एवं प्रथमसृष्टौ जीवानां नामरूपव्याकरणे ब्रह्मणः कर्तृत्वेऽपि द्वितीयादिसृष्टौ तस्य चतुर्मुखस्य कथं कर्तृत्वम्? धूमादिमार्गेण अन्येन वा मार्गेण गतागतशालस्य सूक्ष्मशरीरेण गतस्य 'रेतस्सिग्योगोऽथ', 'योनेश्शरीरं' इति पित्रादीनामेवोपयोगात्, न चतुर्मुखस्य कर्तृत्वं युज्यते । तस्य तत्र प्रसक्त्यभावात् । अतस्सर्वत्र चतुर्मुखस्य व्याकर्तृत्वं नास्ति । अतः दोषलेशं विना अस्याः श्रुतेरर्थवर्णनं क्लिष्टमेवेति ।

अत्रैवं समाधानमाहुः—व्याकरणश्रुतेः पूर्वोक्त एवार्थः । परन्तु आत्मना इत्यस्य चतुर्मुखशरीरकत्वोपलक्षितेन मयेत्यर्थः । एवं च विशिष्टवेषेण ब्रह्मणः भूतादिषु अनुप्रवेशानुक्तेः चतुर्मुखब्रह्मणः सर्वशरीरित्वव्यावृत्तिः सुलभा भवति। उपलक्षणकोटौ चतुर्मुखस्य निवेशात् चतुर्मुखोपलक्षितपरब्रह्मणः नामरूपव्याकर्तृत्वोक्तेः चतुर्मुखस्यापि तद्व्याकर्तृत्वं फलितं भवति । यद्वा आत्मशब्दः स्वमात्रवाची, जीवशब्दश्च सृज्यमानजीवशरीरकब्रह्मवाची । अहं व्याकरवाणीत्युक्त्या अस्मच्छब्दार्थः चतुर्मुखशरीरकब्रह्मपरः । एवञ्च सृज्यमानजीवशरीरकत्वविशिष्टेन मया भूतादिष्वनुप्रविश्य चतुर्मुखशरीरकस्सन् नामरूपे व्याकरवाणीति वाक्यार्थः । एतेन चतुर्मुखस्य सर्वशरीरकत्वव्यावृत्तिः भगवदनुप्रविष्टस्य तस्य नामरूपव्याकृतिकर्तृत्वनिष्पत्तिश्च सुलभा भवति । एवमेव पुत्रनिष्पादकपित्रादिशरीरकत्वं घटादिनिर्मातृकुलालादिशरीरकत्वं चास्मच्छब्दार्थे विवक्षणीयम् । एवं विवक्षणे न काप्यनुपपत्तिः । तत्रापि चतुर्मुखाधीनपितृकुलालादिशरीरकत्वं अस्मत्

शब्दार्थे विवक्षणीयम् । तेन प्रथमसृष्टाविव द्वितीयादि सृष्टावपि नामरूपव्याकर्तृत्वं चतुर्मुखस्य सिध्यति । प्रथमसृष्टौ परब्रह्माधीन-व्याकर्तृत्वं चतुर्मुखस्य । न हि तेन परब्रह्मणः नामरूपव्याकर्तृत्वमप-लप्यते । एवमेव द्वितीयादिसृष्टौ पित्रादीनां व्याकर्तृत्वेऽपि पित्रादीनां चतुर्मुखाधीनतयैव तत्सिद्धिरिति प्रमाणबलेनाभ्युपेत्यत्वात् चतुर्मुखस्य नामरूपव्याकर्तृत्वं सुलभोपपादनं भवति । एवं च सर्वं समञ्जसं इति ।

वयं तत्र ब्रूमः—नामरूपव्याकरणश्रुतेः चतुर्मुखकर्मकसृष्टिपरत्व-मपि वक्तव्यमिति तु न सम्यक् । प्रथमं समष्टिसृष्टिः ततः पञ्चीकरणं ततः अण्डसृष्टिः ततो ब्रह्मसृष्टिः अनन्तरं स्वशरीरभूतचतुर्मुखद्वारा देवादिसृष्टिरितिक्रमः । तत्र देवादिसृष्टिरेवव्यष्टिसृष्टिः । अत्र व्यष्टि-सृष्टौ । 'नामरूपं च भूतानां' इति स्मृत्यनुसारेण चतुर्मुखस्यैव नामरूप-व्याकर्तृत्वं इति ब्रह्मणः परस्य सर्वजगत्कारणत्वं न संभवतीति पूर्वपक्षे प्राप्ते संज्ञामूर्तिक्लृप्त्यधिकरणं प्रवृत्तम् । 'नामरूपे व्याकरवाणि' तदर्थं 'तासां त्रिवृत्तं त्रिवृत्तं एकैकां करवाणि' इति पर्यालोचनया त्रिवृत्करण कर्तुरेव नामरूपव्याकर्तृत्वप्रीतीतेः नामरूपव्याकरणकालपूर्वभावित्रि-वृत्करणकाले च चतुर्मुखस्यैवाभावात् कथं चतुर्मुखकर्तृकत्वं नामरूप-व्याकरणस्य स्यादिति अत्राधिकरणे सिद्धान्तितम् । एतेन त्रिवृत्करण काले चतुर्मुखस्याभावेऽपि नामरूपव्याकरणकाले चतुर्मुखसद्भावः अव गम्यत इति कथमस्याः श्रुतेः चतुर्मुखकर्मकसृष्टिविषयत्वं अपि शंक्येत। अन्यथा नामरूपव्याकरणकाले चतुर्मुखस्यैवाभावात् कथं तत्कर्तृकत्व-शङ्कनं इति सिद्धान्तितं स्यात् ।

अथोच्येत—चतुर्मुख इति नाम्नः आननचतुष्टयादिरूपस्यास्मिन् सत्त्वेन नामरूपभाक्त्वस्य सिद्धेः तस्य च भगवदधीनत्वस्य वाच्यतया अस्याः श्रुतेः तद्विषयकत्वमपि वक्तव्यमिति । तन्न । समष्टिसृष्टौ पृथिवी, आपः तेजः...अहङ्कारः महान्, अण्डमित्यादीनां तत्तद्रूपादीना मपि सत्त्वेन तेषामपि नामरूपभाक्त्वसिद्धेः तत्तद्विषयकस्यापि अस्याः श्रुतेः वक्तव्यत्वापातात् । यदि समष्टिसृष्ट्यनन्तरं भाव्यर्थविषयकत्व-मेवेति परिह्रियते तर्हि तथैव चतुर्मुखसृष्ट्यनन्तरभावि देवादि सृष्टि-

विषयकत्वमेवेति विभावय । अतः चतुर्मुखसृष्टिविषये अस्याः श्रुतेः नयनं न कार्यमिति द्रष्टव्यम् ।

जीवानां प्रथमसृष्टौ पञ्चीकृतमयदेहादौ तेषां निक्षेपस्य चतुर्मुख कर्तृकत्वेन तदा तस्य नामरूपव्याकरणकर्तृत्वसिद्धावपि, द्वितीयादि-सृष्टौ तत्तत्स्थूलदेहस्यैव सूक्ष्मतया परिणामः तस्यैव स्थूलतया च परि-णामः इति स्थितेः चतुर्मुखस्य तत्रोपयोगाभावात् द्वितीयादिसृष्टौ कथं तस्य नामरूपव्याकर्तृत्वमिति यदुक्तं तत्र किञ्चित्परिशीलयामः— 'अकार्यचिन्तासमकालमेव प्रादुर्भवन् चापधरः पुरस्तात् । अन्तः शरीरेष्विव यः प्रजानां प्रत्यादिदेशाविनयं विनेता । इति तत्तज्जीवशरी-रान्तरावस्थिति समानाकार परिस्थितिमत्वरूपवैभवशालिनां कार्त-वीर्यार्जुनप्रभृतीनां महतां दर्शनेन ततोऽप्यधिकवैभवशालिनः 'युग-कोटिसहस्राणि...शुश्रुम' इति महापुण्यसम्पादितपदव्यामभिषिक्तस्य चतुर्मुखस्य कथं द्वितीयादिसृष्टौ नामरूपव्याकर्तृत्वमिति शङ्कनं अतीव परिहास्यं भवति । स्थूलस्य सूक्ष्मीकरणं सूक्ष्मस्य स्थूलीकरणमित्यादि स्वतपस्सन्तुष्टभगवत्प्रसादलब्धवरस्य चतुर्मुखस्य कार्यं हि । भग-वान् हि अण्डादीन् सृष्ट्वा तत्र ब्रह्माणं च प्रसृज्य पञ्चीकृतभूतादीन् इन्द्रियाणि कर्मानुगुणस्रष्टव्य जीवराशिं च चतुर्मुखवशं करोति । सर्व मपि तत्तत्पुण्यपापानुगुणं सृजस्वेत्यप्यादिशति । तद्दत्तशक्तिकः ब्रह्मा तथैव सृजति ।

परस्येव स्वस्य सर्वान्तर्गमनशक्त्यभावेऽपि धर्मभूतज्ञानद्वारा सर्वत्र प्रवेशशक्त्या सर्वमपि विदित्वा तत्तद्वस्तु नियमयति । स्वयञ्च पार्श्वस्थैरविदितशासितृत्वस्सन् वर्तते । चतुर्मुखाभिप्रायं विना स्थूलं न सूक्ष्मं भवितुमर्हति । सूक्ष्मं वा न स्थूलम् । भगवत्प्रसादेन विदित तत्तत्पुण्यपापस्वरूपः तेषां जीवानां तत्तच्छरीरं च ददाति । एतत्सर्वं परब्रह्मदत्तशक्तिकः तदन्तर्यामिकश्चसन् ब्रह्मैव करोति । एवमेव हि प्रथमसृष्टावपि नामरूपव्याकर्तृत्वं तस्योपपादनीयं । ब्रह्मा स्वसहा-यार्थं प्रथमं रुद्रमसृजत् । सचानुपयुक्तः आसीत् । स्वमानससृष्टाः सनकादयश्च स्वयमागतविज्ञानाः निवृत्ति धर्ममास्थिताः अनुपकारकाः

आसन् । ततः नवप्रजापतीन्ससर्ज । तेच सृष्टिमकुर्वन् । अतः प्रथम-सृष्टिः जीवानां शरीरप्रदानरूपा नवप्रजापतिकृतैवेति कथमादिसृष्टौ चतुर्मुखस्योपयोगः । कथं वा प्रथमसृष्टि व्याकर्तृत्वसिद्धिः ।

यदि तु देवादिसृष्टौ स्वनियाम्यचतुर्मुखस्य नामरूपव्याकरण-कर्तृत्वेऽपि नियामकस्य परस्य ब्रह्मणः तत्कर्तृत्वसिद्धिर्यथा, तथैव चतु-र्मुखनियाम्य नव प्रजापतीनां व्याकर्तृत्वेऽपि नियामकस्य चतुर्मुखस्य व्याकर्तृत्वसिद्धिरिति उच्यते, तथासति जीवानां द्वितीयादिसृष्टावपि चतुर्मुखनियाम्यपित्रादीनामिव पुत्रादिनामरूपव्याकरणकर्तृत्वेन नियामकचतुर्मुखस्यापि तत्कर्तृत्वमक्षतमेव । ननु 'रमणीयचरणाः रमणीयां योनिं' 'कपूयचरणाः कपूयां (कुत्सितां) योनिं' इति प्रमाणबलेन कर्मणैव परिणामसंभवात् चतुर्मुखस्य कुत्रोपयोगः इति चेत् तर्हि परमात्मनोऽपि नैवोपयोगः । कर्मणैव सिद्धेः कृतमीश्वरेण । नच पुण्यापुण्य-कर्मणः भगवन्निग्रहानुग्रहरूपत्वेन कथमीश्वरस्यानुपयोगकथनमिति वाच्यम्, स्वनिग्रहानुग्रहरूपपुण्यापुण्यकर्मणः चतुर्मुखाधीनत्वस्य ब्रह्मणैव करणात् । इन्द्रियादि भूतराशिं जीवराशिमिव तत्तज्जीवकृत पुण्यापुण्यात्मककर्मपरिपाककरणादि सर्वं चतुर्मुखाधीनं हि भगवान् चकार । अतो ब्रह्मा तत्तत्समये तत्तत्परिपाकदशां विदित्वा तत्तदनु-सारेण स्थूलसूक्ष्मपरिणामं जनयति । एतत्सर्वं भगवतः सर्वान्तर्यामि-त्वादिकमिव प्रमाणबलपरिकल्प्यम्। न हि भगवतः स्वरूपं तत्स्वभावादि प्रत्यक्षादिना अवगम्यते । तथैव चतुर्मुखस्यापि तदा तदा सृष्टौ नाम रूपव्याकर्तृत्वादि न प्रत्यक्षेणावगन्तुं शक्यम् । तस्मात् अस्मदविदित-शासितृत्वादिस्वभावः अस्मत्कर्मानुगुणं शरीरादि ददाति चतुर्मुख इति तस्य सर्वदा नामरूपव्याकर्तृत्वसिद्धिः ।

वस्तुतः पुत्रादीन्प्रति पित्रादीनां न नामरूपव्याकर्तृत्वम् । 'एकादशेऽहनि पिता नाम कुर्यात्' इति नामकरणस्य दृष्टत्वमात्रेण न नामरूपव्याकर्तृत्वसंभवः । शरीरसंस्थानप्रदानरूपकार्ये पित्रादीनाम-समर्थत्वात् । न हि 'रेतस्सिग्योगोऽथ', 'योनेश्शरीरं' इत्यनुसारेण-

रेतस्सिक्तपुरुषस्य तत्समर्थता । तथासति गर्भाधानकृतां सर्वेषामेव पुत्राद्युत्पत्तिप्रसङ्गात् । न हि योनिविशेषे रेतस्सेचनमपि एतत्साध्यं भवति । प्रयत्नेन कृतेऽपि योनेः बहिः स्थलेऽपि रेतस्सेचनदर्शनात् । स्त्रीणां कथञ्चित् गर्भवत्त्वेऽपि रेतसा सह सूक्ष्मशरीरविशिष्टस्यास्य अन्तस्थत्वेऽपि मासक्रमेण कललबुद्बुदकरचरणादिसाहित्यपूर्णशरीरवत्त्वादीनां पित्रादिना कर्तुमशक्यत्वाच्च । एतदेव हि रूपादिकर्तृत्वम् । यदि पित्रादीनामेव एतत्सामर्थ्यं तदा स्वमनोरथप्रकारेण रूपादि दद्युः पित्रादयः । अन्धपंग्वादीनां उत्पत्त्यभावप्रसङ्गश्च । सर्वेऽपि राजशरीरिणः सर्वा अपि अप्सरसश्च भवेयुः । मशकमत्कुणादिकुत्सितशरीरिणश्च न भवेयुः । को वा पिता स्वस्याशुभपुत्रादिरूपं जनयितुं अभीप्सति । स्वाप्नपदार्थस्य जीवकर्तृकत्वे अशुभसूचकस्वप्नं यथा न सृजेत्, शुभसूचकमेव स्वप्नं सृष्ट्वा पश्येत्, तथाऽत्रापि रमणीय पुत्रादिरूपमेव दद्यात् । सर्वनियामको भगवानेवान्तः स्थित्वा एतत्सर्वं करोतीति सर्वमुपपद्यते इति यदि मन्यसे, तर्हि भगवतः कृत्यं एतत्सर्वं न प्रत्यक्षदृश्यं, शास्त्रप्रमाणेनेति चेत्, तदेव शास्त्रं चतुर्मुखद्वारा परमात्मा सर्वं करोति इति ब्रवीति । तस्मादस्मद्दृष्ट एव चतुर्मुखः भगवद्दत्तशक्तिकः धर्मभूतज्ञानद्वारा सर्वत्र व्याप्तः सर्वं जनयति । अतः न पित्रादीनां व्याकर्तृत्वं चतुर्मुखस्य च न नामरूपव्याकर्तृत्वासिद्धिः ।

एतेन कुलालादीनां घटादीन्प्रति नामरूपव्याकर्तृत्वमित्यपि परास्तम् । कुलालादयो हि घटादिकमुत्पादयन्ति, मृद्द्रव्यमादाय घटादिसंस्थानविशेषविशिष्टतया वस्तु जनयन्त्येव । नैतावता तेषां रूपव्याकर्तृत्वम् । न हि संस्थानविशेषविशिष्टकरणमेव रूपव्याकरणम् । किन्तु घटादिशरीरविशिष्टतया जन्मप्राप्तियोग्यस्य कर्मपरिपाकवशेन तत्प्राप्तिरेव रूपम् । 'अनेन जीवेनात्मनाऽनुप्रविश्य' इत्युक्तेः तादृशकर्मवज्जीवशरीरकपरमात्मनः तच्छरीरेऽनुप्रवेशस्य आवश्यकत्वात् । तत एव हि घट इति नाम । घटादिशब्दो हि घटशरीरकजीवशरीरकब्रह्मवाची । अपर्यवसानवृत्त्या देवादिना जन्मयोग्यस्य जीवस्य घटादिसंस्थानसंबन्धप्रदानं रूपव्याकरणम् । इत्थं च जीवस्यानुप्रवेशं

विना केवलसंस्थानकरणं न रूपव्याकरणम्। एतादृशं च रूपाव्याकर्तृत्वं न कुलालादेः। किन्तु परस्यैव। सोऽपि चतुर्मुखशरीरकः करोतीति शास्त्रसिद्धम्।

अनेन जीवेनेत्यादिश्रुतेरयमर्थः। जीवशब्दः सृज्यमान तत्तज्जीवपरः। आत्मशब्दः भगवद्वाची। सामनाधिकरण्यबलेन तत्तच्छरीरकत्वं विवक्षितम्। अहं शब्दः चतुर्मुखशरीरक ब्रह्मवाची। एवञ्च सृज्यमानतत्तज्जीवशरीरकेण मया भूतादिष्वनुप्रविश्य तत्तत्कर्मानुगुणं तत्तज्जीवानां चतुर्मुखशरीरकस्सन् नामरूपे व्याकरवाणीत्यर्थः।

यद्वा–'सेयं देवतैक्षत हन्ताहमिमाः—व्याकरवाणी'ति श्रुतेरयमर्थः। 'तदैक्षत बहु स्यां' इत्यत्र बहुभवनसङ्कल्पाश्रयतया यत्विवक्षितं तदेव परं ब्रह्म 'सेयं देवते' त्यनेनापि परामृश्यते। तच्च चेतनाचेतनविशिष्टं परं ब्रह्म। तदेव ब्रह्म अहं शब्दार्थेऽपि। अहं–चेतनाचेतनशरीरकत्वविशिष्टं ब्रह्माहं, इमाः तिस्रो देवताः–पृथिव्यप्तेजोरूपभूतानि अनुप्रविश्य, अनेन जीवेनात्मना-हिरण्यगर्भशरीरकेण तत्तद्देहप्रवेक्ष्यमाण तत्तज्जीवसमुदायाश्रय चतुर्मुखशरीरकेण मया, नामरूपे व्याकरवाणि· जीवानां तत्तद्देहेन्द्रियादि संयोगरूपं तत्तन्नामधेयं च करोमीति। अत्राहमर्थे चेतनाचेतनशरीरकत्वविशिष्टब्रह्मणि अचेतनशरीरकत्वं न विवक्ष्यते परन्तु चेतनशरीरकत्वमेव, तच्च सृज्यमान तत्तच्चेतनशरीर कत्वं, तादृशब्रह्मणः भुतादिष्वनुप्रवेशोक्तेः। सृज्यमानदेवादीनां जीव वाचकत्वम्। चतुर्मुखशरीरकेण मया व्याकरवाणीत्युक्त्या हिरण्यगर्भद्वारा परमात्मनः व्याकरणकर्तुत्वमप्युपपद्यते। एवं विवक्षणात् न काऽप्यनुपपत्तिः।

एतेन—अत्र जीवशब्दस्य चतुर्मुखपरत्वे अनुप्रविश्येत्यत्रान्वयो दुर्घटः चतुर्मुखस्य सर्वशरीरित्वाभावात्। अन्यसृज्यमानजीवपरत्वे व्याकरणकर्तृत्वमसंभवि, परस्य चतुर्मुखस्यैव वा व्याकरणकर्तृत्वात्। जीवेनेति पदमावर्त्य एकस्य जीवपदस्य सृज्यमानजीवपरत्वमभ्युपगम्य अनुप्रविश्येत्यत्रान्वयं, अन्यस्य जीवपदस्य हिरण्यगर्भपरत्वमभ्युपगम्य

व्याकरवाणीत्यत्रान्वयं च स्वीकृत्यार्थवर्णनं च क्लिष्टम् । इत्याद्याशङ्काः निरस्ताः ।

केचित्तु—जीवेनेत्यस्यावृत्तिमकृत्वैव सृज्यमानतत्तज्जीवसमुदायाश्रयसमष्टिभूतहिरण्यगर्भशरीरकेण मया अनुप्रविश्य इत्यर्थमेव वर्णयन्ति । अनुप्रविश्य—बुद्धिविषयीकृत्येत्यर्थः। हिरण्यगर्भस्य न सर्वशरीरित्वापत्तिः । न च 'इमास्तिस्रो देवताः' इति विवक्षितभूतेषु सृज्यमानजीवस्य कथं अनुप्रवेशः इति वाच्यम् । नामरूपे व्याकरवाणीत्युक्त्यैव तत्सिद्धेः । जीवानां तत्तदिन्द्रियदेहादिसम्बन्धकरणमेव हि रूपकर्तृत्वम् । अनुप्रविशतेर्धातोः बुद्धिविषयीकरणाद्यर्थेलाक्षणिकत्वमवश्यमेष्टव्यम् । मुख्यार्थस्वीकारे नित्यव्याप्तस्य परमात्मनः अनुप्रवेशकर्तृत्वाभावेन लाक्षणिकस्य वक्तव्यत्वात् इति वदन्ति ।

ननु जीवस्य देहेन्द्रियादिसंयोगप्रदानमेव व्यष्टिसृष्टिः । भगवतः हिरण्यगर्भस्यापि इयं क्रियते । अण्डसृष्ट्यनन्तरं तत्करणात् । तथा च हिरण्यगर्भसृष्टिरपि व्यष्टिसृष्टिरेवेति हिरण्यगर्भस्यापि व्याकरणकर्मत्वमेवेति कथं तत्कर्तृत्वम्? एवंचैतद्वाक्यस्य हिरण्यगर्भविषयकत्वं वाच्यं इति चेन्न—इन्द्रियादि संयोगप्रदातृत्वादिना हिरण्यगर्भसृष्टेः व्यष्टिरूपत्वेऽपि एतद्वाक्यविवक्षितव्यष्टिरूपत्वं नास्ति । समष्टिविषयभूततत्वानां नामरूपभाक्त्वेऽपि यथा एतद्वाक्यविवक्षितत्वं नास्ति। जीवेनात्मनानुप्रविश्येत्यनन्वयात् । तथैव ब्रह्मविषयकत्वमप्यस्य न संभवति । समष्टि, अण्ड, ब्रह्मसृष्ट्यनन्तरमस्य वाक्यस्य प्रवृत्तेः । अन्यथा संज्ञामूर्तिक्लृप्त्यधिकरणपूर्वपक्षानुत्थितेः ।

अत्र चतुर्मुखशरीरकस्सन् नामरूपे व्याकरवाणीति श्रुत्यर्थपर्यालोचनायां चतुर्मुखस्यापि व्याकरणकर्तृत्वप्रतीतेः सोऽपि व्याकरणसङ्कल्पं करोतीति प्रतीयते । तत्र देवादिजीवस्य व्यष्टिरूपत्वमात्र प्रयोजकत्वं चतुर्मुखसङ्कल्पस्य । 'बहुस्यां प्रजायेये'ति श्रुत्यर्थपर्यालोचने परस्यैव बहुभवनरूपत्वावश्यकत्वात् स्वस्यैव कार्यत्वमिति स्वात्मपर्यन्तनामरूप सम्पादनमिति विज्ञायते । अतः स्वसङ्कल्पेनैवैतत् सर्वं निर्वहति परः ।

अतः अत्र चतुर्मुखसङ्कल्पस्य न आवश्यकतेति ध्येयम् । 'सदेव', 'तदैक्षत' इति निर्दिष्टं परं ब्रह्म 'सेयं देवतैक्षत' इति देवताशब्देन निर्दिश्यते । तथा निर्देशस्येदं प्रयोजनं सद्रूपं ब्रह्मैव व्यूहरूपेणावतरति । तत्र स्वनाभिस्थानात् ब्रह्माण्डं तत्र ब्रह्माणं चोत्पादयति । ततः तच्छरीरकस्सन् देवादिनामरूपव्याकरणं करोती । विस्तरस्त्वन्यत्र द्रष्टव्यः। त्रिवृत्कुर्वतः इति न समस्तं पदम् । त्रिवृतं कुर्वतः इति समासे सामर्थ्याभावात् समासानुपपत्तेः । न हि घटं कुर्वतः इति विगृह्य घटकुर्वतः इति समस्तपदप्रयोगः उपपद्यते। अतः त्रिवृत् इति भिन्नं पदं द्वितीयान्तं नपुंसकलिङ्गम् । यद्वा–अत्रिवृतं त्रिवृतं कुर्वन् इति त्रिवृत्कुर्वन् च्विप्रत्ययान्तः । तकारान्तत्वात् ईकारभावः इति ज्ञेयम् ।

## 69. तदन्तरप्रतिपत्त्यधिकरणे

तदन्तरप्रतिपत्तौ...। भूतसूक्ष्माणां सुलभत्वात्–किमत्र भूतसूक्ष्मशब्देन तन्मात्रा उत मूलप्रकृतौ अपरिणतभागः यद्वा नैयायिकमत इव भूतपरमाणुसमुदायः । न प्रथमः तन्मात्रायाः भूताद्युपादानत्वमेव । न तु साक्षात् शरीरारम्भकत्वम् । न द्वितीयः, अपरिणतभागस्य कार्यानारम्भकत्वात् । न तृतीयः जालकरन्ध्रनिष्क्रान्ताणुसमुदायवत् स्वर्गे सञ्चरतामणूनां कार्योपयोगित्वासंभवात् । न ह्यत्र स्थितैरणुभिः अस्मच्छरीरमारभ्यते । अत्रोच्यते–भूतसूक्ष्मं नाम स्थूलदेहारम्भकपञ्चभूतसूक्ष्मसमुदायरूपं किञ्चित् वस्तु । तस्याप्रत्यक्षत्वात् सूक्ष्मशब्देनोच्यते तत् । भगवता हि सृष्टिकाले एतादृशानि सूक्ष्माणि बहूनि सृष्टानि तत्र तत्र सञ्चरन्ति, लिङ्गाख्यं भस्त्रिकान्तः पवनवदवस्थितमिति सांख्याः । स्वर्गलोकं गच्छतः तत्र देहान्तरपरिग्रहसमये स्वसृष्टं सूक्ष्मशरीरं भगवान् तेन गतेन जीवेन संबन्धयति । न तदर्थं अत्रादाय गन्तव्यमिति । अथवा उपासकाः विरजानदीतरणकाले स्वस्वभूतसूक्ष्मं परित्यज्य गच्छन्तीति संप्रदायः । तादृशभूतसूक्ष्माणां सुलभत्वमित्याशयः ।

## 75. सन्ध्याधिकरणे

सन्ध्ये सृष्टिराह हि । इदं सिद्धान्तसूत्रतयाऽपि नेतुं शक्यम् । 'अथापि मायामात्रं तु' इति तु शब्दस्य पक्षव्यावर्तकस्योत्तरत्रोक्तेः पूर्वं पक्षसूत्रमिदं द्वितीयसूत्रमपि ।

मध्वमते सर्वमपि सूत्रजातं सिद्धान्तपरमेव । अद्वैतिमते विशिष्टाद्वैतिमते एव च कानिचित् पूर्वपक्षपराणि कानिचिच्च सिद्धान्तपराणि इति विभागः । पूर्वपक्षपरत्वे सिद्धान्तपरत्वे च औचित्यं आलोचनीयम् । तु इत्यादि पक्षान्तरसूचकशब्दश्रवणे पक्षव्यावृत्तिलाभात् पूर्वोक्तस्य पूर्वपक्षपरत्वं स्वीकार्यम् । एव च इत्यादिश्रवणेपि पूर्वोत्तरसंदर्भमनुसृत्य पूर्वपक्षसिद्धान्तपरत्वादि एषितव्यम् । क्वचित् क्वचित् अधिकरणे पूर्वसूत्रस्य सिद्धान्तपरत्वं, उत्तरस्य पूर्वपक्षपरत्वं ततोऽप्युत्तरस्य सिद्धान्तपरत्वं इष्यते । सर्वत्र पूर्वसूत्रस्य पूर्वपक्षपरत्वमिति न्यायः प्रायिक एव । तस्मात् सन्दर्भाद्यनुसृत्यैव पूर्वपक्षपरत्वादि वाच्यम् । अत्र सन्ध्याधिकरणे सन्ध्ये सृष्टिः परमात्मकर्तृकैव, आह हि—स हि कर्ता, परमात्मैव श्रुतिप्रसिद्धः कर्ता इति श्रुतिरेवाह इत्यपि वक्तुं शक्यम् । अथापि 'माया मात्रं तु' इति पक्षव्यावृत्ति सूचकशब्दश्रवणात् अस्य पूर्वपक्षपरत्वं स्वीक्रियते । निर्मातारंचैके पुत्रादयश्च इति सूत्रमपि पूर्वपक्षद्योतकत्वं सूत्रद्वयस्य सूचयति । सिद्धान्ते हि 'कामं कामं इति णमुलन्तः कामयित्वा कामयित्वेति पूर्वपक्षे काम्यमानपुत्रादिवाचकः । अत्र 'पुत्रादयश्च' इति स्वारस्यात् पूर्वपक्षपरत्वमवगम्यते । यद्यपि 'सन्ध्ये सृष्टिराह हि' इति सिद्धान्तसूत्रं, निर्मातारं च इति पूर्वपक्षसूत्रम् । 'मायामात्रं तु' इति सिद्धान्तसूत्रमित्यपि निर्वोढुं शक्यते । अथापि 'निर्मातारं च' इति पूर्वपक्षसूत्रत्वात् । अत्र समुच्चयबोधक च शब्दश्रवणेन पूर्वसूत्रस्यापि पूर्वपक्षसूत्रत्वमुन्नीयते । एवं तत्रतत्राधिकरणेषु सूत्रस्वारस्यमवलंब्य तत्तत्पक्षपरत्वं अङ्गीकार्यमिति ।

## 76. तदभावाधिकरणे

अतः प्रबोधोऽस्मात् । अत्र 'अतः' इत्यस्य स्वप्नाभावरूपसुषुप्तेः इत्यर्थवर्णनं कृत्वा सुषुप्तितो जीवस्य प्रबोधः इति भावं वर्णयन्ति ।

स्वप्नस्थानभूतनाड्यां स्थितः कश्चित्, स्वप्नं पश्यति दैववशात् तस्य सुषुप्त्यभावे स्वप्नादेव जागरणं, यथा तथा सुषुप्तस्य नास्ति। सुषुप्ते-रेव (स्वप्नं विना) साक्षात् प्रबोधरूपजागरणम् इति केचित् वदन्ति। तथार्थवर्णने अस्मादिति पदमधिकम्। भगवदधीनत्वबोधनार्थमितिचेत् सर्वस्यापि कार्यस्य स्वप्नस्य सुषुप्त्यादेश्च तदधीनत्वदर्शनात् विशे-ष्योक्तेः प्रयोजनाभावः। अपि च सर्वस्यापि सुषुप्तेरेव साक्षाज्जागरणं इत्यपि नास्ति। सुषुप्तिनाडीगमनदशायामिव आगमनदशायामपि स्वप्ननाडीसम्बन्धस्य स्वप्नानुभवस्य च दर्शनात्। केषाञ्चित् आग-मनदशायां स्वप्नो नानुभूतः इति चेत्, केषाञ्चिदनुभूतत्वस्यापि दर्श-नात्। अतः सुषुप्तेरेव जागरणमिति बोधनार्थसूत्रस्याप्रामाणिकत्वमेव स्यात्।

## 79. उभयलिङ्गाधिकरणे

भेदादिति चेन्न...। ननु जीवस्योभयलिङ्गत्वं दोषवत्वं (च) दशा-भेदेन। तद्वत् परमात्मनः कथं? सर्वदा परमात्मनः चिदचिच्छरीरक-त्वात्। वैकुण्ठस्थत्वेऽपि परस्य तत्तच्छरीरकत्वानपायात्। उच्यते— 'जाग्रतः सुषुप्तस्य...तत्तदवस्थशरीरेऽवस्थानात्' इति श्रीभाष्य श्री सूक्ति पर्यालोचनायां, नात्र प्रलयदशा उक्तेति प्रतीयते। तथा च सृष्टिदशापन्न तत्तदवस्थ शरीरे विद्यमानस्य परस्य ये दोषाः उद्भा-विताः तेन प्रलयदशायामिति तदानीं उभयलिङ्गत्वं इति। यद्वा—नित्य-संसार्यनभ्युपगमपक्षे सर्वे मुक्ता एव। तदा प्रलयदशापि जीवस्य नास्ति। बद्धानामभावात्। तद्दशायां परस्य उभयलिङ्गत्वम्।

सर्वमपि वस्तु स्वाभाविकानुकूलत्ववदेव। कर्मकृतं तु सुखरूपत्व दुःखरूपत्वज्ञानं इति सिद्धान्तः अनुपपन्नः। तथा सति परस्य कर्म-संबन्धाभावेन सर्वस्मिन्नपि जीवे अनुकूलत्वप्रतिभासावश्यकत्वेन पाप-कर्मकृत्स्वपि निग्रहानुदयप्रसङ्गः। यदि परमात्मव्यतिरिक्त जीवविषये एव सिद्धान्तः इत्युच्यते तदा परमात्मानं प्रति वस्तुनः दुष्टत्वादुष्टत्व संभवेन पूयशोणितादिमज्जनं स्वेच्छाकृतमपि अपुरुषार्थ एवेति पूर्वपक्षस्य तथैव स्थितेः इति चेदुच्यते परस्य हेयवस्तु संबंधमात्रेण नापुरुषार्थगंधः।

घृतयुक्तान्नस्य करेण स्पर्शो हस्तस्य तल्लेपः (பிசுபிசுக்கு) जायते। रसनायास्तु न। तदर्थं हस्तस्यैव लेपनिवारणवस्त्वपेक्षा (சீயக்காய் பொடி। एवं अमेध्यसंबन्धः कस्यचित्क्रमिविशेषस्य वर्तते। न तावता तच्छरीरे अपुरुषार्थसंबन्धः। मनुष्याणां तु अस्ति तद्वत्। परस्यापि रेतसि सत्त्वेऽपि ।।

## 81. पराधिकरणे

परमतस्सेतून्मान...। अत्र व्यपदेशादित्येकवचनान्तत्वेन निर्देशौचित्येऽपि बहुवचनान्ततयानिर्देशः एकैकमेव हेतुत्वे पर्याप्तमित्यभिप्रेत्य।

## 82. फलाधिकरणे

'यस्मात्परिमितं फलं' इति देवतान्तराणां असेव्यत्वोक्तेः 'भृगुर्वै वारुणिः' इति कथं वरुणस्य सेव्यत्वं उपदेष्टृत्वं चेति पूर्वपक्षनिरासः। आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्। स गुरुमेवाभिगच्छेदिति ब्रह्मविद्यासंपादनाय आचार्योपसदनोक्तेः परम्परया अपरिमितफलसिद्धेश्चेति कार्यः।

'धर्मं जैमिनिरत एव। भगवतः फलप्रदत्वं बादरायणो मन्यते। जैमिनिस्तु धर्मस्यैव। न तु कर्म हि पापपुण्यभेदात् द्विविधं भवति। तत्र पुण्यस्य धर्मस्यानुष्ठाने तदेव वा तत्तुष्टः परमात्मा वा फलं दिशतीति शक्यकथनम्। पापस्याधर्मस्यानुष्ठाने कः फलं दिशतीति शङ्कायां पुण्यवत् पापस्वरूपमेव फलप्रदमिति जैमिनिमतमिति वक्तव्यम्। तत्र धर्मं जैमिनिरित्युक्तत्वात् पापस्य धर्मशब्दवाच्यत्वाभावात् कथं पापस्य ग्रहणं; वेदबोधितेष्टसाधनताकत्वस्यैव धर्मत्वात् पापस्य धर्मशब्देनोपादानासंभवात्। इति चेत्—अत्र केचित्—धर्मशब्दः पापस्याप्युपलक्षकः। धर्मं जैमिनिः इत्युक्तौ धर्माधर्माविव फलप्रदावित्यर्थ इत्यदोषः। उपासनं विवक्षन्नत्र सूत्रकारः उपासनस्य यागादेः सर्वस्यापि फलप्रदः भगवानेवेत्यकथयत्। धर्ममात्रविचारेण झटिति जैमिनिः धर्मः एव फलप्रदः इत्याह। अतोऽत्र अधर्मप्रस्तावाभावादेवमुक्तिः।

## 86. आनन्दाद्यधिकरणे

1 इतरे त्वर्थसामान्यात्। स्वरूपनिरूपकधर्माः कति ? सत्यत्वं अनन्तत्वमपि अभावरूपमेवेति अमलत्वमात्रे कथं शङ्का? वस्तुतः भावांतराभाववादिनामस्माकं मते सर्वस्यापि भावरूपत्वात्शङ्कैव नोत्पद्यते।

2 स्वरूपनिरूपकधर्माणामिव निरूपितस्वरूपविशेषणगुणानामपि सर्वविद्यानुयायित्वमावश्यकम्। कुतः ? 'ब्रह्मशब्देन च...अनवधिकातिशायासंख्येकल्याण...अभिधीयते' इति श्रीसूक्त्या सर्वगुणानामपि ब्रह्मपदशक्यतावच्छेदकत्वसिद्धेः तेषामपि अवश्यानुसन्धेयत्वप्राप्तेः इत्यादि।

3 सत्यत्वादि स्वरूपनिरूपकधर्माणां तथात्वमस्ति नवेति विचारः। 'इतरे त्वर्थसामान्यात्' सूत्रनिर्दिष्टाः सर्वविद्यानुयायित्वेन संप्रतिपन्नाः गुणाः स्वरूपनिरूपकधर्माः 'सत्यं ज्ञानं अनन्तं, ब्रह्म, आनन्दं ब्रह्म 'अस्थूलमनणु' इत्याद्युक्ताः सत्यत्व ज्ञानत्व अनन्तत्व आनन्दत्व अमलत्वरूपाः पञ्च। आनन्दाद्यधिकरणे इतरे त्वर्थसामायात् इति सूत्रभाष्ये 'ते च गुणाः सत्यज्ञानानन्दामलत्वानन्तत्वानि इति स्पष्टं भाषितत्वात्। अत एतेषां पञ्चानां सर्वविद्यानुयायित्वं स्वरूपनिरूपकधर्मत्वात्। केचित्तत्र 'सत्यज्ञानमनन्तं' इति वाक्यप्रतिपन्न सत्यत्वज्ञानत्वानन्तत्वरूपाणां त्रयाणामेव स्वरूपनिरूपकधर्मत्वमुशन्ति। तेषामयमाशयः--ब्रह्म स्वेतराचेतनादिवस्तुभ्यो भिन्नं सत्यत्वात् ज्ञानत्वात् अनन्तत्वात् इति एतेषां त्रयाणामेव इतरभेदानुमिति जनकत्वम्। अत्र सत्यत्वोक्त्या अचेतन तत्संसृष्टबद्धचेतनव्यावृत्तेः, ज्ञान पदेन नित्यासंकुचितज्ञानैकाकारवाचकेन मुक्तव्यावृत्तेः अनन्तपदेन नित्यव्यावृत्तेश्च एतेषां त्रयाणामेव इतरभेदानुमितिजनकत्वम्। एवं च ब्रह्मविशेष्यकाचेतनत्वाद्यवच्छिन्नभेदकूटविधेयकानुमितिजनकतावच्छेदकप्रकारताश्रयाः इमे एव गुणाः इति एतेषामेव सर्वोपासनविषयत्वं नान्यस्य। अचेतनबद्धमुक्तनित्यव्यावृत्तिरूपव्यावृत्तेः सिद्धत्वात् इतोऽप्यन्यव्यावृत्तेरभावात्। इति। न चैवं सति, आनन्दादयः प्रधानस्य इति सूत्रे आनन्दस्य स्वरूपनिरूपकधर्मत्वोक्तिः कथं? तत्र हि आनन्द

ग्रहणमनुपपन्नं भवेत् त्वन्मते, एवं अक्षरध्यधिकरणे अस्थूलत्वादिरहितत्वरूपामलत्वस्य स्वरूपकत्वस्थापनमपि विरुध्यते इति वाच्यम् । अनुकूलत्वप्रकारकज्ञानस्यैव आनन्दरूपत्वेन आनन्दस्य ज्ञानावस्थाविशेषरूपत्वमिति सत्यं ज्ञानं इति लक्षणघटकज्ञानस्यैव आनन्दपदेन सूत्रे उपादानमित्यदोषात् । ज्ञानमेवह्यनुकूलमानन्दः इत्युच्यते इति जिज्ञासाधिकरणश्रीभाष्यमपि अस्मन्मतोपष्टंभकम् । एवं सत्यत्वस्य विकारसामान्याभावरूपत्वेन अभावरूपस्य तस्य कथं स्वरूपनिरूपकत्वमित्याक्षेपेण अक्षरध्यधिकरणप्रवृत्तेः । अक्षरत्वादिकं विशेषाभावः सत्यत्वं विकारसामान्याभावरूपम्। एवं च विशेषाभावकूटस्यैव सामान्याभावरूपत्वात्सत्यत्वविषयकविचार एव तत्राधिकरणे इत्यदोषाच्च । एतत्त्रयमेव स्वरूपनिरूपकधर्मः । अयमेव इतरेत्वर्थ सामान्यात् इत्यत्र विवक्षितः । न चैवं सति ते चत्त्वारो गुणाः सत्यज्ञानानन्दमलत्वानन्तत्वानि इति श्रीभाष्यविरोधः शङ्कनीयः । ज्ञानाभिन्न आनन्दः ज्ञानानन्दः इत्यर्थस्वीकारेणाविरोधात्। ज्ञानानन्दयोरभेदस्य सूत्रसूचितस्य स्पष्टीकरणार्थमेव एवंविधनिर्देशोपपत्तेश्च । अमलत्वनिर्देशस्य कथमुपपत्तिरिति चेत् ? सत्यत्वामलत्वयोः वस्तुतो भेदाभावात् सत्यपदतात्पर्यविषयभूतमेवामलत्वमिति सिद्धेः एकस्य सामान्या भावरूपता अन्यस्य विशेषाभावरूपता इति वैलक्षण्यद्योतनार्थं पृथङ्निर्देशोपपत्तिः इत्यनुपपत्यभावात् । इति ।

पञ्चानां स्वरूपनिरूपकत्वं वदतामयमाशयः । श्रीभाष्यस्वारस्यात् प्रसिद्धिप्राचुर्यात् । आनन्दस्य ज्ञानावस्थाविशेषरूपत्वाभ्युपगमे अनुपपत्तेश्च पञ्चापि स्वरूपनिरूपकधर्माः सर्वविद्यानुयायिनः इति धर्मत्रयेणैवब्रह्मस्वरूपे इतरव्यावृत्तिसिद्धेः तदतिरक्तानपेक्षा इति तु न युक्तं। अनन्तपदघटकवस्तुपरिच्छेदरहितत्वरूपसर्ववस्तुसामानाधिकरण्येनैव सर्वेतरवस्तु व्यावृत्तिसिद्धेः तदिरसत्यत्वाद्यनपेक्षाया अपि सुलभत्वेन तेषामपि स्वरूपनिरूपकत्वापगमप्रसङ्गात् स्वरूपस्वभावविकारशून्यत्वं बोधयता सत्यपदेन स्वरूपविकारवच्चेतनव्यावृत्ति स्वभावविकारवच्चेतनव्यावृत्तिरूपार्थद्वयं प्रदर्शितम् । एवमपि मतान्तरवत् आकाशवत्

स्थूलं स्यात् परमाणुवत् अणु स्यात् तयोरपि विकारशून्यत्वात् इति कस्यचित् शङ्कायां तन्निवृत्त्यर्थं अस्थूलमित्यादेः आवश्यकत्वात्। अलोहितं अच्छायं इत्याद्युक्तेरपि लोहितच्छायादिनिषेधावश्यकत्वात् । अतः अस्थूलत्वाद्युक्तामलत्वस्य निर्विकारत्वरूपसत्यत्वे नान्तर्भावः शङ्क्यशङ्कः इति । एवं ज्ञानानन्दयोरभेदकथनमप्यनुपपन्नम् । यदि आनन्दस्य ज्ञानावस्थाविशेषरूपता तर्हि ब्रह्मस्वरूपे सविकारत्वमभ्युपगतं भवेत् । ब्रह्मस्वरूपस्य हि आनन्दरूपत्वम् । ज्ञानस्वरूपं ब्रह्म आनन्दस्वरूपमभवत् इत्युक्तं भवेत् । अतः स्वरूपस्यैव परिणामः इति यादवप्रकाशमतस्य विजयप्रसङ्गः । अपसिद्धान्तश्च । ननु ज्ञानमेवह्यनुकूलमानन्दः इत्युच्यते इति श्रीभाष्यसूक्तेः कथं निर्वाहः इति चेत्–स्थविष्टमिदं चोद्यम् । अत्र हि स्वरूपभूतज्ञानं नोच्यते धर्मभूतज्ञानमेवात्र विषयः । धर्मज्ञानभूतस्यावस्थाविशेष एवानन्दः । अस्माकं चन्दनादिलेपेन जायमानोह्यानन्दः धर्मभूतज्ञानविशेष एव । नह्यत्र विवदनीयमस्ति । ब्रह्मणो निर्गुणत्वं वदतां अद्वैतिनां मतं निरसितुं प्रवृत्ता तत्र श्रीभाष्यसूक्तिः । अस्माभिः ज्ञातृत्वादिगुणवत्वं उक्तं, तत्र तत उपरि अद्वैतिना एवमाशङ्क्यते–आनन्दो ब्रह्म इति आनन्दमात्रस्य ब्रह्मस्वरूपत्वमुक्तं, नतु अनन्दगुणकत्वमिति । तत्रोत्तरं ज्ञानाश्रयस्य ब्रह्मणः ज्ञानं स्वरूपं इति वदतीति परिहृतम् । ज्ञानमेव ह्यनुकूलमानन्दः इत्युच्यते इति। ब्रह्मणः आनन्दरूपता नात्रोच्यते । परं तु आनन्दगुणकत्वमेवेति सगुणत्वमेव ब्रह्मण इति। अन्यथा आनन्दं ब्रह्मेति नपुंसकलिङ्गेन भाव्यम् । अत एव विज्ञानमानन्दं ब्रह्म इति नपुंसकलिङ्गनिर्देशवाक्यमुपरि उपात्तम् । तत्र हि उभयं स्वरूपपरम् । आनन्दस्य ज्ञानावस्थाविशेषरूपत्वे पौनरुक्त्यं स्यात् इति शङ्कितुरभिप्रायः । इदं च वाक्यं स्वरूपपरम् । अत्र स्वयंप्रकाशत्व ज्ञानत्व, अनुकूलत्वरूपं आनन्दत्वं च विवक्षितम्। नत्ववस्थाविशेषाद्यश्रित्य इति समाधातुरभिप्रायः । अत एवोपरि—आनन्दं ब्रह्मणो विद्वान् इति व्यतिरिक्तनिर्देशाच्च नानन्दमात्रं ब्रह्म अपि त्वानन्दि इति भाषितम् । अतः आनन्दगणकत्वाभिप्रायकं पूर्वभाष्यमिति स्पष्टं विज्ञायते । अत्रापि ज्ञातृत्व-

मेवह्यानन्दित्वं इति च भाषितम् । एतेनापि धर्मभूतज्ञानस्यैवावस्था-
विशेषः अधर्मानन्द इति विज्ञायते । ज्ञानाश्रयस्य इति भाष्यस्वार-
स्यादपि धर्मभूतज्ञानविषयकमिति ज्ञायते—ज्ञानं स्वरूपं इत्यत्र स्वरूप-
पदं स्वभावपरं इति च न विरोधः । अतः पश्चापि स्वरूपनिरूपक-
धर्माः इति ।

स्वरूपतो धर्मतश्चैकरूपत्वं सत्यपदेन बाध्यमिति सत्यत्वं भाव-
रूपं अनन्दपदं गुणैः निरतिशयप्रकर्षबोधकमिति अनन्तत्वमपि भाव-
रूपम् । यद्यपि भावान्तराभाववादिनामस्थूलत्वादिकमपि भावरूपमेव
तथापि अभावस्य स्थूलत्वादिनिषेधाभावे ब्रह्मस्वरूपं स्थूलत्ववत् स्यात्
अणुत्ववत् स्यात् इति शङ्कापरिहारो न संभवति । अतः स्थूलत्व-
निषेधावश्यकतया तदाऽभावरूपत्वेन लब्धरूपे क्वचित् किञ्चित् तादृ-
गेव निषिध्यते इति न्यायेन कथं अभावरूपस्य स्वरूपनिरूपकत्वमिति
शङ्का आसीत् । तत्परिहारः तदधिकरणे कृतः ।

औदार्यादीनां निरूपितस्वरूपविशेषणत्वादेव न सर्वविद्यानुया-
यित्वम्। ब्रह्मशब्देन च इत्यादिना न तेषां शक्यतावच्छेदकत्वं उक्तम्।
असाधारणधर्मत्वाभावात् । न हि पुरुषोत्तमत्वं शक्यतावच्छेदकम् ।
बृहत्वं च स्वरूपेण गुणैश्च मुख्यार्थः इत्युक्त्या बृहत्वबृंहणत्वयोरेव
शक्यतावच्छेदकत्वम् । अयं ब्रह्मशब्दः तादृशगुणविशिष्टपुरुषोत्तम-
वाची इत्येवोक्तम् । सास्नादीनामिव सत्यत्वादीनां शक्यतावच्छेद-
कत्वमस्त्येव ।

## 93. हायधिकरणे

'तस्य प्रिया ज्ञातयः सुकृतं'...अत्र ज्ञातिपदं निरर्थकमनर्थकं च ।

हानौ तूपायनशब्दशेषत्वात्...। 'तस्य प्रिया ज्ञातयस्सुकृतमुप-
यन्ति अप्रियाः दुष्कृतं'—ननु तस्य पुत्रा दायमुपयन्ति इति दायसम-
कालं सुकृतदुष्कृतयोः प्रियाप्रियप्राप्तिकथनं कथं ? क्वचित्पितुः दायस्यै
वासंभवात् । दायसत्त्वेऽपि पुत्राद्यभावस्यापि संभवात् । दायस्य पुत्रा-
देस्सत्त्वेऽपि पुत्रस्य देशान्तरगमने पितुश्च तदा मरणे दायस्वीकारा-
संभवात् । पितुः दशरथस्य मरणकाले क्वचिदपि पुत्रेषु दायासंक्रमण-

दर्शनाच्चेति चेत् । औचित्यमात्रप्रदर्शनपरत्वादस्याः श्रुतेः । संभवत्स्थलाभिप्रायेण दृष्टान्तत्वसंभवाच्च । पुत्रासन्निधौ पितुर्मरणेऽपि दायस्वत्त्वार्हत्वस्यानपगमात् ।

ननु प्रिया ज्ञातयस्सुकृतमिति विशेषितत्वात् अप्रियाः इत्यत्रापि ज्ञातयः इति संबध्यते इति ज्ञायते । एवं च प्रियेषु ज्ञातिषु सुकृतप्राप्तिः अप्रियज्ञातिषु दुष्कृतप्राप्तिरिति सिध्यति । अतः 'सुहृदः साधुकृत्यां द्विषन्तः पापकृत्या'मिति ज्ञात्यज्ञात्युभयसाधारण्येन पुण्यपापविधूननमुक्तं कथं सङ्गच्छते । न च प्रियाः ज्ञातयश्च इति चकारयोजनेन प्रियेषु ज्ञातिषु च उभयत्र संक्रमणमुच्यते इति न विरोध इति वाच्यम् । एवमर्थस्वीकारे प्रियाः इति पदस्वारस्यात् ज्ञातय इत्यत्र तस्यानन्वयाच्च अप्रियज्ञातिषु सुकृतसंक्रमणापत्तेरवारणात् । न च 'सुहृदस्साधुकृत्यां' इति श्रुत्यन्तरबलात् सुहृदयो ज्ञातयः इत्यर्थस्वीकारावश्यकत्वात् अप्रियज्ञातिषु न पुण्यसंक्रमणापत्तिरिति वाच्यम् । प्रिया इत्यनेनैव एतादृशार्थसंभवेन ज्ञातिपदस्य व्यर्थत्वापत्तेः । प्रिया इत्यनेनैव सुहृत् ज्ञातिग्रहणसंभवेन पौनरुक्त्यापत्तेश्च । अतः विशेषणविशेष्यभावापन्नत्वेनैवार्थस्य वाच्यत्वात् अज्ञातिषु प्रियेषु सुकृतसंक्रमणं न सेत्स्यति सामान्यतः ज्ञातिषु सुकृतसंक्रमणोक्तौ शत्रुभूतपुत्रादिष्वपि सुकृतसंक्रमणापत्तेः। यदि पितुः पुत्रादिः शत्रुर्भवति तर्हि पुत्रे तादृशे न सुकृतप्राप्तिः, यदि मित्रं, तदा तत्र न दुष्कृतप्राप्तिः । अतो विशेषण विशेष्यभावेन अन्यथावाऽन्वयेऽपि अर्थ सामञ्जस्यं नास्तीति चेत्-ज्ञातय इति औचित्यमात्रप्रदर्शनपरमिति मन्तव्यम् । प्रायशः ज्ञातयः प्रिया एव भवेयरिति । अतः प्रियेष्वेव सुकृतप्राप्तिः, अप्रियेषु दुष्कृतप्राप्तिरिति श्रुत्यन्तरानुगुण्यं च । अत एव अप्रिया इत्यत्र ज्ञातिपदं न प्रयुक्तम् ।

ननु यत्र हानिमात्रश्रवणं तत्र निराश्रयस्य स्थित्यनुपपत्तेः उपायनमपि ग्राह्यमित्युक्तं न संभवति । पुण्यपापस्य भगवन्निग्रहानुग्रहरूपत्वेन अस्मत्सिद्धान्तसिद्धत्वात् तद्धानिः निवृत्तिरेव । कूश्माण्डहोमादिप्रायश्चित्तादिना पापपरिहारे कथं निराश्रयस्य स्थितिरिति चेत्-

## 98. अक्षरध्यधिकरणे

अक्षरधियां त्ववरोधः:...। अस्थूलत्वादीनां स्वरूपनिरूपकत्वं न संभवति। निषेधरूपत्वेन 'लब्धरूपे क्वचित्किञ्चित्तादृगेव निषिध्यते' इति न्यायेन स्वरूपनिरूपकत्वासंभवात्। अभावज्ञानं प्रतिप्रतियोगिज्ञानं अधिकरणज्ञानं च कारणम्। 'ब्रह्म स्थूलत्वाद्यभाववत्' इत्युक्ते हि पूर्वप्रतिपन्ने ब्रह्मणि स्थूलत्वादीनां निषेधात् पूर्वमेव ब्रह्म प्रतिपन्नमिति कथमेषां स्वरूपनिरूपकत्वमिति पूर्वपक्ष्याशयः। सिद्धान्ते—ब्रह्म सत्यत्वाश्रयः इत्युक्ते पूर्वप्रतिपन्ने एव ब्रह्मणि सत्यत्वान्वयात् सत्यत्वादीनामपि स्वरूपनिरूपकत्वं न भवति। यदि तु 'यद्ब्रह्म तत् सत्यं' उद्देश्यविधेयभावो नोपपद्यते यत् सत्यत्वाश्रयः तदेव ब्रह्मेति, 'या गौः सा सास्नादिमती' इति गो स्वरूपं अजाननं प्रति वचनव्यक्तिः नैव भवति, या सास्नादिमती सा गौः इत्येव। अतस्सत्यत्वादीनां स्वरूपनिरूपकत्वं युज्यत एवेति। तर्हि हेयप्रत्यनीकानन्दादीनामेव स्वरूपत्वात् यत् ब्रह्म तत् अस्थूलं इति वचनस्यानुपपन्नत्वात् यत् अस्थूलं आनन्दरूपं तत् ब्रह्मेत्येव प्रयोक्तव्यत्वात् अनन्दादीनामिवास्थूलत्वादीनामपि स्वरूपनिरूपकत्वसंभव इति।

## 97. अन्तरत्वाधिकरणे

1 अन्तरा भूतग्रामवत्...अन्तरत्ववाचकः अन्तराशब्दोऽयं तृतीयार्थे डाल् प्रत्ययः। अन्तरत्वेनेत्यर्थः।

2 अन्तराभूतग्रामवत्स्वात्मनः अत्रायं विचारः। उषस्तेन द्विवारं पृष्टः याज्ञवल्क्यः क्रमेण 'यः प्राणेन' 'न दृष्टेः' इति समाधानमाह। प्रथमसमाधौ उक्तधर्मस्य जीवसाधारण्यं मत्वा पुनः प्रश्ने 'न दृष्टेः' इति जीवमेवोक्तवानिति न मन्यस्व इत्याह। अत्र निरुपाधिकं उच्छ्वासनिःश्वासरूपक्रियानुकूलप्रयत्नाश्रयत्वं उक्तमिति नास्य जीवसाधारण्यं इति विरराम उषस्तः। इममर्थमजानन् कहोळः पृच्छति यदेवेत्यादिना। अत्र यत्साक्षात्, यदेव साक्षात्इति द्विवारं प्रश्नेन अन्यश्य प्रश्ने अन्यस्य समाधानोक्तौ न प्रयोजनमिति कथनेन च जीवभिन्नपरमात्मैव पृष्टः इत्यत्र नैव विवादः। मनस्समाधानेनोपरमाच्च

पार्श्वस्थस्य कहोलस्यापि 'यः प्राणेन' इत्यत्र निरुपाधिक प्राणनत्वमेव त्रिवक्षितमिति ज्ञानं जायत एव । एवं च कहोलप्रश्नस्य कथमुत्थितिः प्राणनत्वस्य जीवसाधारण्येन कथञ्चित् नेयत्वात् सर्वात्मनाऽसंभावित धर्मोक्त्या जीवव्यावृत्तिः कार्या इत्याशयेन कहोलप्रश्नः इत्यपि न संभवति । अशनायाद्यतीतत्वस्यापि जीवसाधारण्यात् । अत्र निरूपाधिकत्वविवक्षणे पूर्वमपि तद्विवक्षासंभवात् । कहोलोपरि अन्यस्त्र कस्यचित् 'यदेव साक्षात्' इत्यादि प्रश्नाभावात् अत्रैव निरूपाधिकत्वविवक्षणमिति च न वाच्यम् । द्विवारं पृष्टवता उषस्तेन तृतीयवारं प्रश्नाकरणादपि तत्रैव निरूपाधिकत्वविवक्षणसंभवात् । अतः उषस्तस्य पूर्वोक्तार्थज्ञानासामर्थ्यकल्पनं न युक्तमिति ।

सत्यमिदम् । 'यत्साक्षादपरोक्षात् ब्रह्म', ब्रह्मस्वरूपावगमार्थं उषस्तेन प्रश्ने ब्रह्मासाधारणनिरूपितस्वरूपविशेषणकथने न प्रयोजनमिति मन्यमानेन कहोलेन प्रश्नकरणात् अशनायाद्यतीतत्वस्य अमलत्वरूपस्य स्वरूपनिरूपकधर्मत्वात् तदुक्तौ अयं विररामेति ।

भूतग्रामवत्स्वात्मनः इत्यत्र स्वशब्दः भूतग्रामवतः आत्मा इति वैयधिकरण्य परिहाराय । भूतग्रामवत्स्वस्य आत्मेति विग्रहकरणं 'व्यर्थं सत् किञ्चित्' इति न्यायेन निवारयति । अपि च एष ते आत्मा इति श्रुतिवाक्ये राहोः शिरः इतिवत् त्वदभिन्न आत्मा इत्यर्थं विवरण ज्ञापनाय, स्वात्मेति स्वशब्दप्रयोग चकार ।

## 98. कामाद्यधिकरणे

कामादि इतरत्र...। कामस्य आदिः इति विग्रहे नपुंसकत्वमनुपपन्नम् । कामस्य–सत्यकामत्वस्य ग्रहणामपि न संभवति । अतः कामः आदिः यस्येति तद्गुणसंविज्ञानबहुव्रीहिः । अपहतपाप्मा विजर इति श्रवणेपि कामस्य आद्यत्वं वैबक्षिकम् ॥

## 100. प्रदानाधिकरणे

'त्रिधातुः त्रैधातवीयञ्च' इति शीर्षकेण कश्चित् व्यासः मया (मावल्पाकं श्रीदेवनाथताताचार्यैः मीमांसाशिरोमणिभिः) लिखितः । देहलीनगरविराजमानराष्ट्रीयसंस्कृतसंस्थानस्य षाण्मासिक्यां 'संस्कृत-

विमर्शः' इत्यस्यां पत्रिकायां, 1985 तमेवर्षे त्रयोदशे खण्डे, प्रथमद्वितीयभागात्मके प्रकाशने 21-पुटेषु मुद्रापितोऽयं वर्तते । तस्य सारांशः संक्षेपेण अत्र तत्सूक्तिभिरेव प्रदर्श्यते ।

'प्रदानवदेव तदुक्तम्' इतीदं भगवता बादरायणेनानुगृहीतेषु ब्रह्मसूत्रेषु, तृतीयाध्याये तृतीयपादे द्विचत्वारिंशम् । एकमेवेदं सूत्रं सिद्धान्तरूपमस्याधिकरणस्य ।

'प्रदानवत्–हविः प्रदानवत् इति पूर्वतन्त्रे संकर्षकाण्डे निर्णीतं विषयं अतिदिशन् सूत्रकारः, 'तदुक्तं' इति तत्रत्यन्यायं स्वपक्षाधारत्वेन निर्दिशति ।

संकर्षकाण्डे द्वितीयाध्याये, द्वितीयपादे, 'अवदानपाद' नामके अयं विचारः कृतो वरीवर्ति । तत्र द्वे अधिकरणे अस्मिन्विषये स्तः । तयोः प्रथमं—'तेषां पृथक्कृतानां निरवदानं यथान्येषां हविः पृथक्त्वात्' (संकर्षकाण्डे 2-2-33)

'वचनात्सर्वेषां सहावदीयेत न हि वचनं किञ्चिद् बुभूषति' (संकर्षकाण्डे 2-2-34) इति सूत्रद्वयात्मकम् । आद्यं पूर्वपक्षसूत्रम् । समनन्तरं सिद्धान्तसूत्रम् ।

'त्रिधातु' नामकेष्टौ हविषामवदानविषये अत्र विचारः । 'प्रत्येकं अवदानं कर्तव्यं' इति पूर्वपक्षः। 'सहैवावदानं' इति सिद्धान्तः। इत्थं–हविरवदानविषयोऽत्र निर्णीतः ।

द्वितीयं तस्यामेवेष्टौ हविः प्रदानविषयकं विचारं वर्तयति। सूत्रत्रयात्मकमिदमधिकरणम् ।

'तेषां सहप्रदानमवदानैकत्वात्' (सं. का. 2-2-35)

'नाना वा देवतापृथक्त्वात्' (सं.का. 2-2-36)

'अन्यार्थदर्शनाच्च' (सं.का. 2-2-37)

आद्यं पूर्वपक्षसूत्रम् । समनन्तरं सिद्धान्तसूत्रम् । तृतीयं गुण सूत्रम् ।

पूर्वोक्तायामेव त्रिधात्विष्टौ हविषां प्रदानविषयः अस्मिन्नधिकरणे विचार्य निर्णीयते । तिसृभ्यो देवताभ्यः कर्तव्यं हविः प्रदानं

सकृदेव कार्यं, न पृथक् पृथक् इति पूर्वपक्षः पृथक् पृथगेव कार्यं—अतो-नानात्वमेव हविः प्रदानस्य नैकत्वं—इति सिद्धान्तः अयमेव न्यायः तदुक्तं इति भगवंता बादरायणेन निर्दिष्टः। संकर्षकाण्डः देवस्वामि-विरचित भाष्यसहितः मद्रनगरविश्वविद्यालयेन 1965 तमे संवत्सरे मुद्राप्य प्रकाश्यं नीतः। तत्र 86-87 पुटयोरयं विषयः वर्तते।

इयं त्रिधातुनामिका इष्टिः कृष्णयजुर्वेद तैत्तिरीय संहितायां द्वितीयकाण्डे तृतीय प्रश्ने षष्ठेऽनुवाके विहिता। 'यं कामयेतान्नाद-स्स्यादिति तस्मा एतं त्रिधातुं निर्वपेदिन्द्राय राज्ञे पुरोडाशमेकादशक पालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञे........' इति तस्या विधायकं वाक्यम् (तै.सं. 2-3-6) अस्याः तिस्रो देवताः—(1) इन्द्रोराजा (2) इन्द्रोऽधिराजः (3) इन्द्रस्स्वराट्—इति।

अत्र विशेष्यभूतस्य इन्द्रस्य एकत्वेऽपि—राजा अधिराजः स्वराट् इति विशेषणानां भिन्नत्वात् देवतानां परस्परं भेद एव अत एव च परस्परं भिन्ना इमास्तिस्र इष्टयः। आसामेत्र प्रदानाधिकरणे ब्रह्म-सूत्रकारेण निर्देशः कृतोऽस्ति।

त्रैधातवीयेष्टिरिति अन्या काचित् काम्येष्टिः, कृष्णयजुर्वेद तैत्तिरीयसंहितायां द्वितीयकाण्डे चतुर्थे प्रश्ने एकादशेऽनवाके विहिता। तस्यां देवतापृथक्त्वं नास्ति। इन्द्राविष्णू तस्याः देवता! इन्द्रे विष्णौ च व्यासज्यवृत्ति देवतात्वमेकमेव। अतः हविः प्रदानं सकृदे वास्यामिष्टौ, न नाना।

ब्रह्मसूत्रभाष्य तद्व्याख्या ग्रन्थेषु प्राचीनेषु विस्पष्टतया प्रदा-नाधिकरणं त्रिधात्विष्टेरेवोदाहरणत्वं प्रतिपादितमस्ति अर्वाचीन-व्याख्याग्रन्थेषु तु महान् प्रमादोऽत्र प्रसरं लब्धवान्। 'त्रैधातवीयेष्टि' अस्मिन्नधिकरणे ते उदाहृतवन्तः क्रमशस्तान् निर्दिशामः।

1. ब्रह्मसूत्रशाङ्करभाष्यं—व्याख्यानपरम्परया सह मुम्बईनगरे निर्णयसागरमुद्रणालये प्रकाशितं 1938-A D. वत्सरे जगद्विख्यात-कीर्तयः ब्रह्मश्री. अनन्तकृष्णशास्त्रिमहोदयाः अस्य मुद्रणस्य संपादकाः।

मीमांसकमूर्धन्य श्रीमदप्पय्यदीक्षितेन्द्रविरचितं कल्पतरुव्यानात्मकं परिमलमप्यत्र संयोजितमस्ति। तत्र प्रकृतसूत्रव्याख्यानावसरे, 'अस्याः त्रिपुरोडाशायाः त्रैधातवीयाख्याया इष्टेः' इति मुद्रितमस्ति ।

2. पूर्वमीमांसाकोशः इति ग्रन्थः श्रीयुतकेवलानन्दसरस्वती स्वामिभिः संकलितः 'प्राज्ञपाठशालमण्डलग्रंथमाला' प्रकाशितः । तत्र चतुर्थभागे 1977 तमे पुटे–

'त्रैधातवीयायां पुरोडाशभेदेऽपि सकृदेवावदानम्' इति मुद्रितं विराजते ।

3. 'नयमयूखमालिका' इति ग्रंथः विशिष्टाद्वैतमताणेनुसारी श्रीदीक्षितेन्द्रैरेव विरचितः । 1915-तमे क्रिस्ताब्दे कंभघोणे अयं मुद्रापितः । तत्र 200-तमेपुटे–

'त्रैधातवीयेष्टिः–सा इन्द्रायराज्ञे इति वचनविहितत्रिपुरोडाशा' इति मुद्रितमस्ति ।

4. दशानामप्युपनिषदां विशिष्टाद्वैतमतानुसारिभाष्यं श्रीमद्रङ्ग रामानुजमुनि प्रणीतं विराजते । एतैरेव भावप्रकाशिका नाम्नी श्रुत-प्रकाशिकाव्याख्या—'शारीरकशास्त्रार्थदीपिका' नामा स्वतन्त्र ग्रन्थश्च व्यलिख्येताम् ।

तत्र भावप्रकाशिकायां प्रकृतसूत्र व्याख्यानावसरे—

'नानावा देवतापृथक्त्वादि'ति। तत् नानाप्रदानाधिकरणमित्थम्-अस्ति त्रैधातवीयेष्टिः इन्द्रायराज्ञे इत्यादिवचनविहिता ।......परेत्वि-त्यादि । यथा इन्द्राथराज्ञे इति त्रिपुरोडाशायां त्रैधातवीयेष्टौ' इति मुद्रितमस्ति ।

तथा शारीरकशास्त्रार्थदीपिकायामपि 268 तमेपुटे, प्रदानवदेव तदुक्तम् । त्रैधातवीयेष्टिः इन्द्रायराज्ञे......इति त्रिपुरोडाशा इति मुद्रितमस्ति । सुगृहीतनामधेयानां उत्तमूर. वीरराघवाचार्याणां संपादने भावप्रकाशिकामुद्रणे एवमस्ति ।

5. केवलमेतावदेव तैरेव विद्वद्वरेण्यैः 'भाष्यार्थदर्पणानाम्न्या व्याख्यया सह मुद्रापितं श्रीभाष्यं 1964 **A.D.** वत्सरे। तत्र 733 तमेपुटे

'धर्मानुसंधानावृत्तौ दृष्टान्तं सूचितं विवृणोति यथेति । अस्ति त्रैधातवीयेष्टिः ।......' इति मुद्रितमस्ति । पुनरपि 734-तमेपुटे 'अभाप्यत्र त्रैधातवीयेष्टौ' इति मुद्रितमस्ति । एवं अतिप्रौढानां विद्वद्वरेण्यानां प्रकृतकाम्येष्टिविषये नाम व्यत्यासः केन कारणेन समजायत? उभयोर पीष्टयोः त्रिपुरोडाशत्वं – अन्यानि च कानिचित् । एतद्विस्तरः अस्मदीये लेखे एतद्व्यासोपक्रमनिर्दिष्टेसु निपुणं निरूपितो वर्तते । प्राशाणिकैः वस्तुतत्त्वसंरक्षणतत्परैः विद्वद्भिः पूर्वोपदर्शितेषु ग्रन्थेषु विद्यमानः अनुपपन्नः पाठः शोधयितव्य एव । अयं प्रमादः इतोऽप्युत्तरकाले मानुवर्ततामिति अस्मदीया प्रार्थना । इति विदुषामनुचरः

11-6-1990 नावल्पाकं श्री. देवनाथताताचार्यः

## 101. लिङ्गभूयस्त्वाधिकरणे

नारायणानुवाके यद्यद्विद्याप्रत्यभिज्ञापकशब्दास्सन्ति तस्य तत्तद्विद्याशेषत्वमेव युक्तं ननु सर्वविद्याशेषत्वमपि तत्प्रत्यभिज्ञापकशब्दाभावात् इति पूर्वपक्षोऽत्र यद्यपि संजायेत । अथापि—बह्वीषु विद्यासु तत्तत्प्रत्यभिज्ञापयशब्दवलेन जगत्कारणस्य नारायणस्य ध्येयत्वसिद्धौ प्रत्यभिज्ञापकशब्दाभावस्थलेपि कारणत्वमोक्षप्रदत्वादिसाम्यात् तस्यैव ध्येयत्वमर्थात्सिध्यति । नहि कारणत्वादि नारायणादिव्यतिरिक्तनिष्ठं। बहुनिष्ठं च न भवति । अन्तस्तद्धर्मोपदेशात् इति बहुनिष्ठत्वस्य निषिद्धत्वात् । तत्र हि कल्पभेदेन अतिशयितशक्तीनां वहूनां कारणत्वमाक्षिप्य परिहृतम् । एतद्विस्तरस्तु अस्मदीय श्रीभाष्यव्याख्यायां चन्द्रिकायां द्रष्टव्यः ।

## 103. शरीरेभावाधिकरणे

व्यतिरेकस्तद्भावमावित्वात् । अपहतपाप्मत्वादिगुणविशिष्ट एव जीवः उपास्यः कुतः तद्भावभावित्वात् हेतुः । अत्र भाष्यं—तद्भावभावित्वात् तद्रूपापत्तेः इति भाष्यम् । अपहतपाप्मत्वादिरूपस्य मोक्षदशायां आपत्तिः--प्राप्तिः अपहतपाप्मत्वादीनां उपासभावे एव भाविनी । अतः तत्प्राप्ते उपासनभाव भावित्वमिति । एवं च अपहतपाप्मत्वादीनां उपास्यत्वे एव मोक्षदशायां प्राप्तिः स्यात् । आवश्यकी

च एतेषां मोक्षदशायां इति एतद्गुणविशिष्ट एवोपास्यः इति भावः। विहितगुणविशिष्टोपासनेपि सर्वगुणविशिष्टब्रह्मप्राप्तिरूपमोक्षः सिद्धांत सिद्धः। अतः अपहतपाप्मत्वादिकमनन्तर्भाव्योपासनेपि तत्प्राप्तिः वक्तव्या, तथैव भवति इत्यादौ एवकारस्यान्ययोगव्यवच्छेदार्थकत्वं पराकृतम्। 'एवं च तद्भावभावित्वात् इति हेतुः कथं घटताम्। इत्थम्—उपासितगुणादेर्या प्राप्तावन्यबहिष्क्रिया सा तत्क्रतुनयग्राह्या-नाकारान्तरवर्जनमिति प्रमाणबलेन एवकारस्यायोगव्यवच्छेदार्थकत्वं स्वीकारणीयम्। तथा च कर्तृत्वभोक्तृत्वादिविशिष्टोपासने मोक्षेपि तत्प्राप्तिरनिवार्या। एवं च मोक्षस्यापि संसारतापत्तिः इत्यत्र तात्पर्यात्। ततश्च तद्भावभावित्वात् कर्तृत्वभोक्तृत्वादीनां उपासनभावे मोक्षदशायामपि भावित्वमिति सूत्रतात्पर्यम्। एवं चायोगव्यवच्छेद-रूपार्थोपि तद्भावभावित्वादिति खण्डेनैव सूचितः इति बोध्यम्।

ननु तु इत्यनेनैव सूत्रस्य सिद्धान्तपरत्वं सिद्धम्। यद्वा न इत्यनेनैव वा सिद्धान्तपरत्वम्। एवं च न तु इत्युभयोपादानं किमर्थमिति चेत् पूर्वपक्षव्युदासं कृत्वा 'एवमेव वाच्यं नत्वेवं' इति व्यवहार। प्रायशः शास्त्रेषु दृश्यते। तत्र स्वारस्यातिशयं मत्वा न तु इति व्यवहारं रचयन्ति। अत्रापि अपहतपाप्मत्वादीनामुपास्यत्वे एवस्वारस्यम्। मोक्षस्य निरतिशयसुखरूपत्वात् तद्भाविस्वरूपानुसन्धाने हि स्वारस्यम्। भाविनः अर्चिरादिमार्गस्य यथा अनुसन्धाने स्वारस्यं रसवत्ता च। कामिन्यपिहि लोके स्वभर्तृगृहगमन तद्भाविसुखादीनां रसवत्तांचानुसन्धत्ते। यद्वा नतूपलब्धिवत्-यथोपलब्धि जीवः उपास्य इति पूर्वपक्षः। कर्तृत्वभोक्तृत्व इहामुत्रसंचारक्षमत्वादिविशिष्ट एवोपलभ्यते जीवः। अतः तथैवोपास्यः इति पूर्वपक्षः। तत्खण्डानार्थं प्रवृत्तः अयं खण्डः न तूपलब्धिवत् इति। यथोपलब्धि नोपास्य इति तात्पर्यम्। अस्मिन् पक्षे 'ब्रह्मोपलब्धिवत्' इति न दृष्टान्तप्रदर्शनमिति ध्येयम्।

## 107. विकल्पाधिकरणे

विकल्पोऽविशिष्टफलत्वात्। कथमविलक्षणफलत्वं विद्यानां? इन्द्रप्राणमधुविद्यादिषु विलक्षणफलदर्शनात्। न हि मधुविद्यानिष्ठस्य

वसुपदप्राप्तिः कर्मफलम् । विद्याफलमेव हि तत् । ब्रह्मप्राप्तिरूप-फलमात्रे तु अवैलक्षण्यमुपपादयितुं शक्यते तावन्मात्रस्य फलत्वाभावात् तथासति सद्विद्यानिष्ठस्यापि वस्वादि फलप्राप्त्यापत्तेः । ननु मधु-विद्यादिव्यतिरिक्त ब्रह्ममात्रफलकविद्यानामेव विकल्पोऽत्रोच्यते, न तु सर्वासाम् । न च तावता मधुविद्यायाः सद्विद्यायाश्च समुच्चया-पादनं शक्यशङ्कम् । मधुविद्यानुष्ठानानन्तरं तयैव ब्रह्मप्राप्तिसंभवेन पुनः सद्विद्यानुष्ठानस्यानावश्यकत्वात् । अतो न दोषः इति चेन्न-सद्विद्यानुष्ठानानन्तरं मधुविद्यानुष्ठानापत्तेरवारणात् । अवान्तरफलस्य अधिकस्य सत्वात् । मधुविद्यानुष्ठानानन्तरमपि इन्द्रप्राणविद्यानुष्ठाना पत्तेश्च । उत्तरयोरपि विलक्षणावान्तरफलकत्वात् । न चोपासनस्य ब्रह्मप्राप्तिफलकस्य आप्रयाणादनुवर्तनीयत्वेन कथमुभयानुष्ठानं घटते इति वाच्यम् । अनयैव युक्त्या वारणसंभवे अविशिष्टफलस्य शङ्का-वारणहेतुत्वोक्तेः अप्रयोजकत्वप्रसङ्गात् ।

ननु प्रपत्तिविद्यायाः अत्यन्तं संग्राह्यतया कथमविशिष्ट फलत्वं । प्रपत्तेः अनभ्युपगतप्रारब्धखण्डनाशक्त्वस्य भक्तेस्तदभावस्य च अभ्युपगमेन फलवैषम्यय् । न चात्र व्यस्थितकल्पेन परिहारः क्रियते मधुविद्यादिष्वप्येवमेव । अतस्सर्वदोष परिहारः 'मुमुक्षुत्वं...विकल्प्येत' आचार्यपाद श्रीसूक्तिरप्युपपद्यत इति वाच्यम् । तावतापि अविशिष्ट-फलत्वोपपादनस्यासंभवात् । व्यवस्थितविकल्पे अविलक्षणफलकत्वं कथम् ?

अपि च वह्निं प्रति तृणारणिमणिष्वन्यतमस्य कारणत्वे अन्य-तमाभावेपि कार्योत्पत्त्या व्यभिचारपरिहारायाव्यावहितोत्तरत्वनिवेश इवात्रापि सद्विद्याव्यवहितोत्तरजायमानमोक्षं प्रति सद्विद्याकारणम्। दहर विद्याव्यवहितोत्तरजायमानमोक्षं प्रतिदहरविद्याकरणं इति स्वीक्रियते । अतः परस्परव्यभिचारपरिहारः। एवञ्चाविलक्षणफलत्वाभावेन विकल्पो पपादनमेव न संभवति । अतोऽस्य सूत्रस्य सर्वथाऽनुपपन्नतैवेति चेत्—

विद्यायाः आप्रयाणादनुवर्तनीयत्वसिद्धेः एकेन विद्याद्वयानुष्ठानं न संभवति । तावतैव पूर्वपक्षशङ्कावारणसंभवेपि अविद्यानिवृत्तिपूर्वक ब्रह्मप्राप्तिफलस्य सर्वविद्यास्वपि वैषम्यं नास्तीति सूचनार्थं सूत्रप्रवृत्तिः।

विकल्पोऽविशिष्टफलत्वात् । अत्र विशिष्टफत्वादित्यपि पदच्छेदः कर्तुं शक्यते । सर्वासां ब्रह्मविद्यानां अविद्यानिवृत्तिपूर्वकत्वविशिष्टब्रह्मप्राप्तेः फलत्वाद्विकल्पः इत्यर्थः । यद्वा 'शिष्टं स्पष्टं' इत्यादा विवशिष्टपदस्य शेषवत्परतया विगतं शिष्टफलं याभ्यः इति व्युत्पत्त्या एकविद्यापेक्षया अन्यविद्यायाः शिष्टफलकत्वभावासिद्धेः सर्वविद्यानामपि कृत्स्नफलजनकत्वं सिध्यतीति विकल्पसिद्धिरिति ।

## 115. सर्वान्नानुमत्यधिकरणे

अत्र चशब्दोऽवधारणे इति श्रीभाष्यं, पूर्वपक्षव्यावर्तकत्वमावश्यकं इत्येतावन्मात्रमवलम्ब्य च शब्दस्य अवधारणार्थकत्वं स्वीकृतं इति न । अवधारणार्थकत्वे स्वारस्यं चावलम्ब्य । त्रिष्वप्ययमन्वेति सर्वान्नानुमतिरेव न तु तद्विधिः । प्राणात्यये एव न तु सर्वदा तद्दर्शनादेव, न तु विशेषानुपादानात् इति । नन्वत्र सिद्धान्ते—उषस्तिः साक्षात्कारावस्योपासनवान् न वा ? पूर्वत्र न वा अजीविष्य इति हेतु र्न भवति । मरणेपि मोक्षोपपत्तेः आप्रयाणात् इति हि सूत्रं, अन्त्ये नास्यानुष्ठानं प्रमाणमिति चेत्–उच्यते । अयं हि भागवतोत्तमः ब्रह्मविच्छ्रेष्ठः मोक्षोपायब्रह्मविद्यायां गाढमवतीर्णश्च । स्वस्य मुमुक्षुत्वात् स्वोपासनस्य साक्षात्कारावस्थत्वं अवश्यं सम्पादनीयमेव । अतस्तन्निष्पत्त्यर्थं स्वमरणमनाकांक्षमाणः न वा अजीविष्यमित्याद्युवाच । अतः साक्षात्कारावस्थोपासनाभावेपि ब्रह्मवित्वप्रयुक्तगौरवातिशयवत्वात् अस्यानुष्ठानं अतिप्रमाणमेव । श्रोतव्यः मन्तव्यः निदिध्यासितव्य इति एतावत्पर्यन्तमागतस्यास्य ऋषिप्रायस्योषस्तेः अनुष्ठानं कथमप्रमाणं भवेत् । यद्वा पूर्वकल्पोपि युक्त एव । आधिकारिकपुरुषा अपि वसिष्ठानन्तर तपःप्रभृतयः पुत्रनाशजन्मादिविपत्तिभाजो भवन्ति । कुतः स्वायुषः अपरिसमाप्तत्वात् । चरमशरीरावसाने एव अन्तिमस्मृति निष्पत्त्या उपायपूर्तिः ततो मोक्षः इति ज्ञानवन्तस्ते स्वमरणं ते मध्ये

नाकांक्षन्ति । एवमेवायं साक्षात्कारावस्थोपासनवानपि अन्तिमस्मृति-मपेक्षमाणः न वा अजीविष्यं इत्याद्युवाच इति मन्तव्यम् ।

### 124. आवृत्त्यधिकरणे

आवृत्तिरसकृदुपदेशात् । यद्यपि 'मामुपास्व' इत्यादि पूर्वाधि-करणेष्वेव उपासनस्योपायत्वोक्तेः ध्यानरूपत्वोक्तेश्च 'ध्यै चिन्तायां' इति चिन्तनरूपत्वात् चिन्तायाश्च स्मृतिसन्ततिरूपत्वमित्यावृत्तिः सिद्धैव । तथापि विद्युपास्त्योः व्यतिकरेणोपदेशस्तत्र नास्ति पर्यायत्वा सिद्धिश्च । अपि च सर्वत्र ज्ञानस्यैव मोक्षहेतुत्वं उपासनस्य भेदवासना निरासहेतुत्वमेवेति साक्षान्मोक्षसाधनत्वं 'ब्रह्मविदाप्नोति परं' इति श्रुतस्यवेदन स्यैवेति पूर्वपक्ष्यभिप्रायः ।

### 125. आत्मत्वोपासनविचारः

तत्तद्विद्योदितगुणविशिष्टस्य सत्यत्वज्ञानत्वादि स्वरूपनिरूपक-धर्मविशिष्टस्य जगत्कारणस्य ब्रह्मणः उपासनं मोक्षजनकमिति वेदान्त सिद्धान्तः । अत्रचोपासने उपासकस्य जीवस्य शरीरभूतं ब्रह्मेति शरी रात्मभावसंबन्धमप्यवगाह्य उपासनं कार्यम् । इदश्च आत्मेतितूप-गच्छन्ति ग्राहयन्ति च इति सूत्रसिद्धम् । सर्वशरीरकस्य ब्रह्मणः उपा-सनवेलायां ब्रह्म स्वात्मा इत्यनुसन्धानं कार्यम् । 'आत्मेत्येवोपासीत' इति श्रुतिवाक्यपर्यालोचनायां ब्रह्मणः स्वस्य च शरीरात्मभावसंबन्ध सत्त्वात् स्वस्यात्मत्वं ब्रह्मणोऽस्तीति तथानुसंधानं युक्तं भवति । न चात्मत्वेनोपासने विधीयमाने तृतीयायाः प्रकारत्वार्थकत्वात् आत्मत्व-प्रकारकब्रह्मविशेष्यकोपासनं इति फलति । इदं च रजतत्वप्रकारक शुक्तिविशेष्यक ज्ञानमिवभ्रमरूपमेव भवेत् । ब्रह्मणः जीवत्वरूपस्वात्म-त्वाभावात् इति वाच्यम् । अत्रात्मत्वस्य शरीरात्मभावरूपत्वेनादो-षात् । स्वनिरूपितात्मत्वप्रकारक ब्रह्मविशेष्यकोपासनस्य भ्रमरूपत्वा भावात् । न हि जीवब्रह्मणोः अभेदमवगाह्य इदमुपासनं प्रवृत्तम् । येन भ्रमरूपता आपद्येत । तदुपासनप्रकारश्च सत्यत्वादिविशिष्टं तत्तद्गुण विशिष्टं अहं ब्रह्मेति । अत्राहमर्थः उपासकजीवस्यात्मेत्यर्थः । प्रकार-वाचिनां शब्दानां प्रकारिपर्यन्तत्वस्य चराचरव्यपाश्रयस्तु...इति सूत्र-

सिद्धत्वात् । जीवस्य ब्रह्मशरीरत्वेन ब्रह्मप्रकारत्वात् इदं जीवप्रकारक ब्रह्मविशेष्यकोपासनमिति फलितम् । पञ्चाग्निविद्यायां तु ब्रह्मशरीर-भूतोऽहं इत्युपासनरूपत्वात् । ब्रह्मविशेष्यक जीवप्रकारकत्वं विज्ञाय जीवविशेष्यक ब्रह्मप्रकारकत्वावगाहनेनोपासनं कार्यम् । उभयत्र अहं ब्रह्मेत्येवोपासनप्रकारः । विशेषणविशेष्यभावे परं व्यत्यासः । अह-मर्थोपासकशरीरिभूतं ब्रह्मेत्यर्थः । पञ्चाग्निविद्यायां तु ब्रह्मशरीरभूतो अहं इत्यर्थः । सर्वविद्यासु अनुसन्धीयमानत्वेनोक्तस्यात्मत्व विषयक-त्वस्य पञ्चाग्निविद्याव्यतिरिक्तविद्यास्वेवेति ज्ञेयम् । पञ्चाग्निविद्यायां हि जीवविशेष्यकत्व ब्रह्मणप्रकारकत्वयोरवगाहनेन तद्विपर्ययानुसंधाना-संभवात् ।

ननु आत्मत्वानुसन्धानं किमर्थं ?—जीवपरयोः शरीरात्मभाव-सम्बन्धस्य वास्तविकत्वेपि तथानुसन्धाने उपासनवेलायां प्रयोजना-भावात् । नचात्मत्वानुसन्धानाभावेपि मोक्षदशायां तत्प्राप्ति नं संभव तीति वाच्यम् । अननुसन्धानेऽपि तत्प्राप्तिसंभवात् । अन्यथा मोक्षस्य अविशिष्टफलत्वं न सिध्येत् । तत्तद्गुणमात्रविशिष्टब्रह्मणः उपासने तदन्यगुणानां मोक्षदशायामप्राप्तौ कथमविशिष्टफलत्वम् ? न च यथा क्रतुन्यायविरोधः शङ्क्यः 'तं यथा यथोपासते तथैव भवति' इति एव-कारश्रवणात् ।

उपासितगुणव्यतिरिक्त गुणानां प्राप्तौ असंभवस्योक्तत्वादिति वाच्यम् । अत्रत्यैवकारस्य अन्ययोगव्यवच्छेदकत्वरूपार्थाभावात् । अन्यथा द्वात्रिंशद्विद्यासु उदिततत्तद्गुणविशिष्टब्रह्मणः उपासने तत्तद्-गुणविशिष्ट ब्रह्मानुभवरूपफलस्यैव संभवात् तदरिक्तगुणानामामनुभवा भावप्रसङ्गाच्च स्वर्गादिवत् मोक्षस्यापि भिन्नरूपत्वापत्तेः । तद्गुणा-नामननुभवेन मुक्तस्यासर्वज्ञत्वापत्तिश्च । 'सर्वं ह पश्यः पश्यति' इत्यादि विरोधश्च प्रसज्यते । अतः उपासितगुणादेर्या प्राप्तावप्य-बहिष्क्रिया । सा तत्क्रतुनयग्राह्या नाकारान्तरवर्जन'मिति न्यायेन उपासित गुणाव्यतिरिक्तगुणानामपि मोक्षदशायां तत्क्रतुन्यायेन निवारणाभावात् मोक्षोपासने आत्मत्वस्यानुपास्यत्वेऽपि फलदशायां

तदनुसंभवः इति आत्मत्वानुसन्धानं किमर्थं कार्यं? 'सर्वं ह पश्यः' इति मुक्तस्य सर्वज्ञत्वात् 'यः पृथिव्यां तिष्ठन्' 'यः आत्मनि तिष्ठन्' इत्याद्युक्तस्य स्वशरीरकब्रह्मणोऽपि अनुभवात् स्वपरगतशरीरात्मभावानुभवस्य स्वतः प्राप्तेः । उच्यते—

फलदशायां आत्मत्वानुसन्धानं भविष्यतीति हेतोः नात्र आत्मत्वानुसन्धानस्यावश्यकर्तव्यतोच्यते। येन पूर्वोक्तचोद्यस्यावकाशः स्यात्। परन्तु 'आत्मेत्येवोपासीत' इति आत्मत्वोपासनस्य विहितत्वात्तथोपासनं कार्यमित्युच्यते । अविहितस्यानुष्ठाने वा विहितस्य परित्यागे वा अयथावदनुष्ठितं भवतीति फलस्यैवाप्रसक्तेः । न हि ज्योतिष्टोमादि कर्मसु अविहितस्यान्यस्य संग्रहे विहितस्यांगादेः परित्यागे वा फलं सेत्स्यति । नापि मन्त्रोच्चरणादिष्वपि अग्नये स्वाहा इति स्थाने 'वैश्वानराय स्वाहा' 'अनलाय स्वाहा' इत्याद्युच्चार्य अग्नौ हवि प्रक्षेपे फलसिद्धिः दृष्टा । अतः शास्त्रं यथायथोपासनं कार्यं विदधाति तथा अनुष्ठाने एव कर्मपूर्तिः अन्यथा न भवतीति अवश्यस्वीकार्यत्वात् । अन्यथा तत्तद्विद्यासु उदितगुणानां सर्वेषामेव कथमुपसंहारावश्यकता । तत्रापि हि कतिपयगुणपरित्यागेन केषाञ्चिदेव अनुसन्धानेऽपि अनुपासितगुणस्य प्राक्तावबहिष्कारात् । तत्कानुन्यायविरोधोपपत्तेः । अष्ट गुणोपजुष्टस्य दहराकाशस्य यत्रोपास्यत्वं विहितं तत्रापि केषाञ्चिद्गुणानां परित्याग संभवाच्च । उपासनवेलायां तेषामनुसन्धानाभावेपि प्राप्तिदशायां अनुभवोपपत्तेः । अतो यथाविहितमनुष्ठाने एव फलसंभवात् अत्र आत्मेत्येवोपासीत इति आत्मत्वोपासनस्य विहितत्वात् 'त्वं वा अहमस्मि भगवो देवते, अहं वै त्वमसि...' इति उपासकानामनुष्ठानदर्शनाच्च अहंग्रहोपासनमवश्यं कार्यमेव । एतत्सर्वमभिप्रेत्यैव 'उपगच्छन्ति च' इति सूत्रखण्डं व्यरचयत् ।

ननु यथाविहितमनुष्ठाने एव फलमिति नियमो नोपपद्यते । कथमन्यथा एक आत्मनः शरीरे भावादित्यत्र शरीरे विद्यमानस्योपासकस्य यादृशं भोक्तृत्वादिरूपं तद्विशिष्टतया स्वस्योपास्यत्वाक्षेपः सङ्गच्छते ? तत्र परमात्मोपासन परमात्मविशेषणतया स्वस्यापि

उपासनस्य आध्यात्मयोगाधिगमेन लब्ध्वा इति श्रुत्या 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' इति सूत्रेण च सिद्धत्वात् स्वस्यानुसन्धान-दशायां शरीरे विद्यमानदशास्थभोक्तृत्व इहामुत्र संसारक्षमत्वादि विशिष्टतयैव अनुसन्धानस्यौचित्यमिति पूर्वपक्षं कृत्वा तादृग्रूपतया जीवानुसन्धाने अयोगव्यवच्छेदपरैवकारघटित तत्क्रतुन्यायेन मोक्ष-दशायामपि भोक्तृत्वाद्यापत्तिः प्रसज्यत इति सिद्धान्तितम् । अतः यथाविहितमनुष्ठानाभावेऽपि फलसिद्धिमभ्युगम्य भोक्तृत्वाद्यापत्तिः प्रसञ्जिता इति चेन्मैवं, तत्र फलसिद्धेरेवानभ्युपगमात् । तत्र भोक्तृत्वादिविशिष्टजीवविशिष्ट ब्रह्मोपासनेमोक्षो भवतीत्यभ्युपगम्य भोक्तृत्वाद्यापत्तिश्च भवतीति न प्रसञ्जितम् । मोक्षो न भवतीत्यत्रैव तात्पर्यात् । अन्यथा वशनस्य व्याहतत्वापत्तेः । न हि सर्वकर्म निवृत्ति रूपस्य मोक्षस्य कर्मजन्यफलभोक्तृत्वरूपत्वमुपपद्यते । अतः फलदशायां भोक्तृत्वाद्यापादनं तस्य मोक्षरूपत्वमेव न भवतीत्यत्रैव तात्पर्यम् । अतः आत्मत्वाद्यनुसन्धानाभावे विहितपरित्यागः भोक्तृत्वाद्यनुसन्धाने अविहितस्वीकारश्च । न च भोक्तृत्वाद्यनुसन्धानस्याविहितत्वादेव न कार्यं इति कुतो नोक्तमिति वाच्यम् । यथावस्थितोपासनं यथा विहितोपासनं यथावस्थितफलजनकोपासनमिति प्रकारत्रयं वर्तते । अनुसन्धानदशायां स्वस्य भोक्तृत्वादिविशिष्टतया यथावस्थितविषय-कत्वेऽपि स्वगत भोक्तृत्वाद्यनुसन्धानस्य यथाविहितत्वमपि नास्ति यथा-वस्थितफलजनकत्वमपि नास्ति इत्यत्यन्त जघन्यत्वसूचनाय भोक्तृ-त्वाद्यापत्तिवर्णनेन समाधानोक्तेः । ज्योतिष्टोमादिकर्मकर्तुः भावि-स्वर्गगत स्वस्वरूपानुसन्धानं विना देहातिरिक्तात्मास्तित्वज्ञानमात्रा-पेक्षणवत् भाविमोक्षगतस्वरूपानुसन्धानाभावेऽपि तात्कालिकदशास्थ स्वरूपानुसन्धानस्यैव पर्याप्तत्वमित्यभिप्रेत्य पूर्वपक्षोदयात् । अतः आत्मत्वानुसन्धानपरित्यागः भोक्तृत्वाद्यनुसन्धानस्वीकारश्च अनुपपन्नः।

ननु आत्मत्वोपासनस्य पञ्चाग्निविद्याव्यतिरिक्तब्रह्मविद्यास्वे-वावरोधः, न तु पञ्चाग्निविद्यायामपीति कुतः संकोचः क्रियते? स्वात्म-शरीरकं ब्रह्म, ब्रह्मशरीरभूतं स्वमित्युभयविधानुसन्धानेपि अर्थाबाधेन

उपासनोपपत्तेः । मैवं–अर्थस्याबाधेऽपि उभयप्रकारेणानुष्ठानानौचित्यात् । उपासनं हि ज्ञानरूपं, तच्चविशेषणविशेष्योभयावगाहि । जानातीत्यादि ज्ञानार्थकधातुप्रयोगस्थले धात्वर्थे ज्ञाने एव विशेषण-विशेष्ययोरन्वयः । नीलं घटं जानामीत्यादौ नैल्यनिष्ठप्रकारताकं घट-निष्ठ विशेष्यताकं ज्ञानं इति बोधात् । उपासनस्यापि ज्ञानरूपत्वेन उपासनरूपज्ञाने जीवस्य प्रकारतया ब्रह्मणश्च विशेष्यतयाऽन्वयः । तथा च जीवप्रकारक ब्रह्मविशेष्यकं उपासनमिति फलितम् । इत्थं च सर्वत्र ब्रह्मोपासनेषु ब्रह्मणो विशेष्यत्वं जीवस्य प्रकारत्वञ्चेति आत्मत्वानुसन्धानबलेन ज्ञापितम् । पञ्चाग्निविद्यायां तत्तद्गुणविशिष्ट-ब्रह्मणः प्रकारत्वं जीवस्य विशेष्यत्वं च । अतोऽस्मिन् उपासने ब्रह्मणः विशेष्यत्वं इति कथं तस्य प्रकारत्वम् । अतः ब्रह्मप्रकारक जीव-विशेष्यकोपासनभूतायां पञ्चाग्निविद्यायां नात्मत्वासुन्धानस्य प्रसक्ति-रित्यलं विस्तरेण ।

## 130. तदधिगमाधिकरणे

तदधिगमे......। अत्र स्मृत्या श्रुतिबाधः कथमिति शङ्का । प्रायश्चित्तादिना पापविनाशस्य संप्रतिपन्नत्वात् प्रायश्चित्तेतरनाश्यत्व-निषेधस्य स्वीकार्यत्वात् ब्रह्मविद्यायाः काम्यफलसाधकत्वे प्रायश्चित्तत्वं नास्तीति पूर्वपक्ष्याशयः । सिद्धान्ते प्रायश्चित्तत्वमेव, न काम्यत्वं, पापनिवृत्यर्थमेव क्रियमाणत्वात् । धीविकासस्य स्वतस्सिद्धत्वादिति ।

श्रुतिस्मृत्योः परस्परविरोधे विरुद्धार्थबोधकस्मृतेरनादरणीयत्वं पूर्वमीमांसास्मृत्यधिकरणेनिर्णीतम् । अथापि केवलश्रुतिविरुद्धत्वं अनादरणीयत्वं न प्रयोजकम् । यतः ‘औदुम्बरी सर्वा वेष्टयितव्या’ इति स्मृतिः लोभमूलत्वेन प्रवृत्ता इति । अतः लोभमूलकत्वविशिष्ट वेदविरुद्धत्वमेव अप्रामाण्ये प्रयोजकम् । अत एवात्र स्मृत्यधिकरण-प्रसक्तिः । यतः सांख्यस्मृतिः वेदविरुद्धापि न लोभमूलकत्वविशिष्टा अनया स्मृत्या वेदान्तार्थोपबृंहणं कार्यमिति सांख्यस्मृत्यवलम्बनेन पूर्व-पक्षोत्थानम् । तस्मात् नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि इति ब्रह्मवर्तीयस्मृतेः अश्लेषविनाशश्रुतिविरोधेपि लोभमूलकत्वविशिष्टश्रुति

विरुद्धत्वाभावात् प्रामाण्यमस्त्विति पूर्वपक्षिणः आशयः। अनुपासक-विषयत्व उपासकविषयत्वरूपभेदमादाय व्यक्तिभेदेन परिहारात् अवि-रोधस्थापनम् ।

### 141. अविभागाधिकरणे

अविभागोवचनात् । अत्र अवचनादित्यपि पदच्छेदः कर्तुं शक्यते । 'पुनस्तत्राव्यक्तादि सृष्ट्यवचनाच्च' इति श्रीभाष्यम् ।

### 146. अर्चिराद्यधिकरणे

अर्चिरादिना...। ननु नानाशाखाम्नातानां अर्चिरादीनां एक-मार्गत्वाश्रयणे किं बीजम्? प्रत्यभिज्ञानं न बीजं भवति। परविद्यासु ब्रह्मप्रत्यभिज्ञानेऽपि भिन्नविद्यात्वाभ्युपमात् । न च सर्वासामेकविद्या-त्वाभ्युपगमे गुणानन्त्यादुपसंहारो न शक्यः । अत्र तु मार्गान्वयिनां पदार्थानां द्वादशसंख्यान्तर्भूतत्वात् चिन्तनयोग्यतेति प्रत्यभिज्ञानं ऐक्य-साधकं भवेदिति वाच्यम् । एवमपि, अर्चिर्दिनपूर्वपक्ष...' इत्युक्तरीत्या विदुषां एकैकमप्यनपहाय गत्युक्त्यनुपपत्तेः। चतुर्मुखलोकात्ब्रह्मप्रपित्सोः पूर्वतनार्चिराद्यसंभवात् । न च चतुर्मुखलोकाद्गच्छतः अर्चिषा आति-वाहिकेन नयनाभावेऽपि एतदन्तर्गतेनान्तिमेन नयनात् अर्चिः आदिः यस्येति व्युत्पत्त्या नेतुस्तस्यापि अर्चिरादित्वमस्तीति न दोषः। मदरास् मार्ग इति व्यवहारवदत्रापि अर्चिरादिमार्ग इति व्यवहारोपपत्तेरिति वाच्यम् । तथापि उपासकानां तत्र तत्र संभवदातिवाहिकनयनस्यैव तावता सिद्धत्वात् नेत्रादिवाहिकभेद एवाश्रित इति मार्गनिकत्वेऽपि दोषाभावात् इति चेत्—यत्र यत्र देशे ये ये उपासकाः तेषां संभवन्तः आतिवाहिका एव तान् नयन्तीत्यविवादम् । परन्तु आतिवाहिकेषु क्रमक्रमि भेदः नाश्रयणीयः इत्येव सूत्रतात्पर्यमिति न दोषः ।

### 150. कार्याधिकरणे

'कार्यं बादरिः...' इति सूत्रे ब्रह्मोपासनस्य मोक्षप्रापकत्वं अस्य मते अङ्गीक्रियते न वा? न चेत्, अविद्यानिवृत्तिरेव न स्यात् । अङ्गी-कारे अविद्यानिवर्तक ब्रह्मोपासनविधानं कुत्र? अक्षरसदादि अर्चिरादि गत्युक्तेः तेषां सर्वेषामपि कार्यब्रह्मोपासनरूपत्वाभ्युपगमावश्यकत्वात् । इति चेत्—

कार्याधिकरणे इन्द्रप्राणविद्यायामिव हिरण्यगर्भशरीरकपरमात्मोपासन विषयत्वेन पूर्वपक्षिणोऽभिप्रायो वर्णनीयः इति केचित् ।

151. संपद्याविर्भावाधिकरणे

अपहतपाप्मत्वादीनां कथं स्वाभाविकत्वम् । जीवो हि अनादिपापपुण्यसंबन्धवान् । 'अनादित्वादुपपद्यते चोपलभ्यते च' इति सूत्रेण एतत्पापादीनां अनादित्वं हि सूत्रारूढम्। पापादिकं भगवन्निग्रहादिरूपं पराभिध्यानात्तु तिरोहितं इति सत्यसङ्कल्पत्वादिकंच तिरोहितमित्यपि सूत्रसिद्धम् । पापपुण्यवशाद्धि जीवानां जन्मपरंपरा तत्प्रयुक्तसुखदुःखादि च । पापसंबन्धाद्यभावस्य स्वाभाविकत्वे सर्वमिदमनुपपन्नं एवमादिचोद्यानां परिहारः अस्मदीयमतत्रयसारग्रन्थे दृष्टव्यः । उभयाविर्भावः उत विशेषणाविर्भावः इत्यादिकमपि तत्रैव द्रष्टव्यम् ।

153. ब्राह्माधिकरणे

ब्राह्मेण जैमिनिरित्यत्र अपहतपाप्मत्वादीनां ब्रह्मगुणसाम्योक्तिः कुतः ? उच्यते—ब्राह्मेण—ब्रह्मसंबन्ध्यपहतपाप्मत्वादिगुणसदृशापहतपाप्मत्वादिगुणेनाविर्भावः इत्युक्तं भवति । अन्यथाऽर्थस्यैवबाधः । न हि ब्रह्मसम्बन्धिगुणानामेतेषां जीवे सद्भावः तत्तद्गुणानां तत्तन्मात्रविश्रान्तत्वात् नह्यन्यदीयगुणानामन्यत्र संक्रमः संभवति । अतः गुणानां सादृश्यं विवक्षित्वैवार्थो वर्णनीयः। एतावत्परिश्रमं विना 'नैजेन' इत्युक्तौ न कोपि विरोधश्च । एवमनुवृत्ता सादृश्यं च विवक्षित्वा ब्राह्मेणेत्युक्तौ तात्पर्यं पर्यालोचनीयम्। दहरविद्यायां एते गुणाः ब्रह्मसंबन्धितया निर्दिष्टाः । प्रजापतिवाक्ये एते जीवसंबन्धितयोपदिष्टाः । अतः एते उभयसंबन्धिन एव । एवं तत्त्वस्थितौ सत्यां ब्रह्म संबन्धिभूतैतद्गुण सदृशैतद्गुणविशिष्टतया आविर्भावोक्तौ स्वारस्यमस्ति । स्वाभाविकानामप्येतेषां संसारदशायां कर्मणातिरोधानमिति नाविर्भावः। परमात्मनस्तु न तथा तिरोधानमनाविर्भावश्च इति वैषम्य मस्ति । कर्मबन्धनिवृत्तिपूर्वकब्रह्मप्राप्तौ सत्यां पूर्ववदुत्तरत्र विरोधानानाविर्भावादि नास्ति । यतः इतः परं मुक्तनिष्ठानामेतेषां ब्रह्मगतगुणसादृश्यमस्ति । तिरोधान अनाविभावार्हा अपि एते गुणाः इतः परं

न तथा विधा भवन्ति विरोधानानाविर्भावाभवात्। इति विशेषणज्ञप्त्यै सादृश्योक्तिरिति । एतादृशाभिप्रायेणैव तद्भावभावमापन्नः तदाऽसौ परमात्मना । भवत्यभेदी भेदश्च तस्याज्ञानाकृतो भवेत् । इति पुराण-वचनमपि प्रवृत्तम् । अत्रार्थत्रयं सभवति । ब्रह्मभावेन ब्रह्मस्वभावेन भावं सत्तामापन्नः ब्रह्मस्वभावप्रपोज्यसत्ताकः मुक्तः इत्यर्थः । यद्वा ब्रह्मणः भावः स्वभावः यस्य मुक्तस्य, स ब्रह्मः तस्य भावः तत्वमा-पन्नः मुक्तत्वमापन्नः इत्यर्थः । अथवा ब्रह्मगतभावाभिन्नभावमापन्नः इत्यर्थः ब्रह्मसंबन्धिस्वभूतापहतपाप्मत्वसदृशापहतपाप्मत्वमापन्नः इति फलति । ब्राह्मेण जैमिनिरित्यत्रायमेवार्थो विवक्षितः ।

जीवगतापहतपाप्मत्वादीनां ब्रह्मगतगुणसाम्योक्तिः इत्यादिक-मपि अस्मदीयमतत्रयसारग्रन्थे एव निरीक्ष्यम् ।

## 154. सङ्कल्पाधिकरणे

'अत एव चानन्याधिपतिः—अनेन मुक्तस्य अकर्मवश्यत्वमुच्यते । यद्यपि साम्पराय, तदधिगमाधिकरणादिषु कर्मनाशः बहुप्रकारः उक्तः इति अत्र पुनर्वचनमनपेक्षितमेव । तथापि स्वस्वरूपाविर्भावानन्तर-वक्तव्यत्वं कस्यचित्कर्मनाशस्याभिधाय 'अत एव चानन्याधिपतिः' इति सूत्रितम् । सर्वेषां स्थूलकर्मणां नाशेऽपि स्वस्वरूपाविर्भावप्रतिबन्धक सूक्ष्मभूतकिञ्चित्कर्मणः ब्रह्मसंपत्तेः पूर्वं सत्वात् । तदनन्तरं च तन्ना-शात् । अत एव 'सम्पद्याविर्भावः' 'ब्राह्मेण जैमिनिः' इत्यधिकरणा-नन्तरं एवं सूत्रितम् ।

## 155. अभावाधिकरणे

'स एकधा भवति'...अभावाधिकरणे, अशरीरं वाव सन्तं...इति श्रुतेः कर्मनिमित्तशरीराभाव परत्वेन ऐच्छिकशरीराभाव बोधकश्रुत्य-भावेन शरीराभावे श्रुतिप्रमाणमेव नास्ति । 'स एकधा भवती'त्यादेः एकानेक शरीरसद्भावमात्र बोधकत्वेन शरीरसत्त्वावगमप्रमाणत्वात् । मुक्तस्य विदेहावस्थायां श्रुत्यन्तराभावाच्च । अतः 'उभयविधं बाद-रायणः' इति कथं सङ्गच्छते ? उच्यते—अशरीरं वावसन्तं इति मुक्तस्य शरीरभावः उक्तः शरीरे प्रयोजकं कर्म इत्यनुभवसिद्धं मुक्तस्य कर्मा-भावात् तत्प्रयोज्यशरीरस्या सद्भावः अवश्यमङ्गीकरणीयः । मुक्त-

दशायां शरीरोत्पादकस्यान्यस्य चाभावात् न शरीरसद्भावः। स एकधा भवतीत्यादौ धाल्प्रत्ययः शरीरभेदमादायैव इत्यत्र त्रिलिङ्ग-मुक्तमपि नास्ति। इति वादर्यभिप्रायः। जैमिनेस्त्वयं अभिप्रायः—शरीरहेतुभूतकर्मणोऽभावेपि भगवत इवास्यापि सङ्कल्पमात्रेण शरीरोत्पत्तिसंभवात् सशरीरत्वस्य प्रकारान्तरासंभवात् स एकधा इत्यादिकं शरीरभेदमादयैवे इति। अतोऽत्र बादरायणः उभयविधं प्राह इति। सर्वमपिसुसङ्गतम्। मुक्तस्य ऐच्छिकशरीराभावः न कयापि श्रुत्या बोध्यते। परं तु स एकधाभवति त्रिधाभवति इत्यादि श्रुतिबलादेव शरीराभावेपि आक्षिप्यते इति वक्तव्यम्। त्रिधाभवति इत्यादिना शरीरत्रितयसद्भावोऽवगम्यते। शरीरत्रियविशिष्टः मुक्तः स्वात्मानं एकशरीरविशिष्टं सङ्कल्पयति चेत् एकशरीरविशिष्टोभवति। तदा शरीरद्वयपरित्यागः अवश्यको भवति एवं शरीरपरित्यागे सङ्कल्प्य एवकारणभूत इति एक शरीरपरित्यागेपि सङ्कल्पवान् चेत् तस्यापि परित्यागः सिद्ध एवेति ऐच्छिकशरीराभावोपि स्वतः सिध्यतीति बोध्यम्॥

तोषायचात्तगुरुवर्यमहाविभूतेः
शास्त्रानुसारिसरणिं प्रतिपद्य जातम्।
सारं प्रबन्धमिह बुद्धिमतामपेक्ष्यं
निन्दन्तु शास्त्रनिपुणाः यदि वा स्तुवन्तु॥ 1

विश्वस्य मुख्यगुरुरेव मयि प्रविष्टः
श्रीमान् दयाजलनिधिः व्यतनोत् प्रबन्धम्।
मैव क्षतिः मम नृणामिह दोषवाचा
नाप्यस्ति मोद इह सर्वजनैः स्तुतौ वा॥ 2

अनुबन्धः सतां सद्यः हृदयाकर्षकस्सदा।
रचितः श्रीनृसिंहस्य पदयोरर्पितो मया॥
विमत्सराः जना लोके सर्वत्र विलसन्ति हि।
तेषामेवोपकाराय ग्रन्थोऽयं बोभवीतु नः॥

शुभमस्तु।

# शोधनिका

| शुद्धं | पुटं | पंक्तिः |
|---|---|---|
| अस्मर्यमाणकर्तृक: अनन्त: | 4 | 8 |
| स्वरवर्णानुपूर्वी | 5 | 27 |
| वेदराशि: स्थित: | 5 | 27 |
| स वाग्वज्रो- | 8 | 18 |
| समाधिकरणं | 13 | 10 |
| व्यवह्रियमाणा: | 17 | 4 |
| अफाल- | 19 | 25 |
| मित्थमनु | 20 | 10 |
| ज्ञानपर: | 23 | 1 |
| निबवन्धेति | 25 | 2 |
| जैमिनिना | 25 | 18 |
| दिव्यसूरय: | 29 | 4 |
| द्वयात्मकत्वं | 30 | 1 |
| ब्रह्मशब्देन च स्व- | 40 | 9 |
| अन्य:। स एव | 42 | 9 |
| रूपाव्याप्ते प्रकृते उपपादना | 44 | 28 |
| दन्य: परमात्मा उत स | 47 | 3 |
| प्रवृत्ता इति। | 47 | 8 |
| ब्रह्माभ्युपग | 47 | 24 |
| पन्नमिति। अगत्या अपिशब्दस्य | 47 | 25 |
| शङ्कापरिहार- | 48 | 5 |
| अत्यन्तास्पष्टजीवादि | 48 | 8 |
| अस्पष्टस्पष्टरूप | 48 | 12 |
| ब्रह्मासिद्धि- | 48 | 16 |
| यस्य यादृक् | 49 | 13 |
| द्विष्टसाधन- | 49 | 22 |
| द्विष्टसाधन- | 49 | 23 |
| साधनत्वरूपो- | 49 | 26 |
| पांचरात्राप्रामा- | 53 | 1 |
| अभेदे उपसं | 54 | 23 |
| स्वर्गादिसाधनविल- | 55 | 16 |
| प्रथमे पादे इति स्थल चतुष्टये अधिकं 56-57 पुटयो: | | |
| बाह्यत्वेन जघन्यत्व | 62 | 15 |
| सर्वावस्थासु दोषवत्व- | 63 | 10 |
| श्रीमद्भाष्यं–'कुत:बचनात् तेज: परस्यां...पुनस्तत्रा व्यक्तादि सृष्टचबचनाच्च' इति | 65 | 12 |
| काष्ठा दश, षष्ठे द्विरदा: | 68 | 10-11 |
| 30-पादभेद अधिकरण- | 71 | 8 |
| तु न जानीम: | 72 | 7 |
| अद्वैतिमते द्वैतिमते- | 74 | 13 |
| अथद्वैतिमते इदम- शुद्धं | 74 | 15 |
| एवं मतत्रयेपि इत्याद्य शुद्धं | 76 | 22 |
| भ्य: इति सूत्र | 81 | 23 |
| मुद्रणाशुद्धिर्बा- | 82 | 11 |
| इत्यत्र आति | 82 | 26 |

| शुद्धं | पुटं | पंक्तिः | शुद्धं | पुटं | पंक्तिः |
|---|---|---|---|---|---|
| संपद्याविहाय | 83 | 1 | माणिकः इति न | 106 | 9 |
| विकारावर्ति- | 83 | 5 | हिंसारूपाविशुद्धिः | 107 | 25 |
| प्रायशो न व्र- | 83 | 12 | नाशादिरूपाविशुद्धि | 107 | 26 |
| विषयवाक्यस्थपदं | 85 | 3 | दर्शनात् इति | | |
| विभागः शतवत् इ- | 86 | 4 | सिद्धान्त उच्यते | 124 | 9 |
| सूत्रकृतः शैलोपरामर्शो | | | ब्रह्म च न निषेधति | | |
| सूत्रकारोऽयं लाघवैकदृष्टिः | | | परं तु | 125 | 16 |
| इति विज्ञायते अयमंशः | | | विद्यानानात्व- | 131 | 25 |
| अस्मदीयानुबन्धे दृष्टव्यः | 86 | 17 | गोथोपसा- | 132 | 19 |
| विचारश्चानुबन्धे | | | इति सर्वयोषिदप- | 133 | 14 |
| एव द्रष्टव्यः | 86 | 18 | अव्यक्तलिङ्गकाचारः | 134 | 21 |
| क्वचिदेव तु प्रथमसूत्रे | | | वाय्वधिकरणं | 138 | 26 |
| सिद्धान्तः पश्चात् | 87 | 4 | ताभ्यो बुद्धिः सर- | 147 | 15 |
| मालायां विशेष | | | करणैः कारणं | 155 | 19 |
| विषयो द्रष्टव्यः। | 90 | 26 | पश्यत्येव प्रभु- | 157 | 26 |
| खण्डनमत्र क्रियते इति | | | कर्मनिबन्धकं | 170 | 4 |
| पूर्वमेव सविस्तरमुक्तम् | 90 | 27 | निमित्तोपादनत्व | 174 | 25 |
| शारीरकशास्त्र- | 93 | 27 | कायवपुस्तनु | 175 | 24 |
| मनसो नार्चि- | 98 | 3 | जगद्गता | | |
| परमात्माविषय- | 98 | 9 | पुरुषार्थाश्रयत्वा | 176 | 21 |
| फलस्योपसनाऽविष- | 101 | 5 | पाषाणादीनां श्रुतं | 178 | 11 |
| कोटावन्तर्भावेऽपि | 101 | 13 | ब्रह्मणो जिज्ञास्यत्वं | 178 | 19 |
| कारणावस्थादित्यशरी | 101 | 17 | शंभुसुत्रामादि | 180 | 22 |
| सनस्याङ्गीकारवत् | 102 | 8 | परविद्यावेद्य | 180 | 24 |
| संभवः। अतो | 102 | 11 | च स्वनियाम्य- | 181 | 4 |
| मानाभावः इति | 102 | 11 | वादावलिश्च | 181 | 19 |
| वस्वादि सर्वं | 105 | 22 | वर्तिनः | 181 | 26 |

| शुद्ध | पुटं | पंक्तिः |
|---|---|---|
| स्वामित्वप्र | 181 | 27 |
| तद्वृत्तानां च | 183 | 4 |
| सिद्धप्रायः | 184 | 12 |
| सर्वकैङ्कर्यकारी, इत्युक्त्या | 185 | 1 |
| रूपत्वासंभवात् । अतः | 185 | 18 |
| ब्रह्म इत्यादि- सारावल्यां च | 186 | 2 |
| अविद्यानतिरिक्त | 187 | 1 |
| भोगोत्पादनार्थं | 189 | 5 |
| मात्रे परं तु | 189 | 7 |
| कथं घटं प्रति | 190 | 2 |
| पादात् समवायि- कारणं च | 190 | 13 |
| ज्योत्स्ना ; न ज्ञान | 193 | 10 |
| विद्यायामधि | 193 | 27 |
| प्रवर्तक | 194 | 5 |
| परिणामिकार | 196 | 3 |
| ब्रह्म विवर्तोपादानं। | 196 | 4 |
| नमः श्रीरंग | 199 | 22 |
| अविद्यया कथं | 200 | 10 |
| प्रकाशस्वरू | 200 | 19 |
| आकारान्तरेण वैलक्षण्यं | 201 | 11 |
| विशेषसत्वात् | 201 | 13 |
| मुख्यवृत्तमेव | 202 | 23 |
| अपि च | 202 | 25 |
| अहि अशनि | 203 | 17 |
| विशिष्टाद्वैत | 203 | 23 |
| व्यतिरिक्तं नास्त्येवेति | 294 | 2 |
| ब्रह्मज्ञानासंभव | 204 | 11 |
| ब्रह्माज्ञानस्य | 204 | 16 |
| तिरोधान | 294 | 24 |
| नावैलक्षण्येपि आका- रान्तरेण वैलक्षण्य | 205 | 12 |
| पृथिवीत्वादिना | 205 | 13 |
| अन्याकारेण वैलक्षण्य | 205 | 14 |
| ज्ञानं प्रति | 206 | 9 |
| संभव इति | 208 | 20 |
| ज्ञानां त्रयाणामपि | 210 | 14 |
| शिवत्वसिद्धिः | 211 | 1 |
| कस्यचित् भवान्तरे | 217 | 26 |
| उपादानत्वनिमित्त- त्वयोः सामा | 219 | 12 |
| चेतनाचेतनाविशिष्ट | 222 | 14 |
| सर्वस्य ब्रह्मभिन्नत्वे | 223 | 10 |
| मृदो जातस्य | 223 | 12 |
| अन्तः | 223 | 19 |
| गृह्णातेः इति वक्तव्यम् । | 224 | 26 |
| नाभ्युपगम्यते | 225 | 17 |
| उपादानत्वापत्तेः | 226 | 7 |
| उत्पलत्व | 226 | 22 |

| शुद्धं | पुटं | पंक्ति | शुद्धं | पुटं | पंक्तिः |
|---|---|---|---|---|---|
| उक्त्या | 226 | 27 | अत्र भवतु | 247 | 20 |
| नियन्तुं शक्नोति | 226 | 28 | द्वया | 248 | 26 |
| घटवद्भूतल | | | लाक्षणिकत्वस्य | 257 | 11 |
| निरूपित | 227 | 6 | ईकाराभावः | 258 | 10 |
| कस्य च भिन्नत्वात् | 227 | 22 | ते न प्रलय | 260 | 19 |
| वारणात्। कथं रूपादिषु | | | धर्मस्यैव। कर्म हि | 261 | 16 |
| अन्तःप्रवेशपूर्वकं नियमनं | | | प्रश्नाः अत्र संभवन्ति। | | |
| इति चेत्? | 229 | 9 | अत्रोत्तरम्– | 262 | 9 |
| वेदोक्तार्थस्पृहालुभिः | 229 | 10 | धर्मानन्दः | 2०5 | 2 |
| शरीरित्वमात्र | 231 | 19 | अनन्तपदं | 265 | 7 |
| शरारत्वमत्र | 231 | 23 | पंक्तिरियं अधिका- | 265 | 22 |
| हृदयङ्गमा | 231 | 26 | चेत्? ब्रह्मवित्कर्मस्वरूपविषये | | |
| त्वप्रसङ्गात् | 234 | 18 | एवायं नियमः | | |
| णत्वस्यानाव | 234 | 20 | इत्यदोषात् | 266 | 27 |
| कत्रापि जातिः | 235 | 7 | उपासलभावे | 272 | 26 |
| यद्वा घटे | 235 | 24 | व्यवस्थितविकल्पेन | 274 | 16 |
| ऽपि यथा घटादिषु | 236 | 20 | शिष्टफलकत्वा | | |
| धेयं' इति श्रीभाष्ये | 237 | 1 | भावसिद्धेः | 275 | 8 |
| भूत ब्रह्म परा | 238 | 24 | विरोधानुपपत्तेः | 278 | 17 |
| पादनासंभवात् | 242 | 18 | अनादरणीयत्वे | 280 | 23 |
| उभयी स्मृति | 245 | 3 | स ब्रह्मभावः | 283 | 6 |
| वेन अभावात् न | 246 | 3 | शरीराभावोऽपि | 284 | 9 |
| धिकमुक्तं। कुतः? | 246 | 13 | चा[illegible] | 284 | 17 |
| नुप्रवेशे न | 247 | 11 | | | |

## Other books by
## Sri P. M. Chakravathyachariar Swamy

### Tamil

| | |
|---|---|
| Srimad Ramayanasudha-Balakanda | No Stock |
| Srimad Ramayanasudha-Ayodhya & Aranyakanda | Rs. 10 |
| Srimad Ramayanasudha-Kishkindha, Sundara & Yudhdhakandas | Rs. 10 |
| Thulakaveri Mahatmyam | No Stock |
| Ahobilakshetra Mahatmyam | ,, |
| Tatva Prabhashanam | Rs. 4 |
| Mummata Saram (Tamil and English) | Rs. 25 |

### Sanskrit

| | |
|---|---|
| Dharmibhasyathvavada | Rs. 4 |
| Dharmibhasyathva Samarathnam | Rs. 10 |
| Sri Bashya Chandrika | To be Printed |

Copies can be had from :

P. M. CHAKRAVARTHY
3/103, VALLALAR STREET, NARASIMHANAGAR,
THIRUVETTIPURAM, T. S. Dt. 604407

Damodara Art Printers, Villivakkam Madras-600 049